कामिनीमिव चतुरां रेवां नाम तरंगिणीम् । विन्ध्यशैलादुत्तरन्तीं ददर्शाथ दशाननः ॥ २०१ ॥
॥ त्रिभिर्विशेषकम् ॥

रोध[1]स्युवास रेवायाः ससैन्यो दशकन्धरः । सिन्धुर[2]ग्रामणीर्यूथसमावृत इवोद्धुरः ॥ २०२ ॥
सोऽथ तस्यां कृतस्नानो वसानो धौतवाससी । अर्हद्बिम्बं रत्नमयं न्यस्य पट्टे मणीमये ॥ २०३ ॥
रेवांभोभिः स्नापयित्वा तदंभोजैर्विकासिभिः । समारेभे पूजयितुं समाधिसुदृढासनः ॥ २०४ ॥
॥ युग्मम् ॥

ततश्च पूजाव्यग्रस्य दशग्रीवस्य तस्थुषः । अकस्मादब्धिवेलेव महापूरः समाययौ ॥ २०५ ॥
उन्मूलयन्मूलतोऽपि गुल्मा[3]निव महीरुहान् । तटीनामुन्नतानामप्युपरि प्रासरत्पयः ॥ २०६ ॥
आस्फोटयंस्तटाघातैस्तरी[4]स्तटनियंत्रिताः । विष्वक्कुक्षिपुटानीवाभ्रंलिहा वीचिपंक्तयः ॥ २०७ ॥
रोधोगर्तान्महतोऽपि पातालकुहरोपमान् । स पूरः पूरयामास भयं कुक्षिंभरीनिव ॥ २०८ ॥
समन्तादन्त[5]रीपाणि स्थगया[6]मास सा नदी । ज्योतिश्चक्रविमानानि चन्द्रज्योत्स्नेव पार्वणी ॥ २०९ ॥
मत्स्यानुच्छादयामास प्रोच्छलद्भिर्महोर्मिभिः । पूरो महावात इव वेगवान् द्रुमपल्लवान् ॥ २१० ॥
तत्फेनिलं सा[7]वकरं पूरवारि रयागतम् । अर्हत्पूजामपानैषीद्दशकंठस्य कुर्वतः ॥ २११ ॥
तेन पूजापहारेण शिरश्छेदाधिकेन सः । जातकोपो दशग्रीवः साक्षेपमिदमभ्यगात् ॥ २१२ ॥
अरे रे केन वारीदं दुर्वारमतिवेगतः । अर्हत्पूजान्तरायायामुच्यताकारणा[8]रिणा ॥ २१३ ॥

१ तीरे । २ गजनायकः । ३ तृणगुच्छान् । ४ नावः । ५ द्वीपानि । ६ छादयामास । ७ सपंकम् । ८ अकारणशत्रुणा ।

परस्तादस्ति किं कोऽपि मिथ्यादृष्टिर्नराधिपः ॥ किं वा विद्याधरः कश्चिदसुरो वा सुरोऽथवा ॥ २१४ ॥
अथ विद्याधरः कश्चिदाचख्यौ दशमौलये । इतः पुरस्तादस्त्युच्चैर्देव माहिष्मती पुरी ॥ २१५ ॥
तस्यां नाम्ना सहस्रांशुः सहस्रांशुरिवापरः । सहस्रशो नृपैः सेव्यः पार्थिवोऽस्ति महाभुजः ॥ २१६ ॥
सेतुबन्धेन रेवायां वारिबन्धं व्यधादसौ । जलक्रीडोत्सवकृते किमसाध्यं महौजसाम् ॥ २१७ ॥
समं राज्ञीसहस्रेण सहस्रांशुरसावितः । वशाभिर्वरदन्तीव सुखं क्रीडति वारिभिः ॥ २१८ ॥
आत्मरक्षा लक्षसंख्या द्वयोरपि हि तीरयोः । संवर्मिता उदस्त्राश्च तिष्ठन्त्यस्य हरेरिव ॥ २१९ ॥
अदृष्टपूर्वोऽवष्टंभः कोऽप्यस्याप्रतिमौजसः । शोभामात्रं यथा तेऽपि यदि वा कर्मसाक्षिणः ॥ २२० ॥
क्षुभितं जलदेवीभिर्यादोभिश्च पलायितम् । जलक्रीडाकराघातैरूर्जितैस्तस्य दोष्मतः ॥ २२१ ॥
इदमत्यंतरुद्धत्वात् स्त्रीसहस्रयुतेन च । तेन पर्यस्यमाणत्वात् काममुल्लुठितं पयः ॥ २२२ ॥
रोदसी प्लावयित्वोर्मे वेगाद्वारीदमुद्धतम् । इह ते प्लावयामास देवपूजां दशानन ॥ २२३ ॥
पश्यैतानि च तत्स्त्रीणां निर्माल्यानि दशानन । रेवातीरे तरंत्युच्चैस्तदभिज्ञानमादिमम् ॥ २२४ ॥
तदङ्गनाजनस्याङ्गरागैर्मृगमदादिजैः । इदमत्याविलं वारि कुर्वारं वीरवारण ॥ २२५ ॥
इति तन्निरमाकर्ण्य प्राप्याहुतिमिवानलः । उद्दिदीपेऽधिकं चैवमुवाच च दशाननः ॥ २२६ ॥
अरे मुमूर्षुणा तेन वारिभिःस्वांगदूषितैः । दूषिता देवपूजेयं देवदूष्यमिवाञ्जनैः ॥ २२७ ॥
तद्यात राक्षसभटास्तं पापं भटमानिनम् । बद्ध्वा समानयत भो मत्स्यमानायिकाइव ॥ २२८ ॥

१ ऊर्ध्वशस्त्राः । २ आरंभः । ३ मुच्यमानत्वात् । ४ चिन्हम् । ५ अतिपंकिलम् । ६ धीवराः

उच्चैस्तेनैवमादिष्टा अनुचरास्ते दधाविरे। लक्षशो राक्षसभटा रेवोर्मय इवोद्भटाः॥ ३१९॥
तीरस्थितैः सहस्रांशुसैनिकैः सह ते रणम्। गजा वनांतरगजैरिव चक्रुर्निशाचराः॥ ३२०॥
विद्याभिर्मोहयन्तस्ते भूयिष्ठांस्तान्नभःस्थिताः। उपद्रुद्रुवुरंभोदाः शरभान् करकैरिव॥ ३२१॥
स्वानुपद्रूयमाणांस्तु प्रेक्ष्य क्रोधधुताधरः। चलत्पताकहस्तेनाश्वासयत् प्रेयसीर्निजाः॥ ३२२॥
ऐरावणः सुरसिन्धोरिव रेवात उच्चकैः। निर्जगाम सहस्रांशुरधिज्यं च धनुर्व्यधात्॥ ३२३॥
बाणैर्विद्रावयामास रक्षोवीरान्नभःस्थितान्। सहस्रांशुर्महाबाहुस्तृणपूलानिवानिलः॥ ३२४॥
व्यावृत्तांस्तान् रणात्प्रेक्ष्य संक्रुद्धो रावणः स्वयम्। उपतस्थे सहस्रांशुमभिवर्षञ्छिलीमुखान्॥ ३२५॥
द्वावप्यमर्षणौ द्वावप्यूर्जितौ द्वावपि स्थिरौ। विविधैरायुधैर्युद्धं विदधाते चिराय तौ॥ ३२६॥
दोर्वीर्येणाविजय्यं तं ज्ञात्वा जग्राह रावणः। विद्यया मोहयित्वेभमिव माहिष्मतीपतिम्॥ ३२७॥
तं प्रशंसन्महावीर्यं जित्वापि जितमान्यथ। अनुत्सिक्तो दशग्रीवः स्कन्धावारेऽनयत्स्वयम्॥ ३२८॥
सभायां यावदासीनस्तस्थौ हृष्टो दशाननः। चारणश्रमणस्तावच्छतबाहुः समाययौ॥ ३२९॥
सिंहासनात्समुत्थाय त्यक्त्वा च मणिपादुके। अभ्युत्तस्थौ दशास्यस्तं पयोदमिव बर्हिणः॥ ३४०॥
पपात पादयोस्तस्य पंचांगस्पृष्टभूतलः। रावणो मन्यमानस्तमर्हद्गणधरोपमम्॥ ३४१॥
आसने चासयामास तं मुनिं स्वयमर्पिते। प्रणम्य च दशग्रीवः स्वयमुर्व्यामुपाविशत्॥ ३४२॥

---

१ अष्टापदमृगान्। २ बाणान्। ३ विजेतुमशक्यम्। ४ आत्मानं जितमन्येनेति यावत् मन्यत इति तथा। ५ गर्वरहितः।
६ मयूरः।

विश्वास इव मूर्तिस्थो विश्वाश्वासनबान्धवः । धर्मलाभाशिषं तस्मै सोऽदात् कल्याणमातरम् ॥ ३४३ ॥
बद्धाञ्जलिं रावणेन समागमनकारणम् । मुनिप्रष्ठः[१] परिपृष्टोऽभाषिष्टाकृष्टया गिरा ॥ ३४४ ॥
शतबाहुरहं नाम्ना माहिष्मत्यां नृपोऽभवम् । भववासादितो भीतः शार्दूलः पावकादिव ॥ ३४५ ॥
सहस्रकिरणे राज्यमारोप्य निजनन्दने । मोक्षाध्वस्यन्दनप्रायमहं व्रतमशिश्रियम् ॥ ३४६ ॥
इत्यर्थोक्ते दशग्रीवो नमद्ग्रीवोऽब्रवीदिति । किमसौ पूज्यपादानामंगजन्मा महाभुजः ॥ ३४७ ॥
ओमित्युक्ते मुनीन्द्रेण निजगाद दशाननः । दिग्जयाय क्रमेणाहमिहागच्छं नदीतटे ॥ ३४८ ॥
दत्तावासस्तटेऽमुष्मिञ्जिनार्चां विकचांबुजैः । अर्चित्वा यावदेकाग्रमानसस्तन्मयोऽभवम् ॥ ३४९ ॥
अमुना तावदुन्मुक्तैर्निजस्नानमलीमसैः । वारिभिः प्लाविता पूजा तेनाकार्षमिदं क्रुधा ॥ ३५० ॥
अज्ञानादमुनाप्येतत् कृतं मन्ये महात्मना । त्वत्सूनुरेष किं कुर्यादर्हदाशातनां क्वचित् ॥ ३५१ ॥
एवमुक्त्वा सहस्रांशुं नत्वानैषीद्दशाननः । लज्जानम्राननः सोऽपि ननाम पितरं मुनिम् ॥ ३५२ ॥
रावणस्तं बभाणैवं भ्राता मे त्वमतः परम् । तवेवायं ममाप्येष शतबाहुमुनिः पिता ॥ ३५३ ॥
गच्छ शाधि निजं राज्यं गृहाणान्यामपि क्षितिम् । अस्माकं हि त्रयाणां त्वं चतुर्थोऽस्त्यंशभाक् श्रियः॥३५४॥
एवमुक्तश्च मुक्तश्च सहस्रांशुरदोऽवदत् । न हि राज्येन मे कृत्यं वपुषा वाप्यतः परम् ॥ ३५५ ॥
पित्राश्रितं श्रयिष्यामि व्रतं संसारनाशनम् । अयं हि पंथाः साधूनां निर्वाणमुपतिष्ठते[२] ॥ ३५६ ॥
इत्युदीर्य दशास्याय समर्प्य तनयं निजम् । व्रतं चरमदेहः स पितृपादान्तिकेऽग्रहीत् ॥ ३५७ ॥

१ मुनीनां प्रष्ठः श्रेष्ठः । २ मोक्षम् ।

अनरण्यनरेन्द्राय वाचिकेन तदैव सः । स्वयमार्त्तां परिव्रज्यां कथयामास सौहृदात् ॥ ३५८ ॥
सोऽप्ययोध्याधिपो दध्यौ प्रियमित्रेण तेन मे । संकेत एवमभवदादेयं युगपद्व्रतम् ॥ ३५९ ॥
स्वप्रतिज्ञामिति स्मृत्वा राज्यं दशरथाय सः । दत्वा स्वसूनवे सत्यधनो व्रतमुपाददे ॥ ३६० ॥
शतबाहुसहस्रांशू वन्दित्वर्षी दशाननः । सहस्रांशोः सुतं राज्ये न्यस्य चाचलदंबरे ॥ ३६१ ॥
तदा च नारदमुनिर्यष्टिघातादिजर्जरः । अन्याय इति पूत्कुर्वन्नित्यभाषिष्ट रावणम् ॥ ३६२ ॥
राजन् राजपुरेऽमुष्मिन्मरुत्तो नाम भूपतिः । मिथ्यादृगस्ति कुर्वाणः क्रतुं दुर्द्विजवासितः ॥ ३६३ ॥
यज्ञे वधाय चानीतान् सौनिकैरिव तद्द्विजैः । पशूनारटतोऽपश्यं पाशबद्धाननागसः ॥ ३६४ ॥
ततो व्योम्नोऽवतीर्याहं मरुत्तं ब्राह्मणावृतम् । अहो किमिदमारब्धमित्यपृच्छं कृपापरः ॥ ३६५ ॥
अथोवाच मरुत्तोऽपि यज्ञोऽयं ब्राह्मणोदितः । अन्तर्वेदीह होतव्याः पशवो देवतृप्तये ॥ ३६६ ॥
अयं खलु महाधर्मः कीर्तितः स्वर्गहेतवे । यक्ष्यामि पशुभिर्यज्ञं तदेभिरहमद्य भोः ॥ ३६७ ॥
ततस्तस्याहमित्याख्यं वपुर्वेदिरुदीरिता । आत्मा यष्टा तपो वह्निर्ज्ञानं सर्पिः प्रकीर्तितम् ॥ ३६८ ॥
कर्माणि समिधः क्रोधादयस्तु पशवो मताः । सत्यं यूपः सर्वप्राणिरक्षणं दक्षिणा पुनः ॥ ३६९ ॥
त्रिरत्नी तु त्रिवेदीयमिति वेदोदितः क्रतुः । कृतो योगविशेषेण मुक्तेर्भवति साधनम् ॥ ३७० ॥
क्रव्यादतुल्या ये कुर्युर्यज्ञं छागवधादिना । ते मृत्वा नरके घोरे तिष्ठेयुर्दुःखिनश्चिरम् ॥ ३७१ ॥
उत्पन्नोऽस्युत्तमे वंशे बुद्धिमानृद्धिमानसि । राजन् व्याधोचिताऽस्मान्निवर्तस्व तदेनसः ॥ ३७२ ॥

१ चाण्डालैः । २ निरपराधिनः । ३ यज्ञकर्ता । ४ ज्ञानदर्शनचारित्राणि । ५ राक्षसतुल्याः ।

यदि प्राणिवधेनापि स्वर्गो जायेत देहिनाम् । तच्छून्यो जीवलोकोऽयमल्पैरपि दिनैर्भवेत् ॥ २७३ ॥
इदं मम वचः श्रुत्वा यज्ञाग्नय इव द्विजाः । क्रुधा ज्वलन्तः प्रोत्तस्थुर्दंडपट्टकपाणयः ॥ २७४ ॥
ततस्तैस्ताड्यमानेन मया प्राप्तोऽसि नश्यता । नदीपूराभिभूतेनान्तरीपमिव रावण ॥ २७५ ॥
निरागसो वध्यमानांस्तत्तैर्नृपशुभिः पशून् । त्रायस्व त्रात एवाहं पुनस्त्वदवलोकनात् ॥ २७६ ॥
ततो विमानादुत्तीर्य दशास्यस्तद्दिदृक्षया । आनर्चे भूभुजा तेन पाद्यसिंहासनादिना ॥ २७७ ॥
क्रुद्धो मरुत्तभूपालं जगादैवं दशाननः । अरे किमेष क्रियते नरकाभिमुखैर्मखः ॥ २७८ ॥
धर्मः प्रोक्तो ह्यहिंसातः सर्वज्ञैस्त्रिजगद्धितैः । पशुहिंसात्मकाद्यज्ञात् स कथं नाम जायताम् ॥ २७९ ॥
लोकद्वयारिं तद्यज्ञं मा कार्षीश्चेत्करिष्यसि । मद्गुप्ताविह[1] ते वासः परत्र नरके पुनः ॥ २८० ॥
विससर्ज मेखं[2] सद्यो मरुत्तनृपतिस्ततः । अलंघ्या रावणाज्ञा हि विश्वस्यापि भयंकरा ॥ २८१ ॥
अमी पशुवधात्मानः कुतः संजज्ञिरेऽध्वराः । इति पृष्टो दशास्येन निजगादेति नारदः ॥ २८२ ॥
अस्ति च दिक्षु विख्याता नाम्ना शुक्तिमती पुरी । शक्तिमत्याख्यया नद्या नर्मसख्येव शोभिता ॥२८३॥
गतेष्वनेकभूपेषु सुव्रतान्मुनिसुव्रतात् । अभिचन्द्रोऽभवत्तस्यां राजा राज्यभृतां वरः ॥ २८४ ॥
अभिचन्द्रस्य तनयो वसुरित्यभिधानतः । अजायत महाबुद्धिः प्रसिद्धः सत्यवाक्तया[3] ॥ २८५ ॥
पार्श्वे क्षीरकदंबस्य गुरोः पर्वतकः सुतः । राजपुत्रो वसुश्चाहं चापठाम त्रयोऽपि हि ॥ २८६ ॥
सुप्तेष्वस्मासु सदनोपरि पाठश्रमान्निशि । चारणश्रमणौ व्योम्नि यांतावित्यूचतुर्मिथः[4] ॥ २८७ ॥

---

१ मम कारागृहे । २ यज्ञम् । ३ सत्यवादित्वेन । ४ गच्छन्तौ ।

एषामेकतमः स्वर्गं गमिष्यत्यपरौ पुनः । नरकं यास्यतस्तच्चाश्रौषीत्क्षीरकदंबकः ॥ ३८८ ॥
तच्छ्रुत्वा चिन्तयामास खिन्नः क्षीरकदंबकः । मय्यप्यध्यापके शिष्यौ यास्यतो नरकं हहा ॥ ३८९ ॥
एभ्यः को यास्यति स्वर्गं नरकं कौ च यास्यतः । जिज्ञासुरित्युपाध्यायोऽस्मांस्त्रीन् युगपदाह्वयत् ॥३९०॥
समर्प्य गुरुरस्माकमेकैकं पिष्टकुक्कुटम् । उवाचामी तत्र वध्या यत्र कोऽपि न पश्यति ॥ ३९१ ॥
वसुपर्वतकौ तत्र गत्वा शून्यप्रदेशयोः । [1]आत्मनीनां गतिमिव जघ्नतुः पिष्टकुक्कुटौ ॥ ३९२ ॥
[2]दवीयसि प्रदेशे तु गत्वाहं नगराद्बहिः । स्थित्वा च विजने देशे दिशः प्रेक्ष्येत्यतर्कयम् ॥ ३९३ ॥
गुरुपादैरदस्तावदादिष्टं वत्स यत्त्वया । वध्योऽयं कुक्कुटस्तत्र यत्र कोऽपि न पश्यति ॥ ३९४ ॥
[3]असौ पश्यत्यहं पश्याम्यमी पश्यन्ति खेचराः । लोकपालाश्च पश्यंति पश्यंति ज्ञानिनोऽपि हि ॥३९५॥
नास्त्येव स्थानमपि तद्यत्र कोपि न पश्यति । तात्पर्यं तद्गुरुगिरां न वध्यः खलु कुक्कुटः ॥ ३९६ ॥
गुरुपादा दयावन्तः सदा हिंसापराङ्मुखाः । अस्मत्प्रज्ञां परिज्ञातुमेतन्[4]निर्णीयतमादिशन् ॥ ३९७ ॥
विमृश्यैवमहत्वैव कुक्कुटं चाहमागमम् । कुक्कुटाहनने हेतुं गुरोर्व्यज्ञपयं च तम् ॥ ३९८ ॥
स्वर्गं यास्यत्ययं तावदिति निश्चित्य गौरवात् । आलिंगितोऽहं गुरुभिः साधु साध्विति जापिभिः॥३९९॥
वसुपर्वतकौ पश्चादागत्यैवं शशंसतुः । निहतौ कुक्कुटौ तत्र यत्र कोऽपि न पश्यति ॥ ४०० ॥
अपश्यतं युवामादावपश्यन् खेचरादयः । कथं हतौ कुक्कुटौ रे पापावित्यशपद्गुरुः ॥ ४०१ ॥
ततः खेदादुपाध्यायो दध्यौ विध्यातपाठधीः । मुधा मेऽध्यापनक्लेशो वसुपर्वतयोरभूत् ॥ ४०२ ॥

१ आत्मने हिताम् । २ अतिदूरे । ३ असौ कुक्कुटः । ४ निश्चितम् निश्चयेनेति यावत् ।

गुरूपदेशो हि यथापात्रं परिणमेदिह । अब्राज्ञः स्थानभेदेन मुक्तालवणतां व्रजेत् ॥ ४०३ ॥
प्रियः पर्वतकः पुत्रः पुत्रादप्यधिको वसुः । नरकं यास्यतस्तस्माद्गृहवासेन किं मम ॥ ४०४ ॥
निर्वेदादित्युपाध्यायः प्रव्रज्यामग्रहीत्तदा । तत्पदं पर्वतोऽध्यास्त व्याख्याक्षणविचक्षणः ॥ ४०५ ॥
भूत्वा गुरोः प्रसादेन सर्वशास्त्रविशारदः । पुनरेव निजं स्थानमहं तु गतवांस्तदा ॥ ४०६ ॥
नृपचन्द्रोऽभिचन्द्रोऽपि जग्राह समये व्रतम् । ततश्चाभूद्वसू राजा वासुदेवसमः श्रिया ॥ ४०७ ॥
सत्यवादीति स प्राप प्रसिद्धिं पृथिवीतले । तां प्रसिद्धिमपि त्रातुं सत्यमेव जगाद सः ॥ ४०८ ॥
अथैकदा मृगयुणा मृगाय मृगयाजुषा । चिक्षिपे विशिखो विन्ध्यनितंबे सोऽन्तरास्खलत् ॥ ४०९॥
इषुस्खलनहेतुं स ज्ञातुं तत्र ययौ ततः । आकाशस्फटिकशिलामज्ञासीत् पाणिना स्पृशन् ॥ ४१० ॥
स दध्याविति मन्येऽस्यां संक्रान्तः परतश्चरन्[२] । भूमिच्छायेव शीतांशावदर्शि हरिणो मया ॥ ४११ ॥
पाणिस्पर्शं विना नेयं सर्वथाप्युपलक्ष्यते । अवश्यं तदसौ योग्या वसोर्वसुमतीपतेः ॥ ४१२ ॥
रहो व्यज्ञपयद्राज्ञे गत्वा तां मृगयुः शिलाम् । हृष्टो जग्राह राजापि ददौ चास्मै महद्धनम् ॥ ४१३ ॥
स तया घटयामास छन्नं स्वासनवेदिकाम् । तच्छिल्पिनोऽघातयच्च नात्मीयाः कस्यचिन्नृपाः ॥ ४१४ ॥
तस्यां सिंहासनं वेदौ चेदीशस्य निवेशितम् । सत्यप्रभावादाकाशस्थितमित्यबुधजनः ॥ ४१५ ॥
सत्येन तुष्टाः सांनिध्यमस्य कुर्वन्ति देवताः । एवमूर्जस्विनी तस्य प्रसिद्धिर्व्यानशे दिशः ॥ ४१६ ॥
तया प्रसिद्ध्या राजानो भीतास्तस्य वशंययुः । सत्या वा यदि वा मिथ्या प्रसिद्धिर्जयिनी नृणाम् ॥४१७॥

---

१ व्याधेन । २ अन्यतः ।

तत्रान्यदाहमन्यागामद्राक्षमथ पर्वतम् । व्याख्यानयन्तमृग्वेदं शिष्याणां शेमुषीजुषाम् ॥ ४१८ ॥
अजैर्यष्टव्यमित्यत्र मेषैरित्युपदेशकम् । तमवोचमहं भ्रातर्भ्रान्त्या किमिदमुच्यते ॥ ४१९ ॥
त्रिवार्षिकाणि धान्यानि न हि जायन्त इत्यजाः । व्याख्याता गुरुणास्माकं व्यस्मार्षीः केन हेतुना ॥ ४२० ॥
ततः पर्वतकोऽवादीदिदं तातेन नोदितम् । उदिताः किं त्वजा मेषास्तथैवोक्ता निघंटुषु ॥ ४२१ ॥
अवोचमहमप्येवं शब्दानामर्थकल्पना । मुख्या गौणी च तत्रेह गौणीं गुरुरचीकथत् ॥ ४२२ ॥
गुरुर्धर्मोपदेष्टैव श्रुतिर्धर्मात्मकैव च । द्वयमप्यन्यथा कुर्वन्मित्र मा पापमर्जय ॥ ४२३ ॥
साक्षेपं पर्वतोऽजल्पदजान्मेषान् गुरुर्जगौ । गुरूपदेशशब्दार्थोल्लंघनाद्धर्ममर्जसि ॥ ४२४ ॥
मिथ्याभिमानवाचो हि न स्युर्दण्डभयान्नृणाम् । स्वपक्षस्थापने तेन जिह्वाछेदपणोऽस्तु नः ॥ ४२५ ॥
प्रमाणमुभयोरत्र सहाध्यायी वसुर्नृपः । प्रत्यश्रौषमहं तच्च न क्षोभः सत्यभाषिणाम् ॥ ४२६ ॥
रहः पर्वतमूचेऽम्बा गृहकर्मरताप्यहम् । अजास्त्रिवार्षिकं धान्यमित्यश्रौषं भवत्पितुः ॥ ४२७ ॥
जिह्वाछेदं पणेऽकार्षीर्यद्दर्पात्तदसांप्रतम् । अविमृष्य विधातारो भवन्ति विपदां पदम् ॥ ४२८ ॥
अवदत्पर्वतोऽप्येवं कृतं तावदिदं मया । यथा तथा कृतस्यांब करणं न हि विद्यते ॥ ४२९ ॥
साथ पर्वतकापायपीडया हृदि शल्यिता । वसुराजमुपेयाय पुत्रार्थे क्रियते न किम् ॥ ४३० ॥
दृष्टः क्षीरकदंबोऽद्य यदंब त्वमसीक्षिता । किं करोमि प्रयच्छामि किं वेत्यभिदधे वसुः ॥ ४३१ ॥
सावादीदीयतां पुत्रभिक्षा मह्यं महीपते । धनधान्यैः किमन्यैर्मे विना पुत्रेण पुत्रक ॥ ४३२ ॥

१ बुद्धिजुषाम् । २ कोशेषु । ३ अगीचकार ।

वसुरूचे ततो मेऽम्ब पाह्यः पूज्यश्च पर्वतः । गुरुवद्गुरुपुत्रेऽपि वर्तितव्यमिति श्रुतेः ॥ ४३३ ॥
कस्याद्य पत्रमुत्क्षिप्तं कालेनाकालरोषिणा । को जिघांसुर्भ्रातरं मे ब्रूहि मातः किमातुरा ॥ ४३४ ॥
अजव्याख्यानवृत्तान्तं स्वपुत्रस्य पणं च तम् । त्वं प्रमाणं कृतश्चासीत्याख्यायार्थयते स्म सा ॥ ४३५ ॥
कुर्वाणो रक्षणं भ्रातुरजान्मेषानुदीरय । प्राणैरप्युपकुर्वन्ति महान्तः किं पुनर्गिरा ॥ ४३६ ॥
अवोचत वसुर्मातर्मिथ्या वच्मि वचः कथम् । प्राणात्ययेऽपि शंसंति नासत्यं सत्यभाषिणः ॥ ४३७ ॥
अन्यदप्यभिधातव्यं नासत्यं पापभीरुणा । गुरुवागन्यथाकारे कूटसाक्ष्ये च का कथा ॥ ४३८ ॥
बहूकुरु गुरोः सूनुं यद्वा सत्यव्रताग्रहम् । तया सरोषमित्युक्तस्तद्वचोऽमंस्त पार्थिवः ॥ ४३९ ॥
ततः प्रमुदिता क्षीरकदंबगृहिणी ययौ । अयाव पर्वतोऽहं च वसुराजस्य पर्षदि ॥ ४४० ॥
सभायाममिलन् सभ्या माध्यस्थ्यगुणशालिनः । वादिनां सदसद्वादक्षीरनीरंसितच्छदाः ॥ ४४१ ॥
आकाशस्फटिकशिलावेदिसिंहासनं वसुः । सभापतिरलंचक्रे नभस्तलमिवोडुपः ॥ ४४२ ॥
ततः पर्वतकोऽहं च व्याख्यापक्षं निजं निजम् । अशंसाव नरेन्द्राय सत्यं ब्रूहीति भाषिणौ ॥ ४४३ ॥
विप्रवृद्धैरथोचे स विवादस्त्वयि तिष्ठते । प्रमाणमनयोः साक्षी त्वं रोदस्योरिवार्यमा ॥ ४४४ ॥
घटप्रभृतिदिव्यानि वर्तंते हंत सत्यतः । सत्याद्वर्षति पर्जन्यः सत्यात् सिध्यंति देवताः ॥ ४४५ ॥
त्वयैव सत्ये लोकोऽयं स्थाप्यते पृथिवीपते । त्वामिहार्थे ब्रूमहे किं ब्रूहि सत्यव्रतोचितम् ॥ ४४६ ॥
वचः श्रुत्वेति तत्सत्यप्रसिद्धिं स्वां निरस्य च । अजान्मेषान् गुरुर्व्याख्यदिति साक्ष्यं वसुर्व्यधात् ॥४४७॥

---

१ सत्यासत्यौ च तौ वादौ च तावेव दुग्धजले तयोः पृथक्करण इति शेषः सितच्छदा हंसाः ।

असत्यवचसा तस्य क्रुद्धास्तत्रैव देवताः । दलयामासुराकाशस्फटिकासनवेदिकाम् ॥ ४४८ ॥
वसुर्वसुमतीनाथस्ततो वसुमतीतले । पपात सद्यो नरकपातं प्रस्तावयन्निव ॥ ४४९ ॥
देवताभिरसत्योक्तिकुपिताभिर्निपातितः । जगाम नरकं घोरं नरनाथो वसुस्ततः ॥ ४५० ॥
वसोः सुताः पृथुवसुश्चित्रवसुश्च वासवः । शक्रो विभावसुर्विश्वावसुः सूरश्च सप्तमः ॥ ४५१ ॥
अष्टमश्च महाशूरो निषण्णाः पैतृके पदे । देवताभिरहन्यन्त तत्कालमपि कोपतः ॥ ४५२ ॥
सुवसुर्नवमः सूनुर्नंष्ट्वा नागपुरं ययौ । बृहद्ध्वजो वसोः सूनुर्दशमो मथुरां पुनः ॥ ४५३ ॥
हसित्वा बहुधा पौरैस्तस्याः पुर्याश्च पर्वतः । निर्वासितः संजगृहे महाकालासुरेण सः ॥ ४५४ ॥
कोऽयं महाकाल इति पृष्टो दशमुखेन तु । उवाच नारदोऽत्रास्ति चारणयुगलं पुरम् ॥ ४५५ ॥
राजा तत्रायोधनोऽभूद्दितिर्नाम्ना च तत्प्रिया । तयोश्च सुलसा नाम दुहिता रूपशालिनी ॥ ४५६ ॥
पित्रा स्वयंवरे तस्या आहूताः समुपाययुः । सर्वेऽपि पार्थिवास्तेषु पार्थिवः सगरोऽधिकः ॥ ४५७ ॥
सगरस्याज्ञया द्वाःस्था मंदोदर्यभिधानतः । अयोधननृपावासे जगाम प्रतिवासरम् ॥ ४५८ ॥
एकदा च गृहोद्यानकदलीसदनेऽविशत् । दितिः समं सुलसया मन्दोदर्यपि चाययौ ॥ ४५९ ॥
लतान्तरविलीनाथ श्रोतुकामा तयोर्वचः । तस्थौ मन्दोदरी प्रोचे दितिश्च सुलसामिति ॥ ४६० ॥
वत्से मम मनःशल्यमस्ति तेऽस्मिन् स्वयंवरे । त्वदधीनस्तदुद्धारस्तत्सम्यक्छृणु मूलतः ॥ ४६१ ॥
ऋषभस्वामिनोऽभूतामुभौ वंशधरौ सुतौ । भरतो बाहुबलिश्च सूर्यसोमौ ययोः सुतौ ॥ ४६२ ॥
सोमवंशे मम भ्राता तृणबिन्दुरजायत । सूर्यवंशे ते पितासावयोधनमहीपतिः ॥ ४६३ ॥

अयोधनस्वसा सत्ययशा नाम महीपतेः । तृणबिन्दोरभूद्भार्या मधुपिंगस्तयोः सुतः ॥ ४६४ ॥
तस्मै प्रदीयमानां त्वामहमिच्छामि सुन्दरि । प्रदित्सते त्वत्पिता त्वां स्वयंवरवराय तु ॥ ४६५ ॥
न जाने कं वृणोषि त्वं मनःशल्यमिदं मम । वरणीयस्त्वया राजमध्ये मञ्भ्रातृजस्ततः ॥ ४६६ ॥
सुलसापि हि तद्भिक्षां तथैव प्रत्यपद्यत । मन्दोदर्यपि तच्छ्रुत्वाचख्यौ सगरभूपतेः ॥ ४६७ ॥
सगरोऽप्यादिशद्विश्वभूतिं निजपुरोधसम् । सद्यः कविः सोऽपि चक्रे नृपलक्षणसंहिताम् ॥ ४६८ ॥
तंत्रोचे स तथा येन समस्तै राजलक्षणैः । सगरो जायते युक्तो हीनस्तु मधुपिंगलः ॥ ४६९ ॥
तत्पुस्तकं तु पेटायां स चिक्षेप पुराणवत् । राजाज्ञयान्यदाकृष्टं तेन तद्राजपर्षदि ॥ ४७० ॥
तत्रादौ सगरोऽवोचद्वाच्यमानेऽत्र पुस्तके । भवेल्लक्षणहीनो यो वध्यस्त्याज्यश्च सोऽखिलैः ॥ ४७१ ॥
यथा यथावाचयत्तत्पुस्तकं स पुरोहितः । तथा तथा स जिह्राय मधुपिंगोऽपलक्षणः ॥ ४७२ ॥
निर्ययौ मधुपिंगोऽथ सगरं सुलसावृणोत् । जज्ञे विवाहः सद्योऽपि सर्वे स्वं स्थानमन्वयुः ॥ ४७३ ॥
मधुपिंगोऽप्यपमानात् कृत्वा बालतपो मृतः । महाकालाभिधः षष्टिसहस्रेशोऽसुरोऽभवत् ॥ ४७४ ॥
अज्ञासीदवधेः सोऽथ सगरस्य विजृंभितम् । स्वयंवरे सुलसाया निजं न्यक्कारकारणम् ॥ ४७५ ॥
राजानं सगरं राज्ञोऽन्यांश्च हन्मीति सोऽसुरः । छिद्रान्वेषी शुक्तिमतीनद्यां पर्वतमैक्षत ॥ ४७६ ॥
विप्रवेषस्ततो भूत्वा गत्वा पर्वतमभ्यधात् । शांडिल्यो नाम मित्रं त्वत्पितुरस्मि महामते ॥ ४७७ ॥
धीमतो गौतमाख्यस्योपाध्यायस्य पुरः पुरा । अहं क्षीरकदम्बश्चापठाव सहितावुभौ ॥ ४७८ ॥

१ तत्र पुस्तके स विश्वभूतिस्तथोचे रचयामास । २ तिरस्कारकारणम् ।

नारदेन जनैश्च त्वां श्रुत्वा धर्षितमागमम् । त्वत्पक्षं पूरयिष्यामि मंत्रैर्विश्वं विमोहयन् ॥ ४७९ ॥
इत्युक्त्वा पर्वतयुतः कुधर्मेणाखिलं जनम् । असुरो मोहयामास दुर्गतौ पातनाय सः ॥ ४८० ॥
व्याधिभूतादिदोषांश्च सर्वत्राजनयज्जने । [1]प्रपन्नपर्वतमतं निर्दोषं च चकार सः ॥ ४८१ ॥
शांडिल्यस्याज्ञया सोऽपि रुक्शांतिं पर्वतो व्यधात् । उपकृत्योपकृत्य स्वमते चास्थापयज्जनम् ॥ ४८२ ॥
सगरस्यापि नगरेऽन्तःपुरेऽथ परिच्छदे । विचक्रे सोऽसुरो रोगान् दारुणानतिभूयसः ॥ ४८३ ॥
लोकप्रत्ययतो भेजे पर्वतं सगरोऽपि हि । चकार शांडिल्ययुतो रुक्शान्तिं सोऽपि सर्वतः ॥ ४८४ ॥
सौत्रामण्यां[2] विधानेन सुरापानं न दुष्यति । [3]अगम्यागमनं कार्यं यज्ञे गोसवनामनि ॥ ४८५ ॥
मातृमेधे वधो मातुः पितृमेधे वधः पितुः । अन्तर्वेदि विधातव्यो दोषस्तत्र न विद्यते ॥ ४८६ ॥
[4]आशुशुक्षणिमाधाय पृष्ठे कूर्मस्य तर्पयेत् । हविषा जुहकाख्याय स्वाहेत्युक्त्वा प्रयत्नतः ॥ ४८७ ॥
यदा न प्राप्नुयात् कूर्मं तदा शुद्धद्विजन्मनः । [5]खलतेः पिंगलाभस्य विक्रियस्य शुचौ जले ॥ ४८८ ॥
[6]आस्यदघ्नेऽवतीर्णस्य मस्तके कूर्मसन्निभे । प्रज्वाल्य ज्वलनं दीप्तमाहुतिं प्रक्षिपेद्द्विजः ॥ ४८९ ॥
॥ युग्मम् ॥
सर्वं पुरुष एवेदं यद्भूतं यद्भविष्यति । ईशानो[7] योऽमृतत्वस्य यदन्नेनातिरोहति ॥ ४९० ॥
एवमेकत्र पुरुषे किं केनात्र विपद्यते । कुरुतातो यथाभीष्टं यज्ञे प्राणिनिपातनम् ॥ ४९१ ॥

१ अंगीकृतं पर्वतस्य मत येन तं नरम् । २ यज्ञविशेषे । ३ अगम्यायाः स्त्रियाः गमनं सगः । ४ अग्निम् । ५ खलतिः खल्वाटः " टालीयो " इति भाषायाम् । ६ मुखपर्यंतप्रमाणे जले । ७ मोक्षस्येशान ईश्वरः ।

मांसस्य भक्षणं तेषां कर्तव्यं यज्ञकर्मणि । यायजूकेन पूतं हि देवोद्देशेन तत्कृतम् ॥ ४९२ ॥

इत्यादि समुपादिश्य सगरे स्वमतस्थिते । अन्तर्वेदि कुरुक्षेत्रादिषु सोऽकारयन्मखान् ॥ ४९३ ॥

स लब्धप्रसरोऽकार्षीद्राजसूयादिकानपि । असुरोऽप्यध्वरहतान् विमानस्थानदर्शयत् ॥ ४९४ ॥

ततः सप्रत्ययो लोकः प्राणिहिंसात्मकान् मखान् । निःशंकमकरोत्तस्य पर्वतस्य मते स्थितः ॥ ४९५ ॥

तत्प्रेक्ष्याहं तदा विद्याधरं नाम्ना दिवाकरम् । अवोचं यत्त्वया यज्ञे हर्तव्याः पशवोऽखिलाः ॥ ४९६ ॥

प्रतिपद्य स मे वाचं जह्रे यावत्पशून् मखे । परमाधार्मिकस्तावत्तद्ज्ञासीत्सुराधमः ॥ ४९७ ॥

ऋषभप्रतिमां तत्र तद्विद्याघातनाय सः । आस्थापयन्महाकाल उपारंसीच्च खेचरः ॥ ४९८ ॥

ततोऽहमपि तूष्णीकः क्षीणोपायोऽन्यतोऽन्यगाम् । यज्ञेषु भावयामास सगरं सोऽथ मायया ॥ ४९९ ॥

सगरं सुलसायुक्तं स जुहावाध्वरानले । कृतकृत्यो जगामाथ महाकालः स्वमाश्रयम् ॥ ५०० ॥

एवं च पर्वतात्पापपर्वतादध्वरा द्विजैः । हिंसात्मका अक्रियन्त ते निषेध्यास्त्वयैव हि ॥ ५०१ ॥

तद्वाचमुररीकृत्य प्रणिपत्य च नारदम् । मरुत्तात् क्षमयित्वा च विससर्ज दशाननः ॥ ५०२ ॥

मरुत्तो रावणं नत्वोवाच कोऽयं कृपानिधिः । पापादमुष्माद्यो ह्यस्मांस्त्वया स्वामिन्न्यवारयत् ॥ ५०३ ॥

आचख्यौ रावणोऽप्यासीन्नाम्ना ब्रह्मरुचिर्द्विजः । तापसस्य सतस्तस्य भार्या कूर्मीति गुर्व्यभूत्[2] ॥ ५०४ ॥

तत्रेयुः साधवोऽन्येद्युस्तेष्वेकः साधुरब्रवीत् । भवभीत्या गृहवासस्त्यक्तो यत्साधु साधु तत् ॥ ५०५ ॥

भूयः स्वदारसंगस्य विषयैर्लुप्तचेतसः । गृहवासाद्वने वासः कथं नाम विशिष्यते ॥ ५०६ ॥

---

१ पुनः पुनर्यजतीति यायजूकस्तेन । २ गर्भवती ।

श्रुत्वा ब्रह्मरुचिस्तत्तु प्रपन्नजिनशासनः । तदैव प्राव्रजत्सा च कूर्म्यन्तूच्छ्राविका परा ॥ ५०७ ॥
मिथ्यात्ववर्जिता तत्र सा वसंत्याश्रमे सुतम् । सुषुवे नारदं नाम रोदनादिविवर्जितम् ॥ ५०८ ॥
गतायाश्चान्यतस्तस्यास्तं जहुर्जृम्भकामराः । पुत्रशोकादिन्दुमालासविधे प्राव्रजच्च सा ॥ ५०९ ॥
तेऽमराः पालयामासुः शास्त्राण्यध्यापयंश्च तम् । आकाशगामिनीं विद्यां ददुस्तस्मै क्रमेण च ॥ ५१० ॥
अणुव्रतधरः प्राप यौवनं च मनोहरम् । स शिखाधारणान्नित्यं न गृहस्थो न संयतः ॥ ५११ ॥
कलहप्रेक्षणाकांक्षी गीतनृत्यकुतूहली । सदा कंदर्पकौकुच्यमौखर्यात्यन्तवत्सलः ॥ ५१२ ॥
वीराणां कामुकानां च सन्धिविग्रहकारकः । छत्रिकाक्षवृषीपाणिरारूढः पादुकासु च ॥ ५१३ ॥
देवैः संवर्धितत्वाच्च देवर्षिः प्रथितो भुवि । प्रायेण ब्रह्मचारी च स्वेच्छाचार्येष नारदः ॥ ५१४ ॥
इत्युक्तवन्तं लंकेशमज्ञानकृतमात्मनः । मरुत्तः क्षमयामासापराधं मखसंभवम् ॥ ५१५ ॥
मरुत्तराजः स्वां कन्यां नामतः कनकप्रभाम् । तदा ददौ दशास्याय दशास्योऽप्युदुवाह ताम् ॥ ५१६ ॥
प्रभंजन इवोजस्वी मरुत्तमखभंजनः । ततो जगाम मथुरां नगरीं गुरुविक्रमः ॥ ५१७ ॥
उपतस्थे दशग्रीवं तन्नृपो हरिवाहनः । पुत्रेण मधुना सार्धमीशानेनेव शूलिना ॥ ५१८ ॥
तं भक्त्योपस्थितं प्रीतोऽवार्तयद्दशकन्धरः । पप्रच्छैवं भवत्सूनोः कुतोऽदः शूलमायुधम् ॥ ५१९ ॥
पित्रा भ्रूसंज्ञयादिष्टो मधुरं मधुरभ्यधात् । इदं मे चमरेन्द्रेण प्राग्जन्मसुहृदार्पितम् ॥ ५२० ॥

१ कामचेष्टितवाचालत्वयोरत्यंतवत्सलः । २ दर्भासनविशेषो वृषी । ३ ईशानेंद्रेण ।

अवोचच्चमरश्चैवं धातकीखंडनामनि । द्वीप ऐरावतक्षेत्रे शतद्वारे महापुरे ॥ ५२१ ॥
सुमित्रो राजपुत्रोऽभूत्प्रभवः कुलपुत्रकः । अभावभूतां ते मित्रे वसन्तमदनाविव ॥ ५२२ ॥ युग्मम् ॥
गुरोरेकस्य पार्श्वे तौ बाल्ये जगृहतुः कलाः । सह चिक्रीडतुश्चाविप्रयुक्तावश्विनाविव ॥ ५२३ ॥
उद्यौवनः सुमित्रोऽथ तत्राभून्नगरे नृपः । महर्द्धिं विदधे तेन प्रभवोऽप्यात्मसन्निभः ॥ ५२४ ॥
राजैकदा तुरंगेण हृतः प्राप महाटवीम् । पल्लीपतिसुतां तत्र वनमालामुपायत ॥ ५२५ ॥
तामादाय समायातः स राजा स्वपुरे पुनः । प्रभवेण च सा प्रैक्षि रूपयौवनशालिनी ॥ ५२६ ॥
तद्दर्शनात्प्रभृत्येव स मनोभवपीडितः । दिने दिने कृशो जज्ञे कृष्णपक्ष इवोडुपः ॥ ५२७ ॥
असाध्यं मंत्रतंत्राणां तं ज्ञात्वातिकृशं नृपः । इत्यूचे बाधते किं ते सम्यगाख्याहि बान्धव ॥ ५२८ ॥
अभ्यधात्प्रभवोऽप्येवं वक्तुमेतन्न शक्यते । अलं कुलकलंकाय यन्मनःस्थमपि प्रभो ॥ ५२९ ॥
निर्बन्धाद्भूभुजा पृष्टः स आख्यत् कुलपुत्रकः । वनमालानुरागो मे देहदौर्बल्यकारणम् ॥ ५३० ॥
राजाप्यूचे राज्यमपि त्वदर्थे संत्यजाम्यहम् । किं पुनर्महिलामात्रमियमद्यैव गृह्यताम् ॥, ५३१ ॥
इत्युक्त्वा तं विसृज्याथ तस्यानुपदमेव ताम् । स्वयं दूतीमिव प्रैषीत्तदोकसि निशामुखे ॥ ५३२ ॥
इत्यूचे सापि राज्ञाहं तुभ्यं दत्तास्मि सीदते । जीवातुरिव तद्बाधि पत्याज्ञा मे बलीयसी ॥ ५३३ ॥
मम भर्ता त्वदर्थे हि प्राणानपि विमुंचति । किं पुनर्मादृशीं दासीमुदासीनः किमीक्षसे ॥ ५३४ ॥
बभाषे प्रभवोऽप्येवं धिग्धिङ्मां निरपत्रपम् । अहो स तु महासत्वो यस्येदृक् सौहृदं मयि ॥ ५३५ ॥

१ अवियोगिनौ । २ दुःखिने ।

प्राणा अपि हि दीयन्ते परस्मै न पुनः प्रिया। इति दुष्करमेतद्धि कृतं तेनाद्य मत्कृते ॥ ५३६ ॥
पिशुनानामिवावाच्यं नायाच्यं बत मादृशाम्। कल्पद्रूणामिवादेयं नास्ति किंचित्तु तादृशाम् ॥ ५३७ ॥
सर्वथा गच्छ मातासि नातः परमिमं जनम्। पश्य त्रायस्व वा पापराशिं पत्याज्ञयापि हि ॥ ५३८ ॥
तत्र च छन्नमागत्य राजा शुश्राव तद्वचः। सुहृदः सत्त्वमालोक्य प्रकर्षेण जहर्ष च ॥ ५३९ ॥
वनमालां नमस्कृत्य विसृज्य प्रभवोऽपि हि। स्वशिरश्छेत्तुमारेभे खड्गमाकृष्य दारुणम् ॥ ५४० ॥
आविर्भूय सुमित्रोऽपि मित्र मा साहसं कृथाः। इति जल्पन्नपाहार्षीत् कृपाणं तस्य पाणितः ॥ ५४१ ॥
विविक्षन्निव वसुधां प्रभवोऽधोमुखो ह्रिया। कथंचन सुमित्रेण स्वस्थावस्थामनायि सः ॥ ५४२ ॥
चक्रतुस्तौ चिरं राज्यं प्राग्वन्मैत्रीपरायणौ। सुमित्रस्तु परिव्रज्य मृत्वेशानसुरोऽभवत् ॥ ५४३ ॥
ततश्च्युत्वा मथुरेशहरिवाहणनन्दनः। त्वं सुबाहुर्मधुनामा माधवीकुक्षिभूरभूः ॥ ५४४ ॥
प्रभवोऽपि भवं भ्रांत्वा चिरं विश्वावसोरभूत्। ज्योतिर्मत्यां श्रीकुमार इति नाम्ना तनूरुहः ॥ ५४५ ॥
सनिदानं तपः कृत्वा कालयोगाद्विपद्य च। अभवं चमरेन्द्रोऽहं पूर्वजन्मसुहृत्तव ॥ ५४६ ॥
इत्याख्याय स मेऽदत्त शूलमेतदुपेत्य यत्। आ योजनद्विसहस्र्याः कृत्वा कार्यं निवर्तते ॥ ५४७ ॥
इति श्रुत्वा दशग्रीवो भक्तिशक्तिविराजिने। ददौ मधुकुमाराय कन्यां नाम्ना मनोरमाम् ॥ ५४८ ॥
अथ लंकाप्रयाणाद्वर्षेष्वष्टादशस्वगात्। स्वर्णाद्रौ पांडके चैत्यान्यर्चितुं दशकन्धरः ॥ ५४९ ॥
सोत्कंठस्तत्र चैत्यानि दशकंठोऽभ्यवन्दत। ऋद्ध्या महत्या संगीतपूजोत्सवपुरःसरम् ॥ ५५० ॥
दुर्लंघनगरेऽथेन्द्रदिक्पालं नलकूबरम्। ग्रहीतुं कुंभकर्णाद्या दशग्रीवाज्ञया ययुः ॥ ५५१ ॥

नलकूबरः ॥ ५५२ ॥
आशालीविद्ययावह्निमयं वप्रमथ व्यधात् । स्वपुरे योजनशतप्रमाणं नलकूबरः ॥ ५५३ ॥
हुताशनमयान्येव चक्रे यंत्राणि तत्र च । प्रदीपनमिव व्योम्नि कुर्वाणानि शिखोत्करैः ॥ ५५४ ॥
तं च वप्रमवष्टभ्यावतस्थे नलकूबरः । भटैः परिवृतः कोपाज्ज्वलन् वह्निकुमारवत् ॥ ५५५ ॥
तेऽप्येत्य कुंभकर्णाद्यास्तं द्रष्टुमपि नाशकन् । ग्रीष्ममध्याह्नमार्तंडमिव सुप्तोत्थिता नराः ॥ ५५६ ॥
भग्नोत्साहाः कथमपि दशास्याय व्यजिज्ञपन् ॥ ५५७ ॥
दुर्लंघ्यमेतदुर्लंघपुरमित्यपसृत्य ते । अपरयंस्तद्ग्रहोपायं चिरं दध्यौ सबांधवः ॥ ५५७ ॥
स्वयं दशास्यस्तत्रागात्तं वप्रं प्रेक्ष्य तादृशम् । अपरयंस्तद्ग्रहोपायं चिरं दध्यौ सबांधवः ॥ ५५८ ॥
अनुरक्ता दशास्यस्य नलकूबरपत्न्यथ । प्रैषीद्दुतीमुपरंभां सा तमेत्यैवमब्रवीत् ॥ ५५९ ॥
जयश्रीरिव मूर्तोपरंभा त्वयि रिरंसते । सा त्वद्गुणैर्हृतमनास्तत्र मूर्त्यैव तिष्ठति ॥ ५६० ॥
करिष्यति तवायत्तामात्मानमिव मानद ॥ ५६१ ॥
इमां च विद्यामाशालीमस्य वप्रस्य रक्षिकाम् । करिष्यति तवायत्तामात्मानमिव मानद ॥ ५६१ ॥
ग्रहीष्यसि तया चेदं पुरं सनलकूबरम् । सेत्स्यत्यत्र च ते चक्रं दैवं नाम्ना सुदर्शनम् ॥ ५६२ ॥
सप्रहासं दशास्येन वीक्षितोऽथ बिभीषणः । एवमस्त्विति भाषित्वा दूतिकां विससर्ज ताम् ॥ ५६३ ॥
अथ क्रुद्धो दशग्रीव आबभाषे बिभीषणम् । अरे कुलविरुद्धं किं प्रतिपन्नमिदं त्वया ॥ ५६४ ॥
हृदयं जातुचिद्दत्तं परस्त्रीणां न कैरपि । अस्मत्कुलभवैर्मूढ रणे पृष्ठं द्विषामिव ॥ ५६५ ॥
नवः कुलकलंकोऽयं वचसापि कृतस्त्वया । रे बिभीषण केयं ते मतिर्येनेदमब्रवीः ॥ ५६६ ॥
बिभीषणोऽप्युवाचैवं प्रसीदार्य महाभुज । न वाग्मात्रं कलंकाय विशुद्धमनसां नृणाम् ॥

१ स्वगृहे मूर्त्या केवलशरीरेणैव तिष्ठति मनस्तु त्वयि वर्तत इति भावः ।

सा समायातु विद्यां ते प्रयच्छतु स च द्विषन् । वश्योऽस्तु मा भजेथास्तां वाचोयुक्त्या परित्यजेः॥५६७॥
यावद्बिभीषणवचोऽनुमेने तद्दशाननः । तावदागादुपरंभा तत्परीरंभलंपटा ॥ ५६८ ॥
ददौ चाशालिकां विद्यां पत्या वप्रीकृतां पुरे । मोघेतराणि[1] शस्त्राणि व्यन्तराधिष्ठितानि च ॥ ५६९ ॥
दशास्यः संजहाराग्निप्राकारं विद्यया तया । प्रविवेश च दुर्लंघपुरं सबलवाहनः ॥ ५७० ॥
उत्तस्थे चाथ संनह्य रणाय नलकूबरः । बिभीषणेन चाग्राहि चर्मभस्त्रेव दन्तिना ॥ ५७१ ॥
देवासुरैरप्यजय्यं शक्रसंबंधिदुर्धरम् । चक्रं सुदर्शनं नाम तत्र प्राप च रावणः ॥ ५७२ ॥
प्रणताय ततस्तस्मै दशास्यस्तत्पुरं ददौ । अर्थिनोऽर्थेषु न तथा दोष्मन्तो विजये यथा ॥ ५७३ ॥
उपरंभामप्युवाच दशास्यः स्वकुलोचितम् । भजे भजात्मभर्तारं कर्तारं विनयं मयि ॥ ५७४ ॥
विद्यादानाद्गुरुस्थाने मम त्वमसि संप्रति । स्वसृमातृपदे पश्याऽप्यन्या अपि परस्त्रियः ॥ ५७५ ॥
पुत्री कामध्वजस्यासि सुन्दर्युदरसंभवा । कुलद्वयविरुद्धायाः कलंको मा स्म भूत्तव ॥ ५७६ ॥
तामित्युक्त्वार्पयामास नलकूबरभूभुजे । अदूषितां पितुर्गेहे उषित्वेव समागताम् ॥ ५७७ ॥
नलकूबरराजेन कुंभकर्णाग्रजोऽर्चितः । चचाल सह सेनाभी रथनूपुरपत्तनम् ॥ ५७८ ॥
आयान्तं रावणं श्रुत्वा सहस्रारो महामतिः । सुतमिन्द्रं सुतस्नेहात् स्नेहपूर्वमभाषत ॥ ५७९ ॥
भवता वत्स जातेन वंशोऽस्माकं महौजसा । अन्यवंशोन्नतिं हृत्वा प्रापितः प्रोन्नतिं पराम् ॥ ५८० ॥
एकेन विक्रमेणैव त्वया हीदमनुष्ठितम् । नीतीनामप्यवकाशो दातव्यः संप्रति त्वया ॥ ५८१ ॥

१ सफलानि । २ रोष कृत्वा ।

एकान्तविक्रमः क्वापि विपदेऽपि प्रजायते । एकान्तविक्रमान्नाशं शरभाद्याः[1] प्रयांति हि ॥ ५०२ ॥
बलीयसो बलिभ्योऽपि प्रसूते हि वसुन्धरा । सर्वेभ्योऽप्यहमोजस्वीत्यहंकारं स्म मा कृथाः ॥ ५०३ ॥
उत्थितोऽस्त्यधुना वीरः सर्ववीरत्वतस्करः । प्रतापेन सहस्रांशुः[2] सहस्रांशुनियंत्रकः[3] ॥ ५०४ ॥
हेलोत्पाटितकैलासो[4] मरुत्तमखभंजनः । जंबूद्वीपेशयक्षेन्द्रेणाप्यक्षोभितमानसः ॥ ५०५ ॥
उपार्हन्निजदोर्वीणागीततोषितचेतसः[5] । धरणेन्द्रादमोघाप्तशक्तिः शक्तित्रयोर्जितः[6] ॥ ५०६ ॥
भ्रातृभ्यां स्वानुरूपाभ्यां स्वभुजाभ्यामिवोत्कटः । रावणो नाम लंकेशः सुकेशकुलभास्करः ॥ ५०७ ॥
स यमं हेलयाभांक्षीत् पत्तिं वैश्रवणं च ते । पत्तीचक्रे वानरेन्द्रं सुग्रीवं वालिसोदरम् ॥ ५०८ ॥
दुर्लंघ्यवह्निप्राकारं दुर्लंघपुरमस्य[7] च । प्रविष्टस्यानुजो बद्ध्वा जग्राह नलकूबरम् ॥ ५०९ ॥
स त्वां प्रत्यापतन्नस्ति युगांताग्निरिवोद्धतः । प्रणिपातसुधावृष्ट्या शमनीयोऽन्यथा न तु ॥ ५१० ॥
रूपिणीं च सुतामस्मै यच्छ रूपवतीमिमाम् । एवं ह्युत्तमसन्धानं संबन्धात्ते भविष्यति ॥ ५११ ॥
एवं पितृवचः श्रुत्वा कुप्यन्नेवमुवाच सः । कन्यका स्वा कथंकारमस्मै वध्याय दीयते ॥ ५१२ ॥
किं च नाधुनिकं वैरममुना किं तु वंशजम् । तातं विजयसिंहं प्रागेत्[8]तद्गृह्यैर्[9]हतं स्मर ॥ ५१३ ॥
एतत्पितामहस्यापि मालिनो यन्मया कृतम् । तदस्यापि करिष्यामि समायात्वेषको ह्ययम् ॥ ५१४ ॥
स्नेहतः कातरो मा भूः सहजं धैर्यमाश्रय । स्वसूनोः सर्वदा दृष्टं किं न वेत्सि पराक्रमम् ॥ ५१५ ॥

---

१ अष्टापदाद्याः । २ सहस्रांशुः सूर्यः । ३ सहस्रांशुर्नाम राजा तन्नियंत्रकः । ४ कैलासोऽष्टापदगिरिः । ५ अर्हत्समीपे निजदोर्वीणाया गीतेन प्रसन्नं चित्तं यस्य तस्मात् । ६ प्रभुमंत्रोत्साहरूपास्तिस्रः शक्तयः । ७ अस्य रावणस्य । ८ अभ्यागच्छन् । ९ एतत्पक्ष्यैः ।

तस्यैवं वदतोऽन्येत्य नगरं रथनूपुरम् । चमून्निर्वेष्टयामास दुर्धरो दशकन्धरः ॥ ५९६ ॥
पूर्वमेव दशास्येन प्रहितो महितौजसा । अथ दूतोऽन्युपेत्येन्द्र मित्युवाच ससौष्ठवः ॥ ५९७ ॥
ये केचिदिह राजानो विद्यादोर्वीर्यदर्पिताः । तैरुपेत्योपायनाद्यैः पूजितो दशकन्धरः ॥ ५९८ ॥
दशकंठस्य विस्मृत्या भवतश्चार्जवादयम् । इयान् कालो ययौ तस्मिन् भक्तिकालस्तवाधुना ॥ ५९९ ॥
भक्तिं दर्शय तत्तस्मिन् शक्तिं वा दर्शयाधुना । भक्तिशक्तिविहीनश्चेदेवमेव विनंक्ष्यसि ॥ ६०० ॥
इन्द्रोऽपि निजगादेवं वराकैः पूजितो नृपैः । रावणस्तदयं मत्तः पूजां मत्तोऽपि वांछति ॥ ६०१ ॥
यथा तथा गतः कालो रावणस्य सुखाय सः । कालरूपस्त्वयं कालस्तस्येदानीमुपस्थितः ॥ ६०२ ॥
गत्वा स्वस्वामिनो भक्तिं शक्तिं वा मयि दर्शय । स भक्तिशक्तिहीनश्चेदेवमेव विनंक्ष्यति ॥ ६०३ ॥
दूतेनागत्य विज्ञप्तो रावणः कोपदारुणः । समनह्यन्महोत्साहः समं सकलसैनिकैः ॥ ६०४ ॥
द्रुतमिन्द्रोऽपि सन्नह्य निर्ययौ रथनूपुरात् । वीरा हि न सहन्तेऽन्यवीराहंकारडंबरम् ॥ ६०५ ॥
सामान्ताः सह सामन्तैः सैनिकाः सैनिकैः पुनः । सेनानीभिश्च सेनान्यो द्वयोर्युयुधिरे तयोः ॥ ६०६ ॥
तयोर्बलानामन्योऽन्यं संफेटः शस्त्रवर्षिणाम् । संवर्तपुष्करावर्तवारिदानामिवाभवत् ॥ ६०७ ॥
वराकैः सैनिकैरेभिः किं हतैर्मशकैरिव । इति ब्रुवाणो भुवनालंकारकरिपुंगवम् ॥ ६०८ ॥
स्वयमारुह्य युद्धायाधिज्यीकृतशरासनः । अढौकतैरावणस्थेन्द्रेण सह रावणः ॥ ६०९ ॥
॥ युग्मम् ॥
नागपाशमिवान्योऽन्यं मुखयोः करवेष्टनैः । वितन्वानौ मिमिलतुः करिणौ रावणेन्द्रयोः ॥ ६१० ॥

द्वावपीत्नौ महाप्राणौ दन्तैर्दन्तान् प्रजघ्नतुः । उत्थापयन्तौ स्फुलिंगानरण्युन्मथनादिव ॥ ६११ ॥
मिथोघातैर्विषाणेभ्यः सौवर्णवलयावलिः । पपातोर्व्यां विरहिणीबाहुभ्य इव तत्क्षणम् ॥ ६१२ ॥
तद्दन्तघातक्षुण्णेभ्यः शरीरिभ्यो निरंतरम् । गंडेभ्यो मदधारावद्रक्तधाराः प्रसुस्रुवुः ॥ ६१३ ॥
क्षणाल्लक्ष्यैः क्षणाद्वाणैः क्षणादपि च मुद्गरैः । गजाविवाद्वितीयौ तौ रावणेन्द्रौ प्रजघ्नतुः ॥ ६१४ ॥
महाबलौ पिपिषतुरस्त्रैरस्त्राणि तौ मिथः । नैकोऽप्यहीयतैकस्मादब्धी पूर्वापराविव ॥ ६१५ ॥
बाध्यबाधकताभाग्भिर्वागुत्सर्गापवादवत् । मंत्रास्त्रैरप्ययुध्येतां तौ रणक्रतुदीक्षितौ ॥ ६१६ ॥
गाढं मिलितयोरेकवृन्तस्थफलयोरिव । ऐरावणभुवनालंकारयोः करिणोरथ ॥ ६१७ ॥
उत्प्लुत्य रावणः स्वेभादुत्पत्यैरावणं ययौ । हत्वा च तन्महामात्रं बबन्धेन्द्रं करीन्द्रवत् ॥ ६१८ ॥
स हस्ती परितोऽधस्ताद्रक्षोवीरैरवेष्ट्यत । हर्षादुत्तालतुमुलैर्मधुमंरू इवालिभिः ॥ ६१९ ॥
रावणेन धृते शक्रे तत्सैन्यमपि सर्वतः । विदुद्राव जिते नाथे जिता एव पदातयः ॥ ६२० ॥
सहैवैरावणेनेन्द्रं रावणः शिबिरे निजे । निनाय नायकश्चन्द्रवत्स्वयं श्रेणिद्वयेऽप्यथ ॥ ६२१ ॥
ततो निवृत्य लंकायां जगाम दशकन्धरः । कारायां चाक्षिपच्छक्रं कीरवत्काष्ठपञ्जरे ॥ ६२२ ॥
सहस्रारः सदिक्पालो लंकायामेत्य रावणम् । नमस्कृत्येत्यभाषिष्ट पत्तिवद्रचितांजलिः ॥ ६२३ ॥
कैलासमुदधार्षीद्यो लीलया ग्रावखंडवत् । दोष्मता तेन भवता विजिता न त्रपामहे ॥ ६२४ ॥
तादृशे त्वयि यांचापि न त्रपायै मनागपि । तद्याचेऽहं मुंच शक्रं पुत्रभिक्षां प्रयच्छ मे ॥ ६२५ ॥

१ अरणिः काष्ठविशेषः । २ विरहवत्याः स्त्रियाः बाहुभ्यः । ३ पाषाणखडवत् ।

उवाच रावणोऽप्येवं शक्रं मुंचामि यद्यसौ । सदिक्पालपरीवारः कर्म कुर्यात् सदेदृशम् ॥ ६२६ ॥
परितोऽपि पुरीं लंकां करोत्वेष क्षणे क्षणे । तृणकाष्ठादिरहितां वासागारमहीमिव ॥ ६२७ ॥
प्रातः प्रातर्दिव्यगंधैरंबुवाह इवांबुभिः । चेलोत्क्षेपं पुरीमेतामभितोऽप्यभिषिंचतु ॥ ६२८ ॥
मालाकार इवोच्चित्य ग्रन्थित्वा च सदा स्वयम् । पुष्पाणि पूरयत्वेष देवतावसरादिषु ॥ ६२९ ॥
एवं विधानि कर्माणि कुर्वन्नेष सुतस्तव । पुनर्गृह्णातु राज्यं स्वं मत्प्रसादाच्च नन्दतु ॥ ६३० ॥
एवं करिष्यतीत्युक्ते सहस्रारेण रावणः । मुमोच शक्रं कारायाः सत्कृत्य निजबन्धुवत् ॥ ६३१ ॥
रथनूपुरमेत्येन्द्रस्तस्थावुद्विग्न उच्चकैः । तेजस्विनां हि निस्तेजो मृत्युतोऽप्यतिदुःसहम् ॥ ६३२ ॥
निर्वाणसंगमो नाम ज्ञानी तत्रान्यदा मुनिः । समवासरदिन्द्रोऽपि तं वन्दितुमुपाययौ ॥ ६३३ ॥
भगवन् कर्मणा केन रावणादिममासदम् । न्यक्कारमिति शक्रेण पृष्टः स मुनिरब्रवीत् ॥ ६३४ ॥
श्रीमत्यरिंजयपुरे पुरा विद्याधराग्रणीः । नाम्ना ज्वलनसिंहोऽभूद्वेगवत्यस्य तु प्रिया ॥ ६३५ ॥
अहिल्या नाम दुहिता रूपवत्यभवत्तयोः । तस्याः स्वयंवरेऽभ्येयुः सर्वे विद्याधरेश्वराः ॥ ६३६ ॥
आनन्दमाली तत्रागाच्चन्द्रावर्तपुरेश्वरः । सूर्यावर्तपुरेशस्त्वमागान्नाम्ना तडित्प्रभः ॥ ६३७ ॥
सहायातमपि त्यक्त्वा त्वामहिल्या निजेच्छया । आनन्दमालिनं वव्रे तवाभूच्च पराभवः ॥ ६३८ ॥
आनंदमालिनीर्ष्यातुस्त्वमभूस्तत्प्रभृत्यपि । मयि सत्यप्यसावेतामहिल्यामूढवानिति ॥ ६३९ ॥
आनन्दमाली निर्वेदादन्यदा व्रतमग्रहीत् । तप्यमानस्तपस्तीव्रं व्यहार्षीच्च सहर्षिभिः ॥ ६४० ॥
विहरन् स रथावर्तं जगाम गिरिमेकदा । त्वया च ददृशेऽस्मारि चाहिल्यायाः स्वयंवरः ॥ ६४१ ॥

ध्यानारूढस्त्वया बद्धस्ताडितोऽनेकशश्च सः । मनागपि न च ध्यानादचालीदचलाचलः ॥ ६४२ ॥
कल्याणगुणधरस्तु तद्भाता श्रमणाग्रणीः । प्रेक्ष्य त्वय्यमुचत्तेजोलेश्यां शंपामिव द्रुमे ॥ ६४३ ॥
सत्यश्रिया च त्वसत्या शमितो भक्तिजल्पितैः । तेजोलेश्यां स संजह्रे न दग्धोऽसि तदैव तत् ॥६४४॥
मुनिन्यक्कारजात् पापात्त्वं भ्रांत्वा कतिचिद्भवान् । शुभं कर्म विधायेन्दुः सहस्रारसुतोऽभवः ॥ ६४५ ॥
महामुनितिरस्कारप्रहारोद्भवकर्मणः । उपस्थितं फलमिदं रावणाद्यः पराभवः ॥ ६४६ ॥
कर्माण्यवश्यं सर्वस्य फलंत्येव चिरादपि । आपुरंदरमाकीटं संसारस्थितिरीदृशी ॥ ६४७ ॥
तच्छ्रुत्वा दत्तवीर्यस्य राज्यं दत्त्वांगजन्मनः । इंद्रः पर्यव्रजत्तप्तोग्रतपाश्च ययौ शिवम् ॥ ६४८ ॥
रावणोऽपि ययौ स्वर्णतुंगशैलेऽपरेऽहनि । अनन्तवीर्यं नामार्षं वंदितुं जातकेवलम् ॥ ६४९ ॥
तं वंदित्वा यथास्थानं निषण्णो दशकन्धरः । शुश्राव च श्रोत्रसुधासारणिं धर्मदेशनाम् ॥ ६५० ॥
देशनांते दशास्येन कुतः स्यान्मरणं मम । इति पृष्टो महर्षिः स भगवानेवमभ्यधात् ॥ ६५१ ॥
पारदारकदोषेण वासुदेवाद्भविष्यति । भविष्यति विपत्तिस्ते प्रतिविष्णोर्दशानन ॥ ६५२ ॥
परस्त्रियमनिच्छंतीं रमयिष्यामि न ह्यहम् । जग्राहाभिग्रहमिमं स तस्यैव मुनेः पुरः ॥ ६५३ ॥

मुनिवरमथ नत्वा ज्ञानरत्नांबुधिं तं दशवदन इयाय स्वां पुरीं पुष्पकस्थः ।
निखिलनगरनारीनेत्रनीलोत्पलानां प्रमदविभवदानाद्यामिनीजानिकल्पः ॥ ६५४ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुपचरिते महाकाव्ये सप्तमे पर्वणि रावणदिग्विजयो नाम द्वितीयः सर्गः ।

१ शंपा विद्युत् । २ भक्तिवचनैः । ३ अगामिनि काले । ४ यामिनीजानिश्चन्द्रः तत्तुल्यः ।

## ॥ अथ तृतीयः सर्गः ॥

अथेह वैताढ्यगिरावादित्यपुरपत्तने । प्रह्लादो नाम राजाऽभूत्केतुमत्यस्य तु प्रिया ॥ १ ॥
तयोर्बभूव तनयो नामतः पवनञ्जयः । जयी पवनवत्स्थाम्ना गगने गमनेन च ॥ २ ॥
इतश्च भरतेऽत्रैवोपार्णवं दन्तिपर्वते । विद्याधरेन्द्रो महेन्द्रो महेन्द्रनगरेऽभवत् ॥ ३ ॥
पत्न्यां हृदयसुन्दर्यां तस्य चाञ्जनसुन्दरी । अरिंदमादिपुत्राणां शतस्योपर्यभूत्सुता ॥ ४ ॥
उद्यौवनायास्तस्याश्च वरं चिन्तयतः पितुः । शशंसुर्मंत्रिणो विद्याधरयूनः सहस्रशः ॥ ५ ॥
महेन्द्रस्याज्ञयामात्यास्तद्रूपाणि पृथक् पृथक् । यथावदालेख्य पट्टेष्वानाय्य समदर्शयन् ॥ ६ ॥
तत्र विद्याधराधीशहिरण्याभांगजन्मनः । रूपं विद्युत्प्रभाख्यस्य सुमनःकुक्षिजन्मनः ॥ ७ ॥
प्रह्लादसूनोः पवनंजयस्य च मनोरमम् । चित्रस्थं सचिवोऽन्येद्युर्महेन्द्रस्याभ्यढौकयन् ॥ ८ ॥
॥ युग्मम् ॥

रूपवन्तौ कुलीनौ च द्वावप्येतौ तदेतयोः । कन्यायाः को वर इति राज्ञोक्तः सचिवोऽभ्यधात् ॥ ९ ॥
एषोऽष्टादशवर्षायुर्मोक्षं विद्युत्प्रभो गेमी । इति नैमित्तिकाः स्वामिन् व्यक्तमाख्यातपूर्विणः ॥ १० ॥
प्रह्लादतनयस्त्वेष चिरायुः पवनंजयः । योग्यो वरस्तदेतस्मै प्रयच्छाञ्जनसुन्दरीम् ॥ ११ ॥
अत्रान्तरे तु यात्रायै द्वीपं नंदीश्वरं ययुः । विद्याधरेन्द्राः सर्वेऽपि सर्वर्द्ध्या सपरिच्छदाः ॥ १२ ॥

१ बलेन । २ गमिष्यति । ३ पूर्वं आख्यातवतः ।

प्रह्लादस्तनयां प्रेक्ष्य महेन्द्रमिदमभ्यधात् । दीयतां मत्सुतायैषा स्वसुताञ्जनसुन्दरी ॥ १३ ॥
महेन्द्रः प्रतिपेदे तदग्रेऽपि हृदयस्थितम् । निमित्तमात्रमेवासीत् प्रह्लादप्रार्थना तु सा ॥ १४ ॥
इतस्तृतीये दिवसे मानसाख्ये सरोवरे । कार्यो विवाह इत्युक्त्वा तौ यथास्थानमीयतुः ॥ १५ ॥
ततो महेन्द्रप्रह्लादौ साह्लादौ स्वजनैः समम् । जग्मतुर्मानससरस्यावासं चक्रतुश्च तौ ॥ १६ ॥
मित्रं प्रहसितं नामोवाचेति पवनञ्जयः । दृष्टास्ति किं त्वया ब्रूहि कीदृश्यञ्जनसुंदरी ॥ १७ ॥
हसित्वेषत्प्रहसितोऽप्येवमूचे मयेक्षिता । सा हि रंभादिकान्योऽपि सुंदर्यञ्जनसुन्दरी ॥ १८ ॥
तस्या निरुपमं रूपं यादृशं दृश्यते दृशा । तादृशं वचसा वक्तुं वाग्मिनापि[1] न शक्यते ॥ १९ ॥
पवनंजय इत्यूचे दूरे ह्युद्वाहवासरः । सा दृग्गोचरमद्यैव कथं नेया मया सखे ॥ २० ॥
वल्लभोत्कंठितानां हि घटिकापि दिनायते । मासायते दिनमपि किं पुनस्तद्दिनत्रयम् ॥ २१ ॥
ततः प्रहसितोऽप्येवं व्याजहार स्थिरीभव । निशि तत्रैत्य तां कांतां द्रक्ष्यस्यनुपलक्षितः ॥ २२ ॥
उत्पत्य सप्रहसितो निरगात् पवनञ्जयः । [3]आस्थितेऽञ्जनसुन्दर्या प्रासादे सप्तभूमिके ॥ २३ ॥
राजस्पशै इव छन्नीभूय सोऽञ्जनसुन्दरीम् । सम्यगीक्षितुमारेभे समित्रः पवनञ्जयः ॥ २४ ॥
धन्यासि या हि प्रापस्त्वं तं पतिं पवनञ्जयम् । सखी वसन्ततिलकेत्युवाचाञ्जनसुन्दरीम् ॥ २५ ॥
हले मुक्त्वा वरं विद्युत्प्रभं चरमविग्रहम् । को वरः श्लाघ्यत इति मिश्रकेत्यवदत् सखी ॥ २६ ॥
प्रथमा प्रत्युवाचैवं मुग्धे वेत्सि न किंचन । विद्युत्प्रभो हि स्वल्पायुः स्वामिन्या युज्यते कथम् ॥ २७ ॥
द्वितीयापीत्यभापिष्ट वयस्ये मन्दधीरसि । स्तोकमप्यमृतं श्रेयो [6]भारोऽपि न विषस्य तु ॥ २८ ॥

१ प्रशस्ता वागस्येति वाग्मी तेन। २ अज्ञातोऽन्येनेत्यध्याहारः। ३ अधिष्ठिते। ४ स्पशो गूढचरः। ५ चरमशरीरिणम्। ६ भारस्समूहः।

इत्यालापं तयोः श्रुत्वाचिंतयत् पवनञ्जयः । अस्याः प्रियमिदं नूनं तेन नैषा निषेधति ॥ २९ ॥
इति क्रुद्धोऽसिमाकृष्याविरासीत्पवनंजयः । निशाचर इवाकस्मादन्धकारात् समुत्थितः ॥ ३० ॥
विद्युत्प्रभो हृदि ययोर्द्वयोरपि तयोः शिरः । छिनद्मीति वदन्रोषाच्चचाल पवनंजयः ॥ ३१ ॥
बाहुदण्डे धारयंस्तमिति प्रहसितो वदन् । सापराधाप्यवध्यैव स्त्री गौरिव न वेत्सि किम् ॥ ३२ ॥
किं पुनर्निरपराधैवेयमंजनसुंदरी । तथापवादिनीं नैषा निषेधति पुनर्ह्रिया ॥ ३३ ॥
इति प्रहसितेनोच्चैर्निषिद्धः पवनंजयः । उत्पत्यागात् स्वमावासं जाग्रत्तस्थौ च दुःखितः ॥ ३४ ॥
प्रातश्चोचे प्रहसितं सखे किमनयोढया । भृत्योऽपि हि विरक्तः स्यादापदे किं पुनः प्रिया ॥३५॥
तदेहि यावः स्वपुरीमुरीकृत्य परं रंयम् । किं स्वादुनापि भोज्येन रोचते न यदात्मने ॥ ३६ ॥
इत्युदीर्योच्चकैर्यावच्चचाल पवनंजयः । धृत्वा तावत्प्रहसितस्तं साम्नैवमबोधयत् ॥ ३७ ॥
न युक्तं महतां यत्स्वप्रतिपन्नस्य लंघनम् । अनुल्लंघ्यैस्तु गुरुभिः प्रतिपन्नस्य का कथा ॥ ३८ ॥
विक्रीणते वा मूल्येन ददते वा प्रसादतः । गुरवो हीत्यपि सतां प्रमाणं नापरा गतिः ॥ ३९ ॥
किं चेहाञ्जनसुंदर्यामस्ति दोषलवोऽपि न । दूष्यते दैवदोषेण सुहृदो हृदयं पुनः ॥ ४० ॥
महात्मानौ च पितरौ स्वस्य तस्याश्च विश्रुतौ । किं न लज्जयसि भ्रातर्गच्छन् स्वच्छंदवृत्तितः ॥ ४१ ॥
उक्तः प्रहसितेनैवं विमृष्य पवनंजयः । तथैव कथमप्यस्थात् सशल्य इव चेतसि ॥ ४२ ॥
पवनांजनसुंदर्योर्निर्णीते च दिनेऽभवत् । पितृनेत्रोत्पलशशी पाणिग्रहमहोत्सवः ॥ ४३ ॥

१ कुत्सितवादिनीम् । २ वेगम् । ३ विधिदोषेणेत्यर्थः । ४ निश्चिते ।

तद्वधूवरमादाय [1]सदायादः प्रमोदभाक् । महेन्द्रेणार्चितः स्नेहात् प्रह्लादः स्वां पुरीं ययौ ॥ ४४ ॥
प्रह्लादोऽञ्जनसुंदर्याः प्रासादं सप्तभूमिकम् । अर्पयामास वासाय विमानमिव भूस्थितम् ॥ ४५ ॥
तां न संभावयामास वाचापि पवनंजयः । मानिनो ह्यवलेपं न विस्मरंति यतस्ततः ॥ ४६ ॥
विना शशांकं [2]श्यामेव सा विना पवनंजयम् । बाष्पान्धकारवदना तस्थावस्वास्थ्यभाजनम् ॥ ४७ ॥
पार्श्वद्वितयमाघ्नन्त्याः पर्यंकस्य मुहुर्मुहुः । तस्याश्च संवत्सरवद्द्राघीयस्योऽभवन्निशाः ॥ ४८ ॥
अनन्यमानसा जानुमध्यन्यस्तमुखांबुजा । भर्तुरालेखनैरेव व्यतीयाय दिनानि सा ॥ ४९ ॥
मुहुरालप्यमानापि सखीभिश्चाटुपूर्वकम् । [3]परपुष्टेव हेमन्ते न सा [4]तूष्णीकतां जहौ ॥ ५० ॥
एवं च काले व्रजति प्रह्लादनृपमन्यदा । दूतो राक्षसराजस्य समुपेत्यैवमब्रवीत् ॥ ५१ ॥
समं राक्षसनाथेन यादोनाथः स दुर्मतिः । वैरायतेऽद्य नितरां प्रणिपातममानयन् ॥ ५२ ॥
याचितः स नमस्कारमहंकारमहागिरिः । दोर्दण्डौ चक्षुषा पश्यन्निदं वदति [5]कद्वदः ॥ ५३ ॥
अरे को रावणो नाम तेन किं ननु सिध्यति । नाहमिन्द्रः कुबेरो वा न चास्मि नलकूबरः ॥ ५४ ॥
सहस्ररश्मिर्नाप्यस्मि न मरुत्तो न वा यमः । न च कैलासशैलोऽस्मि किं त्वस्मि वरुणो ननु ॥ ५५ ॥
देवताधिष्ठितै रत्नैर्यदि दर्पोऽस्य दुर्मतेः । तदायातु हरिष्यामि तद्दर्पं चिरसंचितम् ॥ ५६ ॥
इत्युक्त्या रावणः क्रुद्धः समरायाभ्यषेणयत् । अरौत्सीत्तत्पुरं चाब्धिवेलेव तटपर्वतम् ॥ ५७ ॥
पुरान्निःसृत्य वरुणो रणायारुणलोचनः । राजीवपुंडरीकाद्यैर्वृतः पुत्रैरयुध्यत ॥ ५८ ॥

---

१ सकुटुम्बः । २ रजनी । ३ कोकिला । ४ मौनम् । ५ कुत्सित वदतीति कद्वदः ।

तस्मिन्महति संग्रामे वीरैर्वरुणसूनुभिः । योधयित्वा च बध्ध्वा च निन्याते खरदूषणौ ॥ ५९ ॥
अभज्यत ततः सैन्यं राक्षसानामशेषतः । कृतार्थमानी वरुणोऽप्यविशन्नगरीं निजाम् ॥ ६० ॥
विद्याधरेन्द्रानाह्वातुं प्राहिणोद्रावणोऽपि हि । दूतान् प्रत्येकमप्यद्य भवते प्रेषितस्त्वहम् ॥ ६१ ॥
प्रह्लादोऽथ दशास्याय साहायककृते स्वयम् । यावच्चचाल तावत्तमुवाच पवनंजयः ॥ ६२ ॥
इहैव तिष्ठ तात त्वं दशग्रीवमनोरथम् । पूरयिष्याम्यहमपि तवास्मि तनयो ननु ॥ ६३ ॥
इत्युदीर्य सनिर्बंधं पितरं चानुमान्य सः । लोकं चाशेषमाभाष्य चचाल पवनंजयः ॥ ६४ ॥
श्रुत्वाञ्जना जनमुखात्पत्युर्यात्रामथोत्सुका । देवीव व्योमशिखरात् प्रासादादवरुह्य च ॥ ६५ ॥
तमीक्षितुमवष्टभ्य स्तंभं पांचालिकेव सा । निर्निमेषेक्षणा तस्थावस्वास्थ्यमथिताशया ॥ ६६ ॥
द्वारस्तंभनिषण्णाङ्गीं प्रतिपच्चन्द्रवत्कृशाम् । लुलितालकसंछन्नललाटां निर्विलेपनाम् ॥ ६७ ॥
नितंबन्यस्तविस्रस्तश्लथलंबिभुजालताम् । तांबूलरागरहितधूसराधरपल्लवाम् ॥ ६८ ॥
बाष्पांबुक्षालितमुखीमुन्मुखां पुरतः स्थिताम् । अञ्जनां व्यञ्जनहशं[3] ददर्श पवनो व्रजन् ॥ ६९ ॥
॥ त्रिभिर्विशेषकम् ॥
तां निर्ध्यायन्निदं दध्यौ सद्यः प्रह्लादनन्दनः । अहो निर्ह्रीत्वमेतस्या निर्भीत्वमपि दुर्धियः ॥ ७० ॥
अथवा ज्ञातमेतस्या दौर्मनस्यं पुरापि हि । उदूढा तु मया पित्रोराज्ञालंघनभीरुणा ॥ ७१ ॥

१ अस्वास्थ्येन मथित चित्त यस्याः सा । २ नितंबे न्यस्ता धारिता विस्रस्ता श्लथा लंबिनी भुजलता यया सा । ३ अंजनरहितनेत्राम् । ४ पश्यन् ।

पतित्वा पादयोस्तस्य साप्यूचे रचिताञ्जलिः । त्वया संभाषितः सर्वोऽप्यहं तु न मनागपि ॥ ७२ ॥
विज्ञप्यसे तथापि त्वं विस्मार्या न ह्यहं त्वया । पुनरागमनेनाशु पंथानः संतु ते शिवाः ॥ ७३ ॥
इति ब्रुवाणां तां दीनामहीनचरितामपि । ययाववगणय्यैव जयाय पवनञ्जयः ॥ ७४ ॥
[1]पत्यवज्ञावियोगार्ता गत्वान्तर्वेश्म भूतले । वारिच्छिन्नतला सिन्धुतटीव निपपात सा ॥ ७५ ॥
पवमानवदुत्पत्य तदा प्रह्लादनन्दनः । जगाम मानससरस्युवास च निशामुखे ॥ ७६ ॥
विकृत्य तत्र प्रासादमध्यास्त पवनञ्जयः । विद्याधराणां विद्यैव सर्वसिद्धिषु कामधुक् ॥ ७७ ॥
तत्र पर्यंकमारूढः सरःपरिसरावनौ । आर्तां प्रियवियोगेन चक्रवाकीं ददर्श सः ॥ ७८ ॥
पूर्वोपात्तामभुञ्जानां मृणाललतिकामपि । तप्यमानां हिमेनापि क्वथितेनेव वारिणा ॥ ७९ ॥
दूयमानां ज्योत्स्नयापि वह्न्यर्चिश्छटयेव ताम् । क्रन्दन्तीं करुणं प्रेक्ष्य स एवं पर्यचिंतयत् ॥ ८० ॥
सकलं वासरं पत्या रमन्ते चक्रवाकिकाः । न सोढुमीशते नक्तमपि तद्विरहं पुनः ॥ ८१ ॥
[2]उद्वाहतोऽपि या त्यक्ता भाषिता या न जातुचित् । आगच्छताप्यवज्ञाता परनारीव या मया ॥ ८२ ॥
आक्रांता दुःखभारेण पर्वतेनेव मूलतः । अदृष्टमत्संगसुखा सा कथं हा भविष्यति ॥ ८३ ॥
धिग्धिङ्ममाविवेकेन म्रियते सा तपस्विनी । तद्धत्यापातकेनाहं क्व गमिष्यामि दुर्मुखः ॥ ८४ ॥
इति चिन्तितमात्मीयमाख्यत्प्रहसिताय सः । स्वदुःखाख्यानपात्रं हि नापरः सुहृदं विना ॥ ८५ ॥
प्रोचे प्रहसितोऽप्येवं साध्वज्ञासीश्चिरादपि । नूनं विपद्यते साद्य सारसीव वियोगतः ॥ ८६ ॥

१ पत्युरवज्ञया वियोगेन च पीडिता । २ विवाहात् ।

आश्वासयितुमद्यापि सखे सा तव युज्यते । प्रियोक्त्या तामनुज्ञाप्य स्वार्थाय पुनरापतेः ॥ ८७ ॥
हृदेव सुहृदा तेन भावसंवादिनेरितः । ययावञ्जनसुन्दर्या वेश्मन्युत्पत्य मारुतः ॥ ८८ ॥
किञ्चित्तिरोहितस्तस्थौ द्वार्येव पवनंजयः । अग्रे भूत्वा प्रहसितः प्राविशच्च तदोकसि ॥ ८९ ॥
वेल्लन्तीमधिपर्यंकं तोयेऽल्पे शफरीमिव । पीड्यमानां ज्योत्स्नयापि हिमेनेव सरोजिनीम् ॥ ९० ॥
अन्तर्हृदयसंतापप्रस्फुटद्धारमौक्तिकाम् । उन्मुक्तदीर्घनिःश्वासतैरलालकमालिकाम् ॥ ९१ ॥
अधिनिषण्णनिःस्रस्तदोर्लग्नमणिकंकणाम् । वसन्ततिलकासख्याश्वास्यमानां मुहुर्मुहुः ॥ ९२ ॥
शून्यदत्तदृशं शून्यचित्तां काष्ठमयीमिव । ईक्षांचक्रे प्रहसितस्तत्र चाञ्जनसुन्दरीम् ॥ ९३ ॥
॥ चतुर्भिः कलापकम् ॥
अकस्मादभ्यंतर इव को नामेह समाययौ । इति भीतापि सा धैर्यमवलंब्येदमब्रवीत् ॥ ९४ ॥
अहो कस्त्वमिहायासीः परपुंसाथवा त्वया । अलं ज्ञातेन मेह स्थाः परनारीनिकेतने ॥ ९५ ॥
वसन्ततिलके दोष्णा विधूत्यैनं बहिः क्षिप । क्षपाकरविशुद्धास्मि नैनं द्रष्टुमपि क्षमा ॥ ९६ ॥
पवनंजयमुज्झित्वामुष्मिन्मम निकेतने । न प्रवेशाधिकारोऽस्ति कस्यापि किमुदीक्षसे ॥ ९७ ॥
नत्वा प्रहसितोऽवादीद्दिष्ट्या स्वामिनि वर्धसे । चिरादायातसोत्कंठपवनंजयसंगमात् ॥ ९८ ॥
तस्य मित्रं प्रहसितो मन्मथस्येव माधवः । अग्रेसरोऽहमायातोऽन्वायातं विद्धि च प्रियम् ॥ ९९ ॥

१ चाटुवचनेन । २ भावो मनोगताभिप्रायस्त सवदति तेन । ३ लुठंतीम् । ४ हृदय संतापेन प्रस्फुटति हारस्य मौक्तिकानि यस्यास्ताम् । ५ अलकाः केशाः ।

अंजनापि जगादैवं हसितां विधिनैव माम् । मा हसीस्त्वं प्रहसित क्षणोऽयं न हि नर्मणः ॥ १०० ॥
अथवा नैष दोषस्ते दोषो मत्पूर्वकर्मणाम् । कुलीनस्तादृशो भर्ता त्यजेन्मां कथमन्यथा ॥ १०१ ॥
पाणिग्रहात्प्रभृत्येव मुक्तायाः स्वामिना मम । द्वाविंशतिःसमा जग्मुर्जीवाम्यद्यापि पापिनी ॥ १०२ ॥
अथ संक्रांततद्दुःखप्राग्भारपवनंजयः । अन्तः प्रविश्य व्याहार्षीद्बाष्पगद्गदवागिदम् ॥ १०३ ॥
निर्दोषा दोषमारोप्य त्वमुद्वाहात्प्रभृत्यपि । अवज्ञातास्यविज्ञेन मयका विज्ञमानिना ॥ १०४ ॥
मद्दोषादीदृशीमागा दुःसहां दुर्दशां प्रिये । मृत्युं प्राप्तापि मद्भाग्यैः स्तोकान्मुक्तासि मृत्युना ॥ १०५ ॥
इत्युक्तवन्तं सा नाथमुपलक्ष्य त्रपावती । पर्यंकेषामवष्टभ्याभ्युत्तस्थौ विनमन्मुखा ॥ १०६ ॥
लतां हस्तीव हस्तेन दोष्णा वेलयितेन ताम् । आददानोऽधिपर्यंकं न्यषदत्पवनंजयः ॥ १०७ ॥
भूयस्तां पवनोऽवोचन्मयातिक्षुद्रबुद्धिना । निरागाः[3] खेदितासि त्वं तत्सहस्व प्रिये मम ॥ १०८ ॥
अवोचदञ्जनाप्येवं नाथ मा स्म ब्रवीरिदम् । सदैव तव दास्यस्मि क्षामणानुचिता मयि ॥ १०९ ॥
निर्जगाम प्रहसितो वसन्ततिलकाप्यथ । रहःस्थयोर्हि दम्पत्योर्न छेकाः पार्श्ववर्तिनः ॥ ११० ॥
रेमाते तत्र च स्वैरमञ्जनापवनञ्जयौ । विरराम रसावेशाच्चैकयामेव यामिनी ॥ १११ ॥
प्रभातां रात्रिमालोक्य तामूचे पवनञ्जयः । जयाय कांते यास्यामि ज्ञास्यन्ति गुरवोऽन्यथा ॥ ११२ ॥
खेदं मातः परं कार्षीः सुखं तिष्ठ सखीवृता । दशास्यकृत्यं संपाद्य यावदायामि सुन्दरि ॥ ११३ ॥
साप्युवाचेति तत्कृत्यं दोष्मतः सिद्धमेव ते । कृतार्थः शीघ्रमागच्छेर्जीवंतीं मां यदीच्छसि ॥ ११४ ॥

---

१ ईषा पर्यंकस्यावयवविशेषः । २ वलयमिवाचरितेन । ३ निरपराधा । ४ चतुराः । ५ पार्श्वस्थाः ।

अपरं च ऋतुस्नातास्म्यद्यैव यदि मे भवेत् । गर्भस्तत्त्वत्परोक्षेऽपवदेयुः पिशुना मयि ॥ ११५ ॥
पवनोऽप्याललापैवं शीघ्रमेष्यामि मानिनि । मय्यायाते कथं क्षुद्रावकाशो भविता त्वयि ॥ ११६ ॥
अथवा गृह्यतामेतन्मदागमनसूचकम् । मन्नामांकमंगुलीयं समये तत्प्रकाशयेः ॥ ११७ ॥
अर्पयित्वांगुलीयं स्वमुत्पत्य पवनंजयः । जगाम मानससरस्तीरस्थे शिबिरे निजे ॥ ११८ ॥
ततोऽपि सह सैन्येन नाकीव व्योमवर्त्मना । जगाम लंकानगरीं रावणं प्रणनाम च ॥ ११९ ॥
रावणोऽपि प्रविश्याथ पातालं पृतनान्वितः । प्रययौ प्रति वरुणं तरुणार्क इव त्विषा ॥ १२० ॥
इतश्च तद्दिने गर्भं बभाराञ्जनसुन्दरी । विशेषसुन्दरीभूतसर्वावयवशालिनी ॥ १२१ ॥
मुखमापांडुगंडश्रि श्यामवक्त्रौ पयोधरौ । गतिं नितांतमलसां नेत्रे च प्रसृतोज्ज्वले ॥ १२२ ॥
गर्भलक्ष्माणि चान्यानि तस्या व्यक्तानि वर्ष्मणि । दृष्ट्वा केतुमती श्वश्रूः साधिक्षेपमदोऽवदत् ॥ १२३ ॥
॥ युग्मम् ॥

हले किमिदमाचारीः कुलद्वयकलंककृत् । देशान्तरगते पत्यौ पापे यैद्भुदरिण्यभूः ॥ १२४ ॥
स्वपुत्रे त्वदवज्ञायामज्ञाय्यज्ञानदोषिता । इयच्चिरं त्वमस्माभिर्न हि ज्ञातासि पांसुला ॥ १२५ ॥
एवं निर्भर्त्सिता श्वश्र्वा साश्रुरञ्जनसुन्दरी । पत्युरागमचिह्नं तदंगुलीयमदर्शयत् ॥ १२६ ॥

१ विशेषेण सुन्दरीभूताः सर्वावयवास्तैः शालिनी । २ प्रसृते च त उज्ज्वले चेति समासः । ३ शरीरे । ४ गर्भिणी । ५ तव तिरस्कारविषये मया स्वपुत्रेऽज्ञानदोषित्वमज्ञायि ज्ञातम् मम पुत्रस्तव तिरस्कारं करोति तत्र पुत्रस्यैव दोषो मया पुरा ज्ञात आसीदिति तात्पर्यम् ।

सा लज्जानम्रमुख्येवं श्वश्र्वा भूयोऽप्यभर्त्स्यत । यस्तेऽग्रहीन्न नामापि कथं ते तेन संगमः ॥ १२७ ॥
अंगुलीयकमात्रेण प्रतारयसि नः कथम् । प्रतारणाप्रकारान् हि बहूञ्जानंति पांसुलाः ॥ १२८ ॥
मद्गृहादद्य निर्गच्छ गच्छ स्वच्छंदचारिणि । पितुर्वेश्मनि मात्र स्थाः स्थानमेतन्न हीदृशम् ॥ १२९ ॥
तर्जयित्वाञ्जनामेवं नेतुं पितृनिकेतने । आदिक्षदारक्षनरान्निःकृपा राक्षसीव सा ॥ १३० ॥
तां च ते यानमारोप्य वसन्ततिलकान्विताम् । महेन्द्रनगरोपान्ते नीत्वामुञ्चन्नुदश्रवः ॥ १३१ ॥
तां मातृवन्नमस्कृत्य क्षमयित्वा च ते ययुः । स्वामिवत्स्वाम्यपत्येऽपि सेवकाः समवृत्तयः ॥ १३२ ॥
तद्दुःखदुःखित इव तदा चास्तमगाद्रविः । सन्तः सतां न विपदं विलोकयितुमीश्वराः ॥ १३३ ॥
घूकानां घोरघूत्कारैः फेत्कारैः फेरुयोषिताम् । क्रंदितैर्वृकवृन्दानां श्वाविधां विविधैः स्वनैः ॥ १३४ ॥
तुमुलैः पिंगलानां च संगीतैरिव रक्षसाम् । स्फुटत्कर्णेव सा कष्टं तां जाग्रत्यनयन्निशाम् ॥ १३५ ॥
॥ युग्मम् ॥
प्रातरुत्थाय सा दीना शालीनेव ह्रिया शनैः । ययौ पितृगृहद्वारे भिक्षुकीवापरिच्छदा ॥ १३६ ॥
दृष्ट्वा ससंभ्रमस्तां च प्रतीहारोऽनुयुज्य च । अवस्थां तादृशीं सख्याख्यातां राज्ञे व्यजिज्ञपत् ॥ १३७ ॥
लज्जानतश्याममुखो राजाप्येवमचिन्तयत् । अचिन्त्यं चरितं स्त्रीणां ही विपाको विधेरिव ॥ १३८ ॥
इयं कुलकलंकाय कुलटा गृहमागता । अञ्जनाञ्जनलेशोऽपि दूषयत्यंशुकं शुचि ॥ १३९ ॥
इति चिन्ताप्रपन्नं तमप्रसन्नीभवन्मुखः । प्रसन्नकीर्तिस्तनयो नयनिष्ठोऽब्रवीदिति ॥ १४० ॥

---

१ श्वावित् भाषाया 'शाहुडी' इति । २ नकुलानाम् । ३ निर्लज्जा । ४ पृष्ट्वा ।

द्रुतं निर्वास्यतामेषा दूषितं ह्यनया कुलम् । अहिदष्टांगुलिः किं न छिद्यते बुद्धिशालिना ॥ १४१ ॥
अथावोचन्महोत्साहो नाम मंत्रीति नृपतिम् । श्वश्रूदुःखे दुहितॄणां शरणं शरणं पितुः ॥ १४२ ॥
किञ्च केतुमती श्वश्रूर्निर्दोषामप्यमूं प्रभो । निर्वासयेदपि क्रूरा दोषमुत्पाद्य कंचन ॥ १४३ ॥
व्यक्तिर्यावन्नवेद्दोषादोषयोस्तावदत्र हि । प्रच्छन्नं पाल्यतामेषा स्वपुत्रीति कृपां कुरु ॥ १४४ ॥
राजापीत्यवदद्वश्रूः सर्वत्र भवतीदृशी । ईदृशं चरितं तु स्याद्वधूनां न हि कुत्रचित् ॥ १४५ ॥
किं च संशृणमहेऽग्रेऽपि वेष्येयं पवनस्य यत् । गर्भः संभाव्यतेऽमुष्याः पवनादेव तत्कथम् ॥ १४६ ॥
सर्वथा दोषवत्येषा साधु निर्वासिता तया । निर्वास्यतामितोऽपि द्राक् पश्यामस्तन्मुखं न हि ॥ १४७ ॥
इत्थं राजाज्ञया द्वाःस्थो निरवासयदङ्गनाम् । जनैरपि कृताक्रंदैर्दीनास्यैः कष्टमीक्षिताम् ॥ १४८ ॥
क्षुधिता तृषिता श्रान्ता निःश्वसंत्यश्रुवर्षिणी । दर्भविद्धपदासृग्भी[1] रंजयंती महीतलम् ॥ १४९ ॥
पदे पदे प्रस्खलंती विश्राम्यंती तरौ तरौ । सह सख्याञ्जनाचालीद्रोदयंती दिशोऽपि हि ॥ १५० ॥
यत्र यत्र पुरे ग्रामे सागच्छत्तत्र तत्र च । पूर्वायातनृपपुंभिर्निषेधान्नासदत् स्थितिम् ॥ १५१ ॥
पर्यटन्ती तु सा प्राप कामप्येकां महाटवीम् । गिरिकुंजे तरोर्मूले निषद्य विललाप च ॥ १५२ ॥
अहो मे मन्दभाग्याया गुरूणामविचारतः । अग्रे दंडोऽभवत्पश्चादपराधविवेचनम् ॥ १५३ ॥
साधु केतुमति कुलकलंको रक्षितस्त्वया । त्वयापि संबन्धिभयात्तात साधु विचारितम् ॥ १५४ ॥
दुःखितानां हि नारीणां माताश्वासनकारणम् । पतिछंदजुषा[2] मातस्त्वयाप्यहमुपेक्षिता ॥ १५५ ॥

१ शोणितैः । २ पतीच्छानुवर्तिनी ।

॥३४॥

भ्रातर्दोषोऽपि नास्त्येव ताते जीवति ते ननु । नाथ त्वयि च दूरस्थे जज्ञे सर्वोऽप्यरिर्मम ॥ १५६ ॥
सर्वथा स्त्री विना नाथं मैकाहमपि जीवतु । यथाहमेका जीवामि मन्दभाग्यशिरोमणिः ॥ १५७ ॥
विलपंत्यञ्जना सख्या निन्ये संबोध्य चाग्रतः । ददर्शान्तर्गुहं ध्यानस्थं चामितगतिं मुनिम् ॥ १५८ ॥
चारणश्रमणं तं च प्रणम्य विनयेन ते । निषेदतुः पुरो भूमौ सोऽपि ध्यानमपारयत् ॥ १५९ ॥
मनश्चिंतितकल्याणमहारामैकसारणिम् । धर्मलाभाशिषं सोऽदात्करमुन्नम्य दक्षिणम् ॥ १६० ॥
नमस्कृत्य पुनर्भक्त्या वसन्ततिलका तु सा । सर्वमप्यञ्जनादुःखमाचख्यौ मूलतोऽपि हि ॥ १६१ ॥
कोऽस्या गर्भेऽभवत्केन कर्मणा चेदृशीं दशाम् । संप्राप्तैषेति तत्सख्या पृष्टः स मुनिरब्रवीत् ॥ १६२ ॥
अस्यैव जंबूद्वीपस्य क्षेत्रे भरतनामनि । मन्दरे नगरे नाम्ना प्रियनंदीत्यभूद्वणिक् ॥ १६३ ॥
जयानाम्न्यां च जायायां तस्याजायत नन्दनः । दमयन्तः प्रियदमः कलानां निधिरिन्दुवत् ॥ १६४ ॥
क्रीडन् सोऽन्येद्युरुद्याने स्वाध्यायध्यानतत्परान् । ददर्श साधूंस्तेभ्यश्च धर्मं शुश्राव शुद्धधीः ॥ १६५ ॥
सम्यक्त्वं नियमांश्चाथ जग्राह विविधानसौ । यथोचितं च साधुभ्यो ददौ दानमनिन्दितम् ॥ १६६ ॥
तपःसंयमनिष्ठोऽसौ विपद्य क्रमयोगतः । अभूत्कल्पे द्वितीयस्मिन्नमरः परमर्द्धिकः ॥ १६७ ॥
च्युत्वा ततो जंबूद्वीपे मृगांकनगरेशितुः । प्रियंगुलक्ष्म्यां पुत्रोऽभूद्धरिचन्द्रमहीपतेः ॥ १६८ ॥
सिंहचन्द्र इति ख्यातो जैनं धर्मं प्रपद्य सः । विपद्य क्रमयोगाच्च देवभूयमुपेयिवान् ॥ १६९ ॥
च्युत्वा चात्रैव वैताढ्ये नगरे वारुणेऽभवत् । सुकंठराजकनकोदर्योस्तुक् सिंहवाहनः ॥ १७० ॥

---

१ स्वर्गम् । २ पुत्रः ।

भुक्त्वा स सुचिरं राज्यं तीर्थे श्रीविमलप्रभोः । लक्ष्मीधरमुनेः पादमूले व्रतमुपाददे ॥ १७१ ॥
दुस्तपं स तपस्तप्त्वा मृत्वाभूल्लान्तके सुरः । च्युत्वा ततोऽस्यास्त्वत्सख्या उदरे समवातरत् ॥ १७२ ॥
गुणानामालयश्चायं दोष्मान् विद्याधरेश्वरः । पुत्रश्चरमदेहोऽस्या अनवद्यो भविष्यति ॥ १७३ ॥
अन्यच्च कनकपुरे नगरेऽभून्नरेश्वरः । नामतः कनकरथो महारथशिरोमणिः ॥ १७४ ॥
पत्न्यौ तस्य च कनकोदरी लक्ष्मीवतीति च । अत्यंतश्राविका तत्र लक्ष्मीवत्यभवत्सदा ॥ १७५ ॥
गृहचैत्ये रत्नमयं जिनबिंबं विधाय सा । अपूजयदवंदिष्ट प्रत्यहं कालयोर्द्वयोः ॥ १७६ ॥
मात्सर्यात्कनकोदर्या हृत्वार्हत्प्रतिमा तु सा । चिक्षिपेऽवकरस्यान्तरपवित्रे हताशया ॥ १७७ ॥
जयश्रीर्नाम गणिनी विहरन्त्यागता तदा । तद्दृष्ट्वा तामुवाचैवमकार्षीः किमिदं शुभे ॥ १७८ ॥
भगवत्प्रतिमामत्र प्रक्षिपन्त्या त्वया कृतः । अनेकभवदुःखानामात्मायं हंत भाजनम् ॥ १७९ ॥
इत्युक्ता सानुतापा सा गृहीत्वा प्रतिमां ततः । प्रमृज्य क्षमयित्वा च यथास्थानं न्यवेशयत् ॥ १८० ॥
तदादिसम्यक्त्वधरा जैनं धर्मं प्रपाल्य च । काले विपद्य सौधर्मे कल्पे सा देव्यजायत ॥ १८१ ॥
च्युत्वा ततो महेन्द्रस्याभूत्सुतेयं सखी तव । अस्यास्तदर्हदर्चाया दुःस्थानक्षेपजं फलम् ॥ १८२ ॥
अस्यास्तस्मिन् भवे जामिस्त्वमभूस्तस्य कर्मणः । अनुमंत्री च तत्पाकमनुभुंक्षेऽनया सह ॥ १८३ ॥
भुक्तप्रायमिदं चास्यास्तस्य दुःकर्मणः फलम् । गृह्यतां जिनधर्मस्तच्छुभोदर्को भवे भवे ॥ १८४ ॥

१ अवकरः सकरः प्रमार्जन्यैकीकृत तृणादि । २ हतचित्ता । ३ अर्चा प्रतिमा । ४भगिनी ।५ शुभ उदर्क उत्तरकालो यस्य सः ।

आयातो मातुलोऽकस्मादेतां नेता स्ववेश्मनि । मेलकश्चाचिरात्पत्या सहैतस्या भविष्यति ॥ १८५ ॥
एवमुक्त्वार्हते धर्मे स्थापयित्वा च ते उभे । समुत्पपात नभसा स मुनीन्द्रः खगेन्द्रवत् ॥ १८६ ॥
अथ पुच्छछटाच्छोटैः स्फोटयन्तमिवावनिम् । बूत्कारपूर्णदिक्कुंजं कुञ्जरासृक्कराजितम् ॥ १८७ ॥
दीपायमाननयनं वज्रकन्दाभदंष्ट्रिकम् । क्रकचक्रूरदशनं ज्वालासोदरकेसरम् ॥ १८८ ॥
लोहांकुशोपमनखं शिलासदृगुरःस्थलम् । पञ्चाननयुवानं ते समायांतमपश्यताम् ॥ १८९ ॥ त्रिभिर्विशेषकम्
ततो वेपथुमत्यौ ते विविक्षू इव भूतलम् । कांदिशीके हरिणिके इव यावदतिष्ठताम् ॥ १९० ॥
मणिचूलाभिधस्तावद्गंधर्वस्तद्गुहाधिपः । विकृत्य शारभं रूपं तं पंचास्यमनाशयत् ॥ १९१ ॥
संहृत्य शारभं रूपं स्वं रूपं पतिपद्य च । तयोः प्रमोदाय जगौ [3]सप्रियोऽर्हद्गुणस्तुतिम् ॥ १९२ ॥
तेन चामुकसान्निध्ये गुहायां तत्र सुस्थिते । मुनिसुव्रतदेवार्चा स्थापयित्वार्चतः स्म ते ॥ १९३ ॥
अन्येद्युः सुषुवे तत्र सिंही सिंहमिवोत्कटम् । कुलिशांकुशचक्रांकपादं तनयमञ्जना ॥ १९४ ॥
तस्याश्च सूतिकर्माणि वसन्ततिलकाकरोत् । स्वयं समाहृतैर्हर्षवशादेधोजलादिभिः ॥ १९५ ॥
आरोप्य सुतमुत्संगे दुःखिताञ्जनसुन्दरी । उदश्रुवदनारोदीद्रोदयन्तीव तां गुहाम् ॥ १९६ ॥
महात्मन्नत्र विपिने तव जातस्य कीदृशम् । जन्मोत्सवं करोम्येषा वराकी पुण्यवर्जिता ॥ १९७ ॥
एवं तां रुदतीं प्रेक्ष्य समुपेत्य च खेचरः । प्रतिसूर्यो मधुरगीरपृच्छद्दुःखकारणम् ॥ १९८ ॥

---

१ गजशोणितेन भयकरम् । २ अष्टापदरूपम् । ३ भार्यासहितः ।

अथाविवाहादापुत्रजन्माचख्यावशेषतः । अंजनाया दुःखहेतुं बाष्पायितमुखी सखी ॥ १९९ ॥
सद्यो रुदन् सोऽप्यवादीदहं हनुपुरेश्वरः । एषोऽस्मि सुन्दरीमालाकुक्षिजूश्चित्रभानुजः ॥ २०० ॥
भ्राता मानसवेगाख्यस्त्वज्जनन्याश्च बालिके । दिष्ट्या त्वां दृष्टवानस्मि जीवन्तीमाश्वसिह्यतः ॥ २०१ ॥

॥ युग्मम् ॥

तं मातुलं विदित्वा साप्यरोदीदधिकाधिकम् । पुनर्नवीभवेत्प्रायो दुःखमिष्टावलोकनात् ॥ २०२ ॥
रुदंतीं वारयित्वा तां प्रतिसूर्यः सहागतम् । सूनोर्जन्मादि पप्रछ दैवज्ञमथ सोऽवदत् ॥ २०३ ॥
भाव्यवश्यं महाराजो भवे चात्रैव सेत्स्यति । शुभग्रहबले लग्ने जातोऽयं पुण्यभाक् शिशुः ॥ २०४ ॥
तथाहि सुतिथिरियं चैत्रस्य बहुलाष्टमी । नक्षत्रं श्रवणं स्वामी वासरस्य विभावसुः ॥ २०५ ॥
आदित्यो वर्तते मेषे भवनं तुंगमाश्रितः । चन्द्रमा मकरे मध्ये भवने समवस्थितः ॥ २०६ ॥
लोहितांगो वृषे मध्ये मध्ये मीने विधोः सुतः । कुंलीरे धिषणोऽत्युच्चैरध्यास्य भवनं स्थितः ॥ २०७ ॥
मीने दैत्यगुरुस्तुंगस्तस्मिन्नेव शनैश्चरः । मीनलग्नोदये ब्रह्मयोगे सर्वमिदं शुभम् ॥ २०८ ॥

॥ चतुर्भिः कलापकम् ॥

प्रतिसूर्योऽथ यामेयीं ससखीं सात्मजां च ताम् । विमानवरमारोप्य प्रतस्थे स्वपुरं प्रति ॥ २०९ ॥
विमाने लंबमानोच्चरत्नप्रालंबकिंकिणीः । जिघृक्षुर्मातुरुत्संगादुत्पपाताथ बालकः ॥ २१० ॥

१ विवाहादारभ्य पुत्रजन्मपर्यन्तम् । २ सिद्धिंभव्यति । ३ कृष्णाष्टमी । ४ मंगलः । ५ कर्कराशौ धिषणो बृहस्पतिः । ६ भगिनीपुत्रीम् । ७ ग्रहीतुमिच्छुः ।

पपात च गिरेर्मूर्ध्नि व्योम्नः पविरिव च्युतः । तत्पातनिर्घातवशात् स गिरिः कणशोऽभवत् ॥ २११ ॥
आजघ्ने हृदयं सद्यः पाणिनाञ्जनसुन्दरी । दरीरपि प्रतिरवै रोदयंती रुरोद च ॥ २१२ ॥
प्रतिसूर्योऽनुपत्याशु भागिनेय्यास्तमर्भकम् । अक्षतांगमुपादायार्पयन्नष्टनिधानवत् ॥ २१३ ॥
प्रतिसूर्यो विमानेन मनोवेगेन तद्युतः । ययौ पुरे हनुरुहे सद्यः कृतमहोत्सवे ॥ २१४ ॥
नीत्वा चोत्तारयामास स्ववेश्मन्यंजनां मुदा । कुलदेवीमिवायातां तद्बुद्धान्तोऽप्यपूजयत् ॥ २१५ ॥
पुरे हनुरुहे यस्माज्जातमात्रोऽयमाययौ । तत् सूनोर्मातुलश्चक्रेऽभिधानं हनुमानिति ॥ २१६ ॥
यच्छैलश्चूर्णितोऽनेन पतितेन विमानतः । ततः श्रीशैल इत्याख्यां तस्यान्यामपि सोऽकरोत् ॥ २१७ ॥
हनुमानप्यवर्धिष्ट तत्र क्रीडन् यथासुखम् । राजहंसार्भक इव मानसांभोजिनीवने ॥ २१८ ॥
दोषोऽध्यारोपितः श्वश्र्वा कथं नामोत्तरिष्यति । सदैव चिन्तयाताम्यदन्तःशल्येव चाञ्जना ॥ २१९ ॥
इतश्च पवनः सन्धिं विधाय खरदूषणौ । वरुणान्मोचयामास तोषयामास रावणम् ॥ २२० ॥
ततश्च रावणो लंकां जगाम सपरिग्रहः । पवनोऽपि तमापृच्छ्य स्वमेव पुरमाययौ ॥ २२१ ॥
प्रणम्य पितरौ तत्राञ्जनावासगृहं ययौ । तच्चानञ्जनमद्राक्षीज्जतज्योत्स्नमिवोडुपम् ॥ २२२ ॥
क्वाञ्जना सा नयनयोरमृताञ्जनदर्शना । मत्प्रेयसीति तत्रस्थामेकां पप्रच्छ च स्त्रियम् ॥ २२३ ॥
साप्याख्यत्त्वयि यात्रायां गतेऽहस्सु कियत्स्वपि । निर्वासिता केतुमत्या गर्भसंभवदोषतः ॥ २२४ ॥
महेन्द्रनगरासन्ने सा नीत्वारक्षपूरुषैः । अरण्ये मुमुचे पापैर्हरिणीव भयाकुला ॥ २२५ ॥

१ गुहाः । २ तस्यातःपुरम् । ३ अंजनारहितम् ।

इति श्रुत्वाथ पवनो ययौ पवनरंहसा । पारापत इव प्रेयस्युत्कः[1] श्वशुरपत्तनम् ॥ २२६ ॥
प्रियामपश्यंस्तत्रापि पप्रच्छैकां स योषितम् । इहांजना प्रेयसी मे किमायाताथवा न हि ॥ २२७ ॥
साचख्याविह सायासीद्वसन्ततिलकान्विता । परं निर्वासिता पित्रोत्पन्नदौःशील्यदोषतः ॥ २२८ ॥
पविनेवाहतस्तेन वचसा पवनंजयः । प्रियामन्वेष्टुमभ्राम्यद्भृशं शैलवनादिषु ॥ २२९ ॥
तत्प्रवृत्तिं न च प्राप शापभ्रष्ट इवामरः । विषण्णः स जगादैवं मित्रं प्रहसितं निजम् ॥ २३० ॥
सखे गत्वा शंस पित्रोर्भ्राम्यतापि महीमिमाम् । मयाद्य यावदालोकि न क्वाप्यंजनसुन्दरी ॥ २३१ ॥
पुनर्गवेषयिष्यामि तामरण्ये तपस्विनीम् । द्रक्ष्यामि चेत्साधु तर्हि नो चेद्वेक्ष्यामि[2] पावकम् ॥ २३२ ॥
एवमुक्तः प्रहसितो गत्वादित्यपुरे द्रुतम् । प्रह्लादकेतुमत्योस्तत् कथयामास वाचिकम् ॥ २३३ ॥
श्रुत्वा केतुमती तच्च ग्रावेणेव हृदये हता । मूर्छिता न्यपतद्भूमौ संज्ञां लब्ध्वेत्युवाच च ॥ २३४ ॥
स किं त्वया प्रहसित व्यापत्तौ कृतनिश्चयः । प्रियमित्रं वने मुक्त एकाकी कठिनाशयः ॥ २३५ ॥
अथवा किं मया सापि निर्दोषा परमार्थतः । अविमृष्य विधायिन्या पापिन्या निरवास्यत ॥ २३६ ॥
लब्धं मयात्रैव साध्व्या दोषारोपणजं फलम् । अत्युग्रपुण्यपापानामिहैव ह्याप्यते फलम् ॥ २३७ ॥
एवं रुदंतीं प्रह्लादस्तां निवार्य कथंचन । चचाल सबलः सूनुमन्वेष्टुं स इवांजनाम् ॥ २३८ ॥
सर्वविद्याधरेन्द्राणामाप्तानां चांतिके नरान् । अंजनापवनान्वेषहेतवे प्रजिघाय सः ॥ २३९ ॥
सह विद्याधरैः सूनुं स्नुषां चालोकयन् स्वयम् । प्रादुर्भूतत्वरो[4] भ्राम्यन् सोऽगाद्भूतवनं[3] वनम् ॥ २४० ॥

१ प्रियायामुत्सुकः । २ प्रवेश करिष्यामि । ३ दृषदा । ४ प्रादुर्भूता त्वरा यस्य सः ।

पवनोऽत्रान्तरे तत्र विरचय्य चितां वने । ज्वलनं ज्वालयामास प्रह्लादस्तं ददर्श च ॥ २४१ ॥
स्थित्वोपचितं पवनः प्रोचे हे वनदेवताः । विद्याधरेन्द्रप्रह्लादकेतुमत्योः सुतोऽस्म्यहम् ॥ २४२ ॥
महासत्यञ्जना नाम पत्नी मे सा च दुर्धिया । निर्दोषापि मयोद्वाहात्प्रभृत्यपि हि खेदिता ॥ २४३ ॥
तां परित्यज्य यात्रायां चलितः स्वामिकार्यतः । दैवाज्ज्ञात्वा तामदोषामुत्पत्य पुनरागमम् ॥ २४४ ॥
रमयित्वा च तां स्वैरमभिज्ञानं समर्प्य च । पितृभ्यामपरिज्ञातः पुनः कटकमापतम् ॥ २४५ ॥
जातगर्भा च सा कान्ता मद्दोषाद्दोषशंकिभिः । निर्वासिता मे गुरुभिः क्वाप्यस्तीति न बुध्यते ॥ २४६ ॥
साम्रेऽधुना च निर्दोषा संप्राप्ता दारुणां दशाम् । ममैवाज्ञानदोषेण धिग्धिक् पतिमपंक्तिम् ॥ २४७ ॥
मया भ्रान्त्वाखिलां पृथ्वीं सम्यग्मार्गयतापि हि । न सासा मंदभाग्येन रत्नं रत्नाकरे यथा ॥ २४८ ॥
तदद्य स्वां तनुमिमां जुहोम्यत्र हुताशने । जीवतो मे यावज्जीवं दुःसहो विरहानलः ॥ २४९ ॥
यदि पश्यथ मे कांतां ज्ञापयध्वं तदा ह्यदः । त्वद्वियोगात्तव पतिः प्रविवेश हुताशने ॥ २५० ॥
इत्युक्त्वा तत्र चित्यायां दीप्यमाने हविर्भुजि । झंपां प्रदातुं पवनः प्रोत्पपात नभस्तले ॥ २५१ ॥
श्रुततद्वचनो वेगात् प्रह्लादोऽप्यतिसंभ्रमी । वक्षःस्थलोपपीडं तं स्वबाहुभ्यामधारयत् ॥ २५२ ॥
मृत्योः प्रियवियोगार्तिप्रतीकारस्य संप्रति । को विघ्नोऽयं ममेत्युच्चैरुवाच पवनञ्जयः ॥ २५३ ॥
प्रह्लादोऽप्यब्रवीत्साश्रुरेष पापोऽस्मि ते पिता । निर्दोषाया यः स्नुषाया निर्वासनमुपैक्षत ॥ २५४ ॥
अविमृश्य कृतं तावत्त्वन्मात्रैवैकमादितः । द्वितीयं मा कृथास्त्वं तु स्थिरीभव सुधीरसि ॥ २५५ ॥

---

१ चितासमीपम् ।

स्नुषान्वेषणहेतोश्चादिष्टाः संति सहस्रशः । विद्याधरा मया वत्सागमयस्व तदागमम् ॥ २५६ ॥
अत्रांतरे तत्प्रहिताः केऽपि विद्याधरोत्तमाः । गवेषयन्तः पवनाञ्जने हनुपुरं ययुः ॥ २५७ ॥
प्रतिसूर्याञ्जनयोस्तेऽञ्जनाविरहदुःखतः । पवनस्याग्निप्रवेशप्रतिज्ञामाचचक्षिरे ॥ २५८ ॥
दुःश्रवं तद्वचः श्रुत्वा पीत्वा विषमिवांजना । हा हतास्मीति जल्पंती पपात भुवि मूर्छिता ॥ २५९ ॥
आसिक्ता चन्दनांभोभिस्तालवृन्तैश्च वीजिता । लब्धसंज्ञा समुत्थाय सा रुरोदेति दीनगीः ॥ २६० ॥
पतिव्रताः पतिशोकात् प्रविशंति हुताशने । तासां विना हि भर्तारं दुःखाय खलु जीवितम् ॥ २६१ ॥
नारीसहस्रभोक्तॄणां भर्तॄणां श्रीमतां पुनः । क्षणिकः प्रेयसीशोकस्तत्कुतोऽग्निप्रवेशनम् ॥ २६२ ॥
विपरीतमिदं जज्ञे त्वयि वह्निप्रवेशनि । विरहेऽपि मयि पुनर्हा जीवन्त्यामियच्चिरम् ॥ २६३ ॥
महासत्त्वस्य तस्याल्पसत्त्वायाश्च ममान्तरम् । उपलब्धमिदं नीलकाचयोरिव[1] संप्रति ॥ २६४ ॥
न मे श्वशुरयोर्दोषो दोषः पित्रोर्न चाप्ययम् । ममैव मन्दभाग्यायाः कर्मदोषोऽयमीदृशः ॥ २६५ ॥
रुदन्तीं बोधयित्वा तां प्रतिसूर्यः सनन्दनाम् । विमानवरमारोप्य पवनान्वेषणे ययौ ॥ २६६ ॥
स भ्राम्यन् प्राप तत्रैव वने भूतवनाभिधे । दूरादपि प्रहसितेनैक्षांचक्रे च साश्रुणा ॥ २६७ ॥
साञ्जनं तं समायांतमारात् प्रहसितः स तु । आख्यत्प्रह्लादपवनञ्जययोर्जयपूर्वकम् ॥ २६८ ॥
ततो विमानादुत्तीर्य प्रतिसूर्योऽञ्जनापि च । प्रह्लादं नेमतुर्दूराद्भक्त्या भून्यस्तमस्तकौ ॥ २६९ ॥
प्रतिसूर्यं परिष्वज्य पौत्रमंके निवेश्य च । प्रह्लादो जातसंह्लादो जगादैवं ससंभ्रमः ॥ २७० ॥

१ नीलमणेः काचस्य च ।

मज्जन्तं व्यसनांभोधौ मामद्य सकुटुंबकम् । समुद्धरंस्त्वमेवासि बंधुः संबंधिनां धुरि ॥ २७१ ॥
मद्वंशपर्वसूतेयं शाखासंतानकारणम् । स्नुषा त्यक्ता विना दोषं साध्वियं रक्षिता त्वया ॥ २७२ ॥
सद्यो व्यसनवेलाया न्यवर्तत पयोधिवत् । प्रशांतशोकज्वलनो मुदितः पवनोऽपि हि ॥ २७३ ॥
विद्यासामर्थ्यतस्तत्र सर्वविद्याधरेश्वराः । महान्तमुत्सवं चक्रुरानंदाब्धिनिशाकरम् ॥ २७४ ॥
पुरं हनुरुहं जग्मुस्ततः सर्वेऽपि ते मुदा । विमानैर्विदधानाः स्वैर्दिवं ज्योतिष्मतीमिव ॥ २७५ ॥
महेन्द्रोऽप्याययौ तत्र समं मानसवेगया । सा च केतुमती देवी सर्वेऽप्यन्ये च बांधवाः ॥ २७६ ॥
विद्याधरेन्द्रैर्विदधे मिथः संबन्धिबन्धुभिः । पूर्वोत्सवादप्यधिकस्तत्रापि हि महोत्सवः ॥ २७७ ॥
ततश्चान्योन्यमापृच्छ्य सर्वे स्वं स्वं पुरं ययुः । तत्रैव पवनस्तस्थावञ्जनाहनुमद्युतः ॥ २७८ ॥
हनुमान् ववृधे तत्र पितुः सह मनोरथैः । कलाश्च जगृहे सर्वा विद्याश्च समसाधयत् ॥ २७९ ॥
नागराजायतभुजः शस्त्रशास्त्रविचक्षणः । क्रमाच्च यौवनं प्राप हनुमान् भानुमांस्त्विषा ॥ २८० ॥
इतश्चामर्षणप्रष्ठो रावणः संधिदूषणम् । उत्पाद्य वरुणं जेतुं प्रतस्थे स्थेम[2]पर्वतः ॥ २८१ ॥
दूताहूतास्ततश्चेयुः सर्वे विद्याधरेश्वराः । कटकं[3] तस्य कुर्वंतो वैताढ्यकटकोपमम् ॥ २८२ ॥
पवनप्रतिसूर्यौ तौ तत्र यावत्प्रचेलतुः । इत्यूचे हनुमांस्तावदवष्टंभैकसानुमान् ॥ २८३ ॥
इहैव तिष्ठतं तातौ जेष्याम्यहमपि द्विषः । प्रहरेद्बाहुना को हि तीक्ष्णे प्रहरणे सति ॥ २८४ ॥
बालत्वान्नानुकंप्योऽस्मि युष्मत्कुलजन्मनाम् । पौरुषावसरे प्राप्ते न प्रमाणं वयः खलु ॥ २८५ ॥

---

१ क्रोधवत्सु श्रेष्ठः । २ स्थैर्यपर्वतः । ३ सैन्यम् । ४ गिरिमध्यभागः कटकम् ।

एवं तावतिनिर्बंधात् प्रतीक्ष्यापृच्छ्य चोच्चकैः । ताभ्यां च चुंबितो मूर्ध्नि कृतप्रस्थानमंगलः ॥ २८६ ॥
महासामंतसेनानीसेनाशतसमावृतः । प्रययौ रावणस्कंधावारे दुर्वारविक्रमः ॥ २८७ ॥ युग्मम् ॥
हनुमंतं समायातं दृष्ट्वा जयमिव स्वयम् । प्रणमंतं मुदा स्वांके निदधे दशकन्धरः ॥ २८८ ॥
अन्यर्युर्वरुणपुर्यास्तस्थौ युद्धाय रावणः । वरुणो वारुणेयाश्च दोष्मन्तो निर्ययुः शतम् ॥ २८९ ॥
अभ्येत्य योधयामासू रावणं वरुणात्मजाः । सुग्रीवाद्यैः समं वीरैर्युयुधे वरुणोऽपि हि ॥ २९० ॥
महौजसो वारुणयोऽरुणाक्षा दशकन्धरम् । जात्यश्वान इव क्रोडं खेदयामासुराहवे ॥ २९१ ॥
अत्रांतरे च हनुमान् दारुणो वरुणात्मजान् । कुंजरान् केशरीवैत्यायोधयत् क्रोधदुर्धरः ॥ २९२ ॥
विद्यासामर्थ्यतोऽस्तम्भाद्वारुणींस्तान् बबंध च । पशूनिव क्रुधा रक्तहनुको हनुमानथ ॥ २९३ ॥
तान् दृष्ट्वा वरुणः क्रुद्धोऽभ्यधाविष्ट हनूमते । सुग्रीवप्रभृतीन् धुन्वन्दंती मार्गतरूनिव ॥ २९४ ॥
रावणोऽभ्यापतंतं तं नदीरयमिवाचलः । अंतरा स्खलयामास वर्षन् विशिखैर्धोरणीम् ॥ २९५ ॥
वृषभो वृषभेणेव कुंजरेणेव कुंजरः । वरुणो रावणेनोच्चैः क्रोधांधो युयुधे चिरम् ॥ २९६ ॥
सर्वौजसाकुलीकृत्य वरुणं रावणश्छली । उत्पत्येन्द्रमिवाबभ्रात् सर्वत्र बलवच्छलम् ॥ २९७ ॥
ततो जयजयारावैर्मुखरीकृतदिङ्मुखः । स्कंधावारं पृथुस्कंधो जगाम दशकंधरः ॥ २९८ ॥
रावणो वरुणं तत्र सह पुत्रैर्वशंवदम् । मुमोच प्रणिपातांतः प्रकोपो हि महात्मनाम् ॥ २९९ ॥

१ वरुणपुत्राः । २ किरिम् । ३ नाणश्रेणिम् ।

पुत्रीं सत्यवतीं नाम वरुणोऽदाद्धनूमते । दृष्टसारः स्वयं ह्रीदृग्जामाता दुर्लभः खलु ॥ ३०० ॥
लंकायां रावणोऽथागाददत्त च हनूमते । हृष्टश्चन्द्रणखापुत्रीमनंगकुसुमाभिधाम् ॥ ३०१ ॥
सुग्रीवेण पद्मरागा नलेन हरिमालिनी । अन्यैः सहस्रसंख्याश्च तस्मै दत्ताः स्वकाः सुताः ॥ ३०२ ॥

श्लिष्टो दृढं दशमुखेन मुदा विसृष्टो दोष्मानथो हनुपुरे हनुमाञ्जगाम ।
अन्येऽपि वानरपतिप्रमुखाः प्रजग्मुर्विद्याधरा निजनिजं नगरं प्रहृष्टाः ॥ ३०३ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि
हनुमदुत्पत्तिवरुणसाधनो नाम तृतीयः सर्गः ।

## ॥ अथ चतुर्थः सर्गः ॥

इतश्च मिथिलापुर्यां हरिवंशे महीपतिः । आसीद्वासवकेत्वाख्यो विपुला तस्य च प्रिया ॥ १ ॥
तयोः सूनुरनूनश्रीर्बभूव भुवि विश्रुतः । प्रजानां जनक इव जनको नाम पार्थिवः ॥ २ ॥
इतश्च पुर्ययोध्यायामृषभस्वामिराज्यतः । इक्ष्वाकुवंशांतर्भूतादित्यवंशेषु राजसु ॥ ३ ॥
यातेषु केषुचिन्मोक्षं स्वर्गं यातेषु केषुचित् । संख्यातीतेषु विंशस्यार्हतस्तीर्थे प्रसर्पति ॥ ४ ॥
बभूव विजयो राजा हिमचूला च तत्प्रिया । तयोरभूतां द्वौ पुत्रौ वज्रबाहुपुरन्दरौ ॥ ५ ॥
इतश्चाभून्नागपुरे पुरे राजेभवाहनः । चूडामणिश्च तत्पत्नी तत्पुत्री च मनोरमा ॥ ६ ॥
गत्वोद्यद्यौवनां वज्रबाहुः परिणिनाय ताम् । महेन[1] महता श्वेतमरीचिरिव[2] रोहिणीम् ॥ ७ ॥
भक्त्या च श्यालेनोदयसुन्दरेणानुगामिना । मनोरमामथादाय प्रतस्थे स्वपुराय सः ॥ ८ ॥
स गच्छन्नन्तरापश्यत्तपस्तेजोभिरीश्वरम् । वसंताद्रिस्थमुदयाचलस्थमिव भास्करम् ॥ ९ ॥
मोक्षाध्वमीक्षकमिवोत्पश्यम्[3]आतापनापरम् । गुणसागरनामानं तपस्यंतं महामुनिम् ॥ १० ॥
॥ युग्मम् ॥

मयूर इव जीमूतं तं दृष्ट्वा जातसंमदः[4] । कुमार इदमाह स्म धृत्वा सपदि वाहनम् ॥ ११ ॥
अहो महात्मा कोऽप्येष वंद्य एव महामुनिः । चिंतामणिरिव मया दृष्टः पुण्येन भूयसा ॥ १२ ॥

१ महोत्सवेन । २ चंद्रः । ३ ऊर्ध्व द्रष्टारम् । ४ जातहर्षः ।

उवाच चैवमुदयसुंदरोऽथ कुमार किम् । आदित्ससे परिव्रज्यां सोऽवदच्चित्तमस्ति मे ॥ १३ ॥
उदयो नर्मणा भूयः प्रोचे यद्यस्ति ते मनः । तदद्य मा विलंबस्व सहायोऽहमपीह ते ॥ १४ ॥
कुमारो व्याजहारैवं मर्यादामिव वारिधिः । मा त्याक्षीः स्वामिमां संधां सोऽप्यामेवेत्यभाषत ॥ १५ ॥
कुमारो वाहनान्मोहादिवोत्तीर्यारुरोह तम् । वसन्तशैलमुदयसुंदरादिभिरावृतः ॥ १६ ॥
वज्रबाहुमथावादीदिभवाहननन्दनः । स्वामिन्मा प्रव्राजीरद्य धिग्मे नर्माभिभाषणम् ॥ १७ ॥
नर्मोक्तिरावयोरासीत् को दोषस्तद्व्यतिक्रमे । नर्मोक्तिर्न हि सत्यैव प्रायो धवलगीतवत् ॥ १८ ॥
भविष्यसि सहायस्त्वं व्यसनेष्वखिलेष्वपि । इत्यकांक्षेऽपि मा भांक्षीरस्मत्कुलमनोरथान् ॥ १९ ॥
इदमद्यापि मांगल्यं तव हस्तेऽस्ति कंकणम् । तद्विवाहफलं भोगान् सहसा कथमुज्झसि ॥ २० ॥
सांसारिकसुखास्वादवंचितेयं मनोरमा । जीविष्यति कथं नाथ त्वया तृणवदुज्झिता ॥ २१ ॥ ✓
वज्रबाहुकुमारोऽथ जगादोदयसुन्दरम् । सुन्दरं मर्त्यजन्मनोः फलं चारित्रलक्षणम् ॥ २२ ॥
नर्मोक्तिरपि तेऽस्मासु बभूव परमार्थसात्[1] । शुक्तिषु स्वातिजीमूतवारि मौक्तिकसादिव ॥ २३ ॥
त्वत्स्वसा च कुलीना चेत्तत्प्रव्रज्यां ग्रहीष्यति । नो चेदस्याः शिवः पंथा भोगैः पुनरलं मम ॥ २४ ॥
तद्व्रतायानुमन्यस्व मां त्वमप्यनुयाहि नः । कुलधर्मः क्षत्रियाणां स्वसंधापालनं खलु ॥ २५ ॥
उदयं प्रतिबोध्यैवं वज्रबाहुरुपाययौ । सागरं गुणरत्नानां महर्षिं गुणसागरम् ॥ २६ ॥
तत्पादांते वज्रबाहुः परिव्रज्यामुपाददे । उदयो मनोरमाथ कुमाराः पंचविंशतिः ॥ २७ ॥

---

१ सर्वपरमार्थरूपा ।

वज्रबाहुं प्रव्रजितं श्रुत्वा विजयभूपतिः । वरं बालोऽप्यसौ नाहमिति वैराग्यमासदत् ॥ २८ ॥
ततश्च विजयः पुत्रं राज्ये न्यस्य पुरंदरम् । निर्वाणमोहस्य मुनेः पार्श्वे व्रतमुपाददे ॥ २९ ॥
पुरंदरोऽपि स्वे राज्ये पृथिवीकुक्षिजं सुतम् । न्यस्य कीर्तिधरं क्षेमंकरर्ष्यंतेऽव्रजद्यतिः ॥ ३० ॥
अथ कीर्तिधरो राजाभुङ्क्त वैषयिकं सुखम् । सहदेव्या समं पत्न्या पौलोम्येव पुरंदरः ॥ ३१ ॥
प्रविव्रजिषुरन्येद्युः स मंत्रिभिरभण्यत । तवानुत्पन्नपुत्रस्य न व्रतादानमर्हति ॥ ३२ ॥
त्वय्यपुत्रे व्रतभाजि निर्नाथेयं वसुंधरा । तत्प्रतीक्षस्व यावत्ते स्वामिन्नुत्पद्यते सुतः ॥ ३३ ॥
ततः कीर्तिधरस्यापि तथैव गृहवासिनः । काले गच्छत्यभूत्पुत्रः सहदेव्यां सुकोशलः ॥ ३४ ॥
ज्ञात्वा जातमिमं बालं पतिर्मे प्रव्रजिष्यति । सहदेवीति बुद्ध्या तं जातमात्रमगोपयत् ॥ ३५ ॥
विवेद मेदिनीनाथस्तं गुप्तमपि बालकम् । प्रासोदयं हि तरणिं[1] तिरोधातुं क ईश्वरः ॥ ३६ ॥
राजाथ स्वार्थकुशलो राज्ये न्यस्य सुकोशलम् । सूरेर्विजयसेनस्य पादान्ते व्रतमाददे ॥ ३७ ॥
तप्यमानस्तपस्तीव्रं सहमानः परीषहान् । स्वगुर्वनुज्ञयैकाकिविहारेणान्यतो ययौ ॥ ३८ ॥
साकेतमन्यदा मासोपवासी पारणेच्छया । स आजगाम भिक्षार्थं मध्याह्ने तत्र चाभ्रमत् ॥ ३९ ॥
सौधाग्रस्था सहदेवी तं च दृष्ट्वेत्यचिंतयत् । पत्यौ प्रव्रजितेऽमुष्मिन् पतिहीना पुराभवम् ॥ ४० ॥
वत्सः सुकोशलोऽप्यद्य दृष्ट्वैनं प्रव्रजेद्यदि । तदा पुत्रोऽपि मे न स्यान्निर्वीरा स्यां ततः परम् ॥ ४१ ॥
तस्मान्निरपराधोऽपि भर्तापि व्रतधार्यपि । निर्वास्यो नगरात्सूनो राज्यस्थेमचिकीर्षया ॥ ४२ ॥

१ सूर्यम् ।

इत्यन्यलिंगिभिः सार्धं तं राज्ञी निरवासयत् । लोभाभिभूतमनसां विवेकः स्यात्कियच्चिरम् ॥ ४३ ॥
धात्री सुकोशलस्याथ स्वामिनं व्रतधारिणम् । पुरान्निर्वासितं ज्ञात्वा रोदिति स्म निरर्गलम् ॥ ४४ ॥
किं रोदिषीति पप्रच्छ सुकोशलनृपोऽपि ताम् । कथयामास साप्येवमक्षरैः शोकगद्गदैः ॥ ४५ ॥
राज्ये त्वां बालकं न्यस्य तव कीर्तिधरः पिता । प्राव्राजीत् सोऽद्य भिक्षार्थं प्राविक्षदिह पत्तने ॥ ४६ ॥
तद्दर्शनात्तवाप्यद्य व्रतग्रहणशंकया । निर्वासितः स ते मात्रा दुःखेनानेन रोदिमि ॥ ४७ ॥
सुकोशलोऽपि तच्छ्रुत्वा गत्वा च पितुरंतिके । बद्धांजलिर्विरक्तात्मा तस्माद्व्रतमयाचत ॥ ४८ ॥
चित्रमाला च तत्पत्नी गुर्व्येत्य सह मंत्रिभिः । उवाचास्वामिकं स्वामिन्न राज्यं त्यक्तुमर्हसि ॥ ४९ ॥
राजाप्यवोचद्गर्भस्थोऽपि हि सूनुर्मया तव । राज्येऽभिषिक्तो भाविन्यप्युपचारो हि भूतवत् ॥ ५० ॥
इत्युक्त्वा सकलं लोकं संभाष्य पितुरंतिके । सुकोशलः प्रवव्राज तपस्तेपे च दुस्तपम् ॥ ५१ ॥
निर्ममौ निःकषायौ तौ पितापुत्रौ महामुनी । विजह्रतुर्युतावेव पावयंतौ महीतलम् ॥ ५२ ॥
तनयस्य वियोगेन खेदभाक् सहदेव्यपि । आर्तध्यानपरा मृत्वा व्याघ्र्यभूद्गिरिगह्वरे ॥ ५३ ॥
इतश्च तौ कीर्तिधरसुकोशलमहामुनी । प्रावृट्कालचतुर्मासीमत्येतुं दांतमानसौ ॥ ५४ ॥
निःस्पृहौ स्वशरीरेऽपि स्वाध्यायध्यानतत्परौ । गिरेर्गुहायामेकस्य तस्थतुः सुस्थिताकृती ॥ ५५ ॥
संप्राप्ते कार्तिके मासि प्रयांतौ पारणाय तौ । दृष्टौ मार्गे तया व्याघ्र्या यमदूत्येव दुष्टया ॥ ५६ ॥
सा व्याघ्री शीघ्रमभितो दधावे स्फारिताननाा । दूरादभ्यागमस्तुल्यो दुर्हृदां सुहृदामपि ॥ ५७ ॥

---

१ व्यात्तमुखा ।

आपतंत्यामपि व्याघ्र्यां तौ क्षमाश्रमणोत्तमौ । धर्मध्यानं प्रपेदानौ कायोत्सर्गेण तस्थतुः ॥ ५८ ॥
सा तु व्याघ्री विद्युदिव पपातादौ सुकोशले । दूरापातप्रहारेण पृथ्व्यां च तमपातयत् ॥ ५९ ॥
चटच्चटिति तच्चर्म दारं दारं नखांकुशैः । पापा सापादतृप्तास्रं वारीव मरुपांथिका ॥ ६० ॥
त्रोटयित्वा त्रोटयित्वा त्रटत्रटिति सा रैदैः । जग्रसे मांसमपि हि वालुंकमिव रंकिका ॥ ६१ ॥
दंतयंत्रातिथीचक्रे कर्कशाकीकसान्यपि । कटत्कटिति कुर्वन्ती सेक्षूनिव मतंगजी ॥ ६२ ॥
कर्मक्षयसहायेयमिति मन्वानो मुनिर्न सः । विशेषतस्त्वभूदुच्चावचरोमांचकंचुकः ॥ ६३ ॥
व्याघ्र्यैवं खाद्यमानोऽपि शुक्लध्यानमुपेयिवान् । तत्कालोत्केवलो मोक्षं सुकोशलमुनिर्ययौ ॥ ६४ ॥
मुनिः कीर्तिधरः सोऽपि समुत्पादितकेवलः । क्रमादासादयामास सुखाद्वैतास्पदं पदम् ॥ ६५ ॥
इतश्च चित्रमालापि सुकोशलनृपप्रिया । हिरण्यगर्भं सुषुवे नंदनं कुलनंदनम् ॥ ६६ ॥
आगर्भवासनृपतेस्तस्य प्राप्तस्य यौवनम् । सधर्मचारिण्यभवन्मृगनेत्रा मृगावती ॥ ६७ ॥
राज्ञो हिरण्यगर्भस्य मृगावत्यामजायत । तनयो नघुषो नाम वपुषा स इवापरः ॥ ६८ ॥
हिरण्यगर्भः स्वेऽपश्यन्मौलौ पलितमन्यदा । तृतीयवयसः सत्यंकारात्नमुपसर्पतः ॥ ६९ ॥
तदैव जातवैराग्यः स राजा नघुषं सुतम् । स्वे राज्ये न्यस्य विमलमुन्यंते व्रतमग्रहीत् ॥ ७० ॥
नघुषस्य नृसिंहस्य सिंहिका नाम पत्न्यभूत् । तया च रममाणः स पैतृकं राज्यमन्वशात् ॥ ७१ ॥
उत्तरापथभूपालान्नघुषो जेतुमन्यदा । जगाम सिंहिकां देवीं निजराज्ये मुमोच च ॥ ७२ ॥

नास्तीह नघुष इति दक्षिणापथभूभुजः । तदायोध्यां रुरुधिरे छलनिष्ठा हि वैरिणः ॥ ७३ ॥
तदा च सिंहिका देवी पुंवत्तानभ्यषेणयत् । जिगायानाशयच्चाशु किं सिंही हंति न द्विपान् ॥ ७४ ॥
जित्वोत्तरापथं राजा नघुषश्चागतोऽन्यदा । शुश्राव च जयोदन्तं पत्न्या दध्याविदं च सः ॥ ७५ ॥
स्पष्टधार्ष्ट्यमिदं कर्म दुष्करं मादृशामपि । महाकुलप्रसूतानां महिलानां न युज्यते ॥ ७६ ॥
तन्नूनमसती सेयं सत्यो हि पतिदेवताः । पतिसेवां विना नान्यज्जानते केदृशं पुनः ॥ ७७ ॥
इति चेतसि निश्चित्य सिंहिकां प्रेयसीमपि । राजा परिजहाराशु न्यग्गितप्रतिमामिव[1] ॥ ७८ ॥
नघुषस्यान्यदा दाहज्वरः समुदपद्यत । दुष्टारिवन्न चाशाम्यदुपचारशतैरपि ॥ ७९ ॥
स्वसतीत्वं ज्ञापनाय भर्तुरार्तिच्छिदेऽपि च । तत्समीपं तदेयाय तोयमादाय सिंहिका ॥ ८० ॥
सा सैत्यश्रावणं[2] चक्रे त्वां विना नाथ चेन्मया । पुमान्नैच्छि कदाप्यन्यो ज्वरस्तदपयातु ते ॥ ८१ ॥
ततश्च सांभसा तेनाभिषिषेच निजं पतिम् । तदैव स ज्वरोन्मुक्तः सुधाधौत इवाभवत् ॥ ८२ ॥
सिंहिकाया उपरिष्टात् पुष्पवृष्टिं सुरा व्यधुः । राजापि बहु मेने तां ततः प्रभृति पूर्ववत् ॥ ८३ ॥
काले गच्छति जज्ञे च नघुषस्य महीपतेः । सिंहिकायां महादेव्यां सोदासो नाम नंदनः ॥ ८४ ॥
सोदासे राज्यमारोप्यापरेद्युर्नघुषो नृपः । एकमौपयिकं सिद्धेः परिव्रज्यामुपाददे ॥ ८५ ॥
सोदासनृपते राज्येऽर्हतामष्टाह्निकोत्सवे । मंत्रिणो घोषयामासुरमारिं पूर्वराज्यवत् ॥ ८६ ॥
सोदासमपि ते प्रोचुरर्हदष्टाह्निकोत्सवे । नाखादि मांसं त्वत्पूर्वैः खादीस्त्वमपि मा स्म तत् ॥ ८७ ॥

१ खंडिता प्रतिमामिव । २ सत्यस्य श्रावणं ।

पाप्तिभारतः पुत्र सर्वेभ्यो न धृष्टता मनः (?)

सोदासोऽप्यवदत्सूदं सदा मांसादनप्रियः । प्रछन्नं मांसमादेयं त्वयावश्यमतः परम् ॥ ८८ ॥
सूदोऽप्यमार्यां घुष्टायां मांसं न प्राप कुत्रचित् । न ह्यसत्प्राप्यते क्वापि केनाप्याकाशपुष्पवत् ॥ ८९ ॥
मांसाप्राप्तिरित इतो राजाज्ञा बाधते च माम् । किं करोमीति विमृशन् सूदोऽपश्यन्मृतार्भकम् ॥ ९० ॥
मृतार्भकस्य तस्यैवादाय मांसं स वल्लवः । संस्कृत्य तैस्तैर्विज्ञानैः सोदासाय ददौ तदा ॥ ९१ ॥
सोदासोऽपि हि तन्मांसमश्नन्नेवमवर्णयत् । अहो अमुष्य मांसस्य कोऽप्यतिप्रीणको रसः ॥ ९२ ॥
सूपकारं च पप्रछ जन्मापूर्वमिदं मम । कस्य जीवविशेषस्य मांसमाख्याहि सर्वथा ॥ ९३ ॥
नृमांसमिति सोऽप्याख्यद्राजावोचदतः परम् । अद्यैव दद्याः संस्कृत्य प्रत्यहं नृपलं मम ॥ ९४ ॥
डिम्भान् सूदोऽप्यथाहार्षीत्तदर्थं प्रत्यहं पुरे । न हि भीराज्ञया राज्ञामन्यायकरणेऽपि हि ॥ ९५ ॥
इति दारुणकर्माणं नृपं विज्ञाय मंत्रिणः । धृत्वात्यजन्नरण्यांतर्गृहोत्पन्नमिवोरगम् ॥ ९६ ॥
तैश्च सोदाससूः सिंहरथो राज्येऽभ्यषिच्यत । सोदासोऽप्याट वसुधां मांसं खादन्निरर्गलः ॥ ९७ ॥
सोदासेनापि चान्येद्युर्भ्रमता दक्षिणापथे । महर्षिः कोऽपि ददृशे सोऽथ धर्ममपृछ्यत ॥ ९८ ॥
बोधार्ह इति तं ज्ञात्वा जगौ तस्मै महामुनिः । मद्यमांसपरीहारप्रधानं धर्ममार्हतम् ॥ ९९ ॥
सोदासोऽपि हि तं धर्ममाकर्ण्य चकितोऽभवत् । प्रसन्नहृदयो भूत्वा श्रावकः परमोऽभवत् ॥ १०० ॥
इतो महापुरपुरे कोऽप्यपुत्रो नृपो मृतः । पंचदिव्याभिषिक्तोऽथ सोदासस्तत्र राडभूत् ॥ १०१ ॥
सोदासः प्राहिणोद्दूतमथ सिंहरथं प्रति । सोदासस्य कुरुष्वाज्ञामिति दूतोऽप्युवाच तम् ॥ १०२ ॥

१ सूदः । २ मनुष्यमांसम् ।

दूतः सिंहरथेनोच्चैस्तिरस्कृत्य विसृज्यत । आगत्याख्यच्च सोदासभूभुजे स यथातथम् ॥ १०३ ॥
सोदासोऽथ सिंहरथं सोऽपि सोदासपार्थिवम् । अभ्यषेणयतां योद्धुं युयुधाते च तौ मिथः ॥ १०४ ॥
सोदासोऽपि सिंहरथं जित्वा जग्राह पाणिना । तस्मै राज्यद्वयं चादात्प्रवव्राज स्वयं पुनः ॥ १०५ ॥
सूनुः सिंहरथस्याभूद्राजा ब्रह्मरथस्ततः । चतुर्मुखस्ततो हेमरथः शतरथस्ततः ॥ १०६ ॥
अथोदयपृथुर्वारिरथ इन्दुरथस्ततः । आदित्यरथमान्धातृवीरसेनास्ततः क्रमात् ॥ १०७ ॥
प्रतिमन्युनृपस्तस्मात्प्रतिबन्धुनृपस्ततः । रविमन्युनृपस्तस्माद्वसंततिलकस्ततः ॥ १०८ ॥
कुबेरदत्तोऽथ कुंथुशरभद्विरदाः क्रमात् । ततश्च सिंहदशनो हिरण्यकशिपुस्ततः ॥ १०९ ॥
पुंजस्थलः ककुस्थोऽथ रघरेवं नृपेषु तु । केषुचिन्मोक्षमाप्तेषु स्वर्गमाप्तेषु केषुचित् ॥ ११० ॥
अनरण्यो नाम राजा शरण्यः शरणार्थिनाम् । आनृण्यकृत्प्रणयिनामभूत्साकेतपत्तने ॥ १११ ॥
तस्याभूतामुभौ पुत्रौ पृथ्वीदेव्याश्च कुक्षिजौ । एकोऽनंतरथो नाम्ना तथा दशरथोऽपरः ॥ ११२ ॥
इतोऽनरण्यस्य सुहृत्सहस्रकिरणो नृपः । रावणेन जितो युद्धे वैराग्याद्व्रतमाददे ॥ ११३ ॥
तत्सख्यादनरण्योऽपि श्रियं न्यस्य लघौ सुते । मासजातेऽनंतरथसहितो व्रतमाददे ॥ ११४ ॥
अनरण्योऽगमन्मोक्षमथानंतरथो मुनिः । तप्यमानस्तपस्तीव्रं विजहार वसुंधराम् ॥ ११५ ॥
राज्यभृत्क्षीरकंठोऽपि राजा दशरथः पुनः । वयसा विक्रमेणैव वृद्धिमासादयत् क्रमात् ॥ ११६ ॥
राजा राजसु सोऽराजद्द्विजराज इवोडुषु । ग्रहेष्विव ग्रहराजः सुमेरुः पर्वतेष्विव ॥ ११७ ॥

---

१ चंद्रः । २ सूर्यः ।

तत्र स्वामिनि लोकस्य परचक्रादिसंभवः । अदृष्टपूर्व एवासीत् खपुष्पवदुपद्रवः ॥ ११८ ॥
स वित्ताभरणादीनि यथेच्छं ददर्थिनाम् । कल्पद्रुमाणां मद्यांगादीनामेकादशोऽभवत् ॥ ११९ ॥
निजवंशक्रमायातं तत्साम्राज्यमिवानघम् । स दधावार्हतं धर्मं सर्वदाप्यप्रमद्वरः ॥ १२० ॥
दर्भस्थलपुरेशस्य सुकोशलमहीपतेः । कन्यां पवित्राममृतप्रभाकुक्षिसमुद्भवाम् ॥ १२१ ॥
नाम्नापराजितां चारुरूपलावण्यशालिनीम् । उदुवाह स भूपालो जयश्रियमिवाहवे ॥ १२२ ॥
॥ युग्मम् ॥

सुबन्धुतिलकस्याथ पुरे कमलसंकुले । मित्रादेवीकुक्षिजातां कैकेयीमादिनामतः ॥ १२३ ॥
मित्राभूः सुशीला चेति सुमित्रेत्यपराभिधाम् । पर्यणैषीद्दशरथः शशांक इव रोहिणीम् ॥ १२४ ॥
॥ युग्मम् ॥

पुण्यलावण्यसौन्दर्यवर्यांगीसुप्रभाभिधाम् । अन्यामप्युपयेमे स राजपुत्रीमनिंदिताम् ॥ १२५ ॥
सुखं वैषयिकं ताभिर्बुभुजे भूभुजां वरः । अबाधमानो धर्मार्थौ स विवेकशिरोमणिः ॥ १२६ ॥
इतश्च भरतस्यार्धं भुंजानो दशकंधरः । सभायामास्थितोऽपृच्छदिति नैमित्तिकोत्तमम् ॥ १२७ ॥
अमरा अपि नाम्नैवामरा न परमार्थतः । भाव्यवश्यं तु सर्वस्य मृत्युः संसारवर्तिनः ॥ १२८ ॥
तत्किं मे स्वपरीणामाद्विपत्तिः परतोऽथवा ॥ तन्ममाचक्ष्व निःशंकमासा हि स्फुटभाषिणः ॥ १२९ ॥
सोऽप्याचख्यौ भविष्यन्त्या जानक्याः कारणेन ते । भविष्यतो दशरथपुत्रान्मृत्युर्भविष्यति ॥ १३० ॥

१ मद्यांगादीनि दश नामानि कल्पवृक्षाणाम् ।

बिभीषणो बभाषेऽथ यदप्यस्य सदा ऋतम्[1] । वचस्तथापि ह्यनृतीकरिष्यामि तदाश्वहम् ॥ १३१ ॥
जनकं दशरथं च कन्यातनययोस्तयोः । अनर्थयोर्बीजभूतं हनिष्याम्यस्तु नः शिवम् ॥ १३२ ॥
उत्पत्तिरेव हि तयोर्निषिद्धा बीजनाशतः । वचो नैमित्तिकस्यातो मिथ्यैव हि भविष्यति ॥ १३३ ॥
ओमित्युक्तो रावणेन स्ववेश्मागाद्बिभीषणः । तत्रस्थो नारदस्तच्च श्रुत्वा दशरथं ययौ ॥ १३४ ॥
तं देवर्षि दशरथोऽभ्युत्तस्थौ दूरतोऽपि हि । नमस्कृत्यासयामास गुरुवद्गौरवेण च ॥ १३५ ॥
त्वमायासीः कुतः स्थानात्पृष्टस्तेनेति नारदः । आख्यत्पूर्वविदेहेषु गतोऽहं पुंडरीकिणीम् ॥ १३६ ॥
श्रीसीमंधरनाथस्य द्रष्टुं निष्क्रमणोत्सवम् । सुरासुरकृतं तं च दृष्ट्वा मेरुमगामहम् ॥ १३७ ॥
तत्राभिवंद्य तीर्थेशान् लंकायां गतवानहम् । तस्यां शांतिगृहे शांतिं नत्वागां रावणालयम् ॥ १३८ ॥
रावणस्य वधस्तत्र जानक्यर्थे त्वदात्मजात् । नैमित्तिकेन केनापि कथ्यमानः श्रुतो मया ॥ १३९ ॥
श्रुत्वा बिभीषणस्तच्च हंतुं त्वां जनकं तथा । कृतप्रतिज्ञो न चिरादिहैष्यति महाभुजः ॥ १४० ॥
एतत्सर्वं परिज्ञाय लंकापुर्याः ससंभ्रमः । साधर्मिक इति प्रीत्या तव शंसितुमागमम् ॥ १४१ ॥
तच्छ्रुत्वा भूभुजाभ्यर्च्य विसृष्टो नारदो द्रुतम् । तथैव कथयामास जनकायापि भूभुजे ॥ १४२ ॥
मंत्रिणां तत्समाख्याय राजा राज्यं समर्प्य च । निर्ययौ योगविदिव चिकीर्षुः कालवंचनाम् ॥ १४३ ॥
मूर्तिं दाशरथीं लेप्यमयीमंतर्नृपालयम् । न्यधुश्च मंत्रिणो ध्वांते विद्विषन्मोहहेतवे ॥ १४४ ॥
जनकोऽपि तथा चक्रे तथा तन्मंत्रिणोऽपि हि । तौ त्वलक्ष्यौ दशरथजनकौ भ्रेमतुर्महीम् ॥ १४५ ॥

१ सत्यम् ।

बिभीषणश्च संरंभादेत्य सन्तमसेऽसिना । लेपमय्या दशरथमूर्तेश्छिछेद मस्तकम् ॥ १४६ ॥
जज्ञे कलकलस्तत्र नगरे सकलेऽपि हि । आक्रन्दध्वनिरुत्तस्थावन्तरन्तःपुरं महान् ॥ १४७ ॥
सन्नह्य समधावन्त सामन्ताः सांगरक्षकाः । विदधुर्मृतकार्याणि गूढमंत्राश्च मंत्रिणः ॥ १४८ ॥
मृतं दशरथं ज्ञात्वा ययौ लंकां बिभीषणः । अकिंचित्करमेकं तु नावधीन्मिथिलेश्वरम् ॥ १४९ ॥
मिथश्च मैथिलैक्ष्वाकौ भ्राम्यन्तौ मिलितावुभौ । एकावस्थौ सुहृदौ तावुत्तरापथमीयतुः ॥ १५० ॥
राज्ञः शुभमतेस्तत्र पुरे कौतुकमंगले । दुहितुः कैकेयीनाम्न्याः पृथ्वीश्रीकुक्षिजन्मनः ॥ १५१ ॥
द्रोणमेघसोदराया द्वासप्ततिकलानिधेः । तौ स्वयंवरमाकर्ण्य तन्मंडपमुपेयतुः ॥ १५२ ॥
हरिवाहणमुख्यानां तौ मध्ये पृथिवीभुजाम् । हंसाविवाब्धिपाथोजमधिमंचं निषेदतुः ॥ १५३ ॥
कैकेयी कन्यकारत्नं रत्नालंकारभूषिता । साक्षाल्लक्ष्मीरिवाभ्यागात्तं स्वयंवरमंडपम् ॥ १५४ ॥
दत्तहस्ता प्रतीहार्या पश्यंती सा नृपान् क्रमात् । नक्षत्राणीन्दुलेखेव व्यतिचक्राम भूयसः ॥ १५५ ॥
क्रमेण सा दशरथं प्राप गंगेव सागरम् । तस्थौ तत्रैव निर्मुक्तनांगरा नौरिवांभसि ॥ १५६ ॥
सद्यो रोमांचिततनुः कैकेय्यतनुसंमुदा[3] । तत्राक्षिपद्वरमालां निजां भुजलतामिव ॥ १५७ ॥
हरिवाहणमुख्याश्च नृपा न्यक्कृतमानिनः[4] । मानिनो जज्वलुः क्रोधाज्ज्वलज्ज्वलनसंनिभाः ॥ १५८ ॥
अयं वराक एकाकी वव्रे कर्पटिकोऽनया । आछिद्यमानामस्माभिरिमिकां[5] त्रास्यते कथम् ॥ १५९ ॥
साटोपमिति जल्पन्तोऽनल्पं स्वशिबिरेषु ते । गत्वा संवर्मयामासुः सर्वे सर्वात्मनापि हि ॥ १६० ॥

१ गाढतमसि । २ पंकजे । ३ अति हर्षेण । ४ तिरस्कृतं आत्मानं मन्यंते इति । ५ इमामेवेमिकाम् ।

महीपतिः शुम्भमतिः पक्षे दशरथस्य सः । सन्ननाह महोत्साहः सेनया चतुरंगया ॥ १६१ ॥
कुरु प्रिये सारथित्वं यथा मथ्नाम्यमून् द्विषः । इत्यवोचत कैकेयीं तदैकाकी हि राघवः॥ १६२ ॥
कैकेयी रश्मिमादायाध्यारुरोह महारथम् । द्वासप्ततावपि कलास्वभिज्ञा सा हि धीमती ॥ १६३ ॥
धन्वी निषंगी सन्नाही राजा दशरथोऽपि तम् । अध्यास्त रथमेकोऽपि तृणवद्गणयन् परान् ॥ १६४ ॥
हरिवाहणमुख्यानां रथैर्निजरथं रयात् । प्रत्येकं युगपदिव त्वेका कैकेय्ययोजयत् ॥ १६५ ॥
शीघ्रवेधी दशरथोऽप्येकैकमपि तान् रथान् । अखंडयदखंडौजा आखंडल इवापरः ॥ १६६ ॥
इत्थं विद्रावयामास सर्वानपि स भूपतीन् । उपयेमे च कैकेयीं जगतीमिव जंगमाम् ॥ १६७ ॥
उवाच च नवोढां तां राजा दशरथो रथी । वरं याचस्व देवि त्वत्सारथ्येनास्मि रंजितः ॥ १६८ ॥
याचिष्ये समये स्वामिन्न्यासीभूतोऽस्तु मे वरः । इत्यभाषत कैकेयी राजापि प्रत्यपादि तत् ॥ १६९ ॥
समं श्रियेव कैकेय्या परसैन्यैर्हठाहृतैः[१] । असंख्यातपरीवारो राजा राजगृहं ययौ ॥ १७० ॥
जगाम राजा जनकोऽप्यात्मीयां नगरीमथ । समयज्ञा हि धीमंतो न तिष्ठंति यथा तथा ॥ १७१ ॥
राजा दशरथस्तत्र विजित्य मगधेश्वरम् । तत्रैवास्थान्न तु ययावयोध्यां शंकया तया ॥ १७२ ॥
तत्रापराजितामुख्यमंतःपुरमिलापतिः[२] । निजमानाययामास राज्यं सर्वत्र दोष्मताम् ॥ १७३ ॥
राज्ञीभी रममाणोऽस्थात्पुरे तत्र चिरं नृपः । विशेषतः प्रीतये हि राज्ञां भूः स्वयमर्जिता ॥ १७४ ॥
अथापराजितान्येद्युर्गजसिंहेन्दुभास्करान् । स्वप्नेऽपश्यन्निशाशेषे बलजन्माभिसूचकान् ॥ १७५ ॥

१ बलादानीतैः । २ पृथ्वीपतिः ।

ब्रह्मलोकात्परिच्युत्य तदा देवो महर्द्धिकः । कुक्षाववातरत्तस्याः पुष्करिण्या मरालवत् ॥ १७६ ॥
नृपुंडरीकं वर्णेन पुंडरीकविडंबिनम् । संपूर्णलक्षणं सूनुं सुषुवेऽथापराजिता ॥ १७७ ॥
प्रथमापत्यरत्नस्य तस्यास्यकमलेक्षणात् । राकेन्दुदर्शनादब्धिरिवातिमुमुदे नृपः ॥ १७८ ॥
नृपश्चिंतामणिरिव ददौ दानं तदार्थिनाम् । लोकस्थितिरियं जाते नंदने दानमक्षयम् ॥ १७९ ॥
महान्तमुत्सवं चक्रुस्तदा लोकास्तथा स्वयम् । यथाभूवन्नतिमुदो राज्ञो दशरथादपि ॥ १८० ॥
नृपौकसि सनाथानि दुर्वापुष्पफलादिभिः । निन्युः कल्याणपात्राणि पूर्णपात्राणि नागराः ॥ १८१ ॥
सर्वत्र कलगीतानि सर्वत्र घुसृणच्छटाः । सर्वत्र तोरणश्रेण्यो व्यधीयंत तदा पुरि ॥ १८२ ॥
अचिंतितोपनीतानि प्राभृतानि महीभृताम् । तदा राज्ञे समाजग्मुस्तस्य सूनोः प्रभावतः ॥ १८३ ॥
पद्मानिवासपद्मस्य पद्म इत्यभिधां नृपः । सूनोस्तस्याकरोत् सोऽभूत्प्रथितो राम इत्यपि ॥ १८४ ॥
गजसिंहार्कचंद्राग्निश्रीसमुद्रान्निशात्यये । स्वप्नेऽपश्यत् सुमित्रापि विष्णुजन्माभिसूचकान् ॥ १८५ ॥
देवलोकात् परिच्युत्य त्रिदशः परमर्द्धिकः । तदा देव्याः सुमित्राया उदरे समवातरत् ॥ १८६ ॥
समये प्रावृडम्भोदवर्णं संपूर्णलक्षणम् । सुमित्रापि जगन्मित्रं पुत्ररत्नमजीजनत् ॥ १८७ ॥
पुरश्चैत्येषु सर्वेषु श्रीमतामर्हतां तदा । विशेषेणाष्टधा पूजां स्नात्रपूर्वं व्यधान्नृपः ॥ १८८ ॥
नृपतिर्मोचयामास धृतान् वंदिरिपूनपि । को वा न जीवति सुखं पुरुषोत्तमजन्मनि ॥ १८९ ॥
सोल्लासः सप्रजो राजा न केवलमभूत्तदा । वसुमत्यपि देवी द्रागुल्लासं प्रत्यपद्यत ॥ १९० ॥

१ जनेषु पुंडरीकसमानम् । २ अतिहर्षवन्तः । ३ सहितानि । ४ कुंकुमच्छटाः । ५ लक्ष्म्या निवासे कमलसदृशस्य । ६ मही ।

रामजन्मनि भूपालो यथाकृत महोत्सवम् । तथा तमधिकं चक्रे हर्षे को नाम तृप्यति ॥ १९१ ॥
नाम नारायण इति विदधे तस्य पार्थिवः । स लक्ष्मण इति ख्यातोऽपरनाम्ना च भुव्यभूत् ॥ १९२ ॥
तौ द्वावपि पितुः कूर्चकचाकर्षणशिक्षकम् । विशिष्टं प्रापतुर्बाल्यं क्रमेण क्षीरपायिणौ ॥ १९३ ॥
धात्रीभिर्लाल्यमानौ तावपश्यत्परया मुदा । मुहुर्मुहुर्महीपालः स्वदोर्दंडाविवापरौ ॥ १९४ ॥
संचेरतुः सदस्यानामंकादंकं महीभुजाम् । तेषामंगेषु वर्षन्तौ तौ स्पर्शेन सुधामिव ॥ १९५ ॥
क्रमेण तौ वर्धमानौ नीलपीतांबरौ सदा । विजह्रतुः पादपातैः कंपयन्तौ महीतलम् ॥ १९६ ॥
कलयामासतुस्तौ तु क्रमेण सकलाः कलाः । साक्षीकृतकलाचार्यौ पुण्यराशी इवांगिनौ ॥ १९७ ॥
लीलामुष्टिप्रहारेण हिमकर्परलीलया । दलयामासतुस्तौ च गिरीनपि महौजसौ ॥ १९८ ॥
श्रमस्थानेऽपि हि तयोरधिज्यीकृतचापयोः । चकंपे तपनोऽप्युच्चैस्तस्थौ वेधाभिशंकया ॥ १९९ ॥
तृणाय मन्यमानौ तौ दोःस्थाम्नापि द्विषां बलम् । कौतुकायेव मेनाते शास्त्रकौशलमात्मनः ॥ २०० ॥
शस्त्रास्त्रकौशलेनोच्चैर्दोःस्थाम्ना च तयोर्नृपः । अपि देवासुरादीनां स्वमजय्यममन्यत ॥ २०१ ॥
अन्यदा धैर्यमालंब्य विक्रमेण कुमारयोः । इक्ष्वाकूणां, राजधानीमयोध्यां नृपतिर्ययौ ॥ २०२ ॥
अभ्रात्यय इवादित्यो दुर्दशातिक्रमे भृशम् । द्योतमानः प्रतापेन महीं दशरथोऽन्वशात् ॥ २०३ ॥
तत्रापरेद्युः कैकेयी शुभस्वप्नाभिसूचितम् । असूत भरतं नाम सुतं भरतभूषणम् ॥ २०४ ॥
शत्रुघ्नमभिधानेन शत्रुघ्नभुजविक्रमम् । अजीजनत्सुप्रभापि नंदनं कुलनंदनम् ॥ २०५ ॥

१ श्मश्रुकेशाकर्षणे शिक्षकम् । २ सभ्यानाम् । ३ चरणघातैः । ४ हिमपात्रस्य लीलया । ५ सूर्यः । ६ मेघनिरासे ।

बलदेववासुदेवावभातामपराविव ॥ २०६ ॥
स्नेहान्नरतशत्रुघ्नाववियुक्तौ दिवानिशम् । बलदेववासुदेवावभातामपराविव ॥ २०७ ॥
रेजे राजा दशरथश्चतुर्भिरपि तैः सुतैः । [1]गजदंताकृतिनगैरिव मेरुमहीधरः ॥ २०८ ॥
इतश्च जंबूद्वीपेऽस्मिन् क्षेत्रे चात्रैव भारते । दारुग्रामे वसुभूतिरिति नाम्नाभवद्द्विजः ॥ २०९ ॥
पत्न्यां तस्यानुकोशायामतिभूतिरभूत्सुतः । अतिभूतेरपि पत्नी बभूव सरसाभिधा ॥ २१० ॥
कयाननाम्ना विप्रेण जातरागेण सैकदा । अपजह्रे छलेनाशु किं न कुर्यात्स्मरातुरः ॥ २११ ॥
तामन्वेष्टुं महीमाटातिभूतिर्भूतवद्भृशम् । सुतस्नुषार्थेऽनुकोशावसुभूती च चेरतुः ॥ २१२ ॥
सुतस्नुषे अपश्यन्तौ पर्यटंतावथान्यदा । एकं ददृशतुः साधुं ववंदाते च भक्तितः ॥ २१३ ॥
श्रुतधर्मौ च तत्पार्श्वे तौ द्वौ जगृहतुर्व्रतम् । गुर्वादिष्टानुकोशागादार्यिकां कमलश्रियम् ॥ २१४ ॥
तौ विपद्य च सौधर्मे कल्पे देवौ बभूवतुः । व्रते ह्येकाहमात्रेऽपि न स्वर्गादन्यतो गतिः ॥ २१५ ॥
वसुभूतिस्ततश्च्युत्वात्रैव वैताढ्यपर्वते । रथनूपुरनाथोऽभून्नाम्ना चन्द्रगतिर्नृपः ॥ २१६ ॥
ततश्च्युत्वानुकोशापि तस्य विद्याधरप्रभोः । अभूत्पुष्पवती नाम भार्यार्यचरिता सती ॥ २१७ ॥
तदा च सापि सरसा कामपि प्रेक्ष्य संयतीम्[2] । प्रव्रज्य मृत्वा चेशाने देवी समुदपद्यत ॥ २१८ ॥
सरसाविरहादार्तोऽतिभूतिश्च विपद्य सः । चिरं भ्रांत्वा च संसारं हंसपोतः कदाप्यभूत् ॥ २१९ ॥
भक्ष्यमाणोऽन्यदा श्येनेनोपसाधु पपात सः । कंठस्थासोर्[3]नमस्कारं तस्य साधुर्ददौ च सः ॥ २२० ॥
विपन्नः स नमस्कारप्रभावेणातिभूयसा । दशवर्षसहस्रायुः किन्नरेषु सुरोऽभवत् ॥ २२१ ॥

१ गजदंताकारपर्वतैः । २ साध्वीम् । ३ कंठस्थप्राणस्य ।

च्युत्वा पुरे विदग्धे स प्रकाशसिंहभूपतेः । सुतोऽभूत्प्रवरावल्यां पत्न्यां कुंभलमंडितः ॥ २२१ ॥
भोगासक्तः कयानोऽपि चिरं भ्रांत्वा भवाटवीम् । पुरे चक्रपुरे चक्रध्वजराजपुरोधसः ॥ २२२ ॥
धूमकेशाभिधानस्य स्वाहानाम्न्यामजायत । सूनुः सधर्मचारिण्यां नामधेयेन पिंगलः ॥ २२३ ॥
॥ युग्मम् ॥
राज्ञश्चक्रध्वजस्यातिसुंदरीनामया सह । पुत्र्या पपाठैकगुरोरंतिके स तु पिंगलः ॥ २२४ ॥
कालेन गच्छता जाते त्वनुरागे परस्परम् । तां छलात् पिंगलो हृत्वा विदग्धनगरे ययौ ॥ २२५ ॥
विज्ञानरहितस्तत्र तृणकाष्ठादिविक्रयात् । आत्मानमजिजीवत्स निर्गुणस्योचितं ह्यदः ॥ २२६ ॥
तां चातिसुंदरीं तत्राद्राक्षीत् कुंडलमंभितः । अन्योऽन्यमनुरागश्च तत्कालमभवत्तयोः ॥ २२७ ॥
अपजह्रे च तां राजपुत्रः कुंडलमंभितः । पितुर्भिया दुर्गदेशे पल्लीं कृत्वा च संस्थितः ॥ २२८ ॥
विरहाच्चातिसुंदर्या उन्मत्त इव पिंगलः । क्ष्मां भ्रमन्नेकदाचार्यमार्यगुप्ताख्यमैक्षत ॥ २२९ ॥
श्रुत्वा धर्मं च तत्पार्श्वे व्रतं जग्राह पिंगलः । परं प्रेमातिसुंदर्यां न मुमोच कदाचन ॥ २३० ॥
पल्लीस्थितो दशरथभुवं कुंभलमंभितः । सर्वदा लुंटयामास सारमेय इव छलात् ॥ २३१ ॥
सामंतो बालचंद्राख्यस्ततो दशरथाज्ञया । प्रदाय सौप्तिकं बध्ध्वा तमानैषीत्तदंतिके ॥ २३२ ॥
कालेन तं दशरथोऽमुचत्कुंडलमंभितम् । कोपः शाम्यति महतां दीने क्षीणे ह्यरावपि ॥ २३३ ॥
पितृराज्याय स भ्राम्यन्महीं कुंभलमंभितः । मुनिचंद्रान्मुनेर्धर्ममाकर्ण्य श्रावकोऽभवत् ॥ २३४ ॥

---

१ आजीविकामकरोत् ।

राज्येक्षुरवे मृत्वा स मिथिलायां महापुरि । गर्भे जनकभार्याया विदेहायाः सुतोऽभवत् ॥ २३५ ॥
सरसापि भवं भ्रांत्वा पुरोहितसुताभवत् । नाम्ना वेगवती तत्र प्रव्रज्य च विपद्य च ॥ २३६ ॥
ब्रह्मलोकेऽगमच्च्युत्वा विदेहायास्तदोदरे । कुंडलमंडितजीवयुग्मत्वेन सुताभवत् ॥ २३७ ॥ युग्मम् ॥
विदेहा समयेऽसूत युगपत्पुत्रकन्यके । मृत्वा तदा पिंगलर्षिः सौधर्मे त्रिदशोऽभवत् ॥ २३८ ॥
प्राग्जन्मावधिनापश्यद् द्विषं कुंडलमंडितम् । तदा जनकपुत्रत्वेनोत्पन्नं स उदैक्षत ॥ २३९ ॥
स प्राग्वैराज्जातरोषो जातमात्रं जहार तम् । दध्यौ च किं निहन्म्येनमास्फाल्याशु शिलातले ॥ २४० ॥
अथवा यद्भवे पूर्वं दुःकर्माचरितं मया । फलं तस्यापि भूयस्सु भवेष्वन्वभवं चिरम् ॥ २४१ ॥
दैवाच्छ्रामण्यमासाद्य प्राप्तोऽहमियतीं भुवम् । हत्वा भ्रूण[1]ममुं भूयः स्यामनंतभवः कथम् ॥ २४२ ॥
इत्थं विमृश्य स सुरो भूषणैः कुंडलादिभिः । भूषयित्वा च तं बालं पतज्ज्योतिर्भ्रमप्रदम् ॥ २४३ ॥
वैताढ्यदक्षिणश्रेण्यां रथनूपुरपत्तने । शनकैर्नंदनोद्याने तूलिका[2]यामिवामुचत् ॥ २४४ ॥ ॥ युग्मम् ॥
किमेतदिति संभ्रान्तो दृष्ट्वा चंद्रगतिश्च तम् । तन्निपातानुसारेण नंदनोपवनं ययौ ॥ २४५ ॥
ददर्श तत्र तं बालं दिव्यालंकारभूषितम् । विद्याधरेन्द्रः सोऽपुत्रः पुत्री[3]यन्नाददे स्वयम् ॥ २४६ ॥
प्रेयस्याः पुष्पवत्याश्चार्पयामास तमर्भकम् । देव्यद्य सुषुवे पुत्रमिति चाघोषयत्पुरि ॥ २४७ ॥
उच्चैर्जन्मोत्सवं तस्य राजा पौराश्च चक्रिरे । स भामंडलसंबंधान्नाम्ना भामंडलोऽभवत् ॥ २४८ ॥
पुष्पवतीचंद्रगत्योर्नेत्रकैरवचंद्रमाः । स वर्धितुं प्रववृते खेचरीकरलालितः ॥ २४९ ॥

१ बालम् । २ शय्यायाम् । ३ पुत्र कुर्वन् ।

॥४८॥

इतश्चापहृते पुत्रे विदेहा करुणस्वरा । रुदती पातयामास बंधून् शोकमहार्णवे ॥ २५० ॥
जनकोऽन्वेषयामास प्रेष्य प्रतिदिशं नरान् । तत्प्रवृत्तिं पुनः क्वापि न प्राप सुचिरादपि ॥ २५१ ॥
अनेकगुणसस्यानां प्ररोहोऽत्रेति मैथिलः । दुहितुर्युग्मजातायाः सीतेति विदधेऽभिधाम् ॥ २५२ ॥
कालेन गच्छता शोकस्तयोर्मंदीबभूव च । शोको हर्षश्च संसारे नरमायाति याति च ॥ २५३ ॥
सीता च ववृधे सार्धं रूपलावण्यसंपदा । इंदुलेखेव शनकैः कलापूर्णा बभूव च ॥ २५४ ॥
क्रमादुद्यौवना पुण्यलावण्यलहरी सरित् । सरित्पतितनूजेव[1] सावद्धि कमलेक्षणा ॥ २५५ ॥
अनुरूपो वरः कोऽस्या भवितेति दिवानिशम् । अचिंतयत्तज्जनको[2] जनकः पृथिवीपतिः ॥ २५६ ॥
राज्ञां कुमारान् प्रत्येकं स वीक्ष्य चरचक्षुषा । व्यचारयन्महामात्यैर्न कोऽपि रुरुचे पुनः ॥ २५७ ॥
तदार्धबर्बरैरातरंगतमादिपार्थिवैः । दैत्यकल्पैरनल्पैर्भूर्जनकस्योपद्रुवे ॥ २५८ ॥
तेषां रोधाय कल्पांतवार्धिवारामिवाक्षमः[3] । दूतं दशरथाहूत्यै प्राहिणोन्मिथिलेश्वरः ॥ २५९ ॥
ऐक्ष्वाको दूतमायातं तमाहूय ससंभ्रमम् । सप्रसादं निषाद्याग्रे[4] जगादैवं महामनाः ॥ २६० ॥
तस्यास्मत्सुहृदो दूरस्थितस्यापि त्वदागमात् । मन्ये सौहार्दमद्वैतं मर्यादाविव वारिधेः ॥ २६१ ॥
कच्चिद्राष्ट्रे पुरे गोत्रे सैन्ये स्वांगेऽन्यतोऽपि च । कुशलं मिथिलाभर्तुर्ब्रूह्यागमनकारणम् ॥ २६२ ॥
दूतोऽप्यवादीन्मद्भर्तुः सत्स्वप्याप्तेष्वनेकशः । सुहृद्धृदयमात्मा वा त्वमेवासि महाभुज ॥ २६३ ॥
जनकस्य सुखैर्दुःखैर्यत्सदा गृह्यसे ततः । विधुरेऽद्य स्मृतस्तेन त्वं यथा कुलदेवता ॥ २६४ ॥

१ सरिता पतिः समुद्रस्तस्य तनूजा लक्ष्मीः । २ तत्पिता । ३ कल्पांतसमुद्रजलानाम् । ४ उपवेश्य ।

वैताढ्याद्रेर्दक्षिणतः कैलासस्योत्तरेण च । संत्यनार्या जनपदा भूयांसो भीषणप्रजाः ॥ २६५ ॥
तेष्वर्धबर्बरो नाम देशो बर्बरकूलवत् । विद्यते दारुणाचारैर्नरैरत्यंतदारुणः ॥ २६६ ॥
मयूरमालनगरे तस्य देशस्य भूषणे । आतरंगतमो नाम म्लेच्छराजोऽस्ति दारुणः ॥ २६७ ॥
शुकमंकनकांबोजप्रभृतीन् विषयानपि । भुंजते तनयास्तस्य नृपीभूय सहस्रशः ॥ २६८ ॥
इदानीमातरंगस्तैः परितः परिवारितः । अक्षय्याक्षौहिणीनाथैरभांक्षीजनकक्षितिम् ॥ २६९ ॥
प्रतिस्थानं च चैत्यानि बभंजुस्ते दुराशयाः । तेषां ह्याजन्म संपन्नयोऽप्यभीष्टो धर्मविप्लवः ॥ २७० ॥
अनारतमभीष्टस्य धर्मस्य जनकस्य च । तत्कुरुष्व परित्राणं प्राणभूतस्तयोरसि ॥ २७१ ॥
आकर्ण्यैवं दशरथो यात्राभेरीमवादयत् । संतः सतां परित्राणे विलंबंते न जातुचित् ॥ २७२ ॥
रामोऽथोचे दशरथं म्लेच्छोच्छेदाय चेत्स्वयम् । तातो यास्यति तद्रामः सानुजः किं करिष्यति ॥ २७३ ॥
पुत्रस्नेहाच्च तातेनाक्षमो वा तर्कितोऽस्म्यहम् । आ भरताजन्मसिद्धं नन्विक्ष्वाकुषु पौरुषम् ॥ २७४ ॥
प्रसीद विरम म्लेच्छानुच्छेत्तुं मां समादिश । अचिराच्छ्रोष्यसि स्वामिञ्जयवार्तां स्वजन्मनः ॥ २७५ ॥
इत्थं कथंचिद्राजानमनुज्ञाप्य सहानुजः । सेनापरिवृतो रामो जगाम मिथिलां पुरीम् ॥ २७६ ॥
चमूरूद्धीपिशार्दूलसिंहानिव महावने । पुरीपरिसरेऽद्राक्षीद्रामो म्लेच्छमहाभटान् ॥ २७७ ॥
रणकंडूलदोर्दण्डा म्लेच्छास्ते जितकाशिनः[1] । रामं द्रुतमुपद्रोतुं प्रावर्तंत महौजसः ॥ २७८ ॥
युगपद्रामसैन्यं तैरस्त्रैरंधीकृतं क्षणात् । महावातैरिवोद्भ्रांतैर्जगदुत्क्षिप्तरेणुभिः ॥ २७९ ॥

---

१ जितेन जयेन काशंते शोभंते इति तथा ।

जितमानिषु सैन्येषु परेषु जयमानिषु । मृतमानिनि जनके लोके संहृतमानिनि ॥ २८० ॥
रामो हसितमानी स्वमधिज्यं विदधे धनुः । अवादयच्च तन्मौर्वीं रणनाटकडिंडिमम् ॥ २८१ ॥

॥ युग्मम् ॥

भूभंगमप्यकुर्वाणो गीर्वाण इव भूगतः । रामस्तान् कोटिशोऽप्यस्त्रैर्विव्याध व्याधवन्मृगान् ॥ २८२ ॥
अयं वराको जनकस्तत्सैन्यं मशकोपमम् । तत्साहाय्यागतं सैन्यं दैन्यत्राणादितोऽप्यभूत् ॥ २८३ ॥
अरे कुत इमे बाणाश्छादयंतो नभस्तलम् । पक्षिराजा इवायांतीत्यन्योऽन्यमभिभाषिणः ॥ २८४ ॥
आतरंगादयो म्लेच्छाधिपाः कुपितविस्मिताः । वर्षंतोऽस्त्राणि युगपत्प्रतिरामं ढुढौकिरे ॥ २८५ ॥

॥ त्रिभिर्विशेषकम् ॥

दूरापाती दृढाघाती शीघ्रवेधी च राघवः । तान् म्लेच्छान् हेलयाभांक्षीद्धरभः कुंजरानिव ॥ २८६ ॥
म्लेच्छाः प्रणश्य ते जग्मुः काका इव दिशो दिशि । बभूव स्वस्थो जनको जनैर्जानपदैः समम् ॥२८७ ॥
हृष्टोऽथ स्वसुतां सीतां रामाय जनको ददौ । ध्यं रामागमात्तस्य वरप्राप्तिर्जयोऽप्यभूत् ॥ २८८ ॥
तदा च जानकीरूपं जनादाकर्ण्य नारदः । तत्रागात्कौतुकाद्द्रष्टुं कन्यावेश्म विवेश च ॥ २८९ ॥
पिंगकेशं पिंगनेत्रं तुंदिलं छत्रिकाधरम् । दंडपाणिं सकौपीनमपीनांगं स्फुरच्छिखम् ॥ २९० ॥
भीषणं नारदं प्रेक्ष्य भीता सीता सवेपथुः । हा मातरित्यारटंती गर्भागारांतरेऽविशत् ॥ २९१ ॥

॥ युग्मम् ॥

---

१ आत्मानं जितं मन्यंते तेषु । २ शत्रुषु । ३ संहारमानिनि । ४ दूरादापततीति तथा । ५ बृहदुदरम् । ६ कृशांगम् ।

कंठे शिखायां बाह्वोश्च धृत्वा तुमुलकारिभिः । दासिकाद्वारपालाद्यै रुरुधे नारदस्ततः ॥ २९२ ॥
तेषां कलकलादेयुः शस्त्रिणो राजपूरुषाः । यमदूता इव क्रुद्धा हतैनमिति भाषिणः ॥ २९३ ॥
क्षुभितो नारदस्तेभ्यः स्वं विमोच्य कथंचन । ययावुत्पत्य वैताढ्यं तत्र चैवमचिंतयत् ॥ २९४ ॥
व्याघ्रीभ्य इव गौर्जीवन् दासीभ्यो निरगामहम् । दिष्ट्या प्राप्तोऽस्मि वैताढ्यं बहुविद्याधरेश्वरम्॥२९५
अस्तीह दक्षिणश्रेण्यौ चंद्रगत्यात्मजो युवा । भामंडलो नाम दोष्मानाखंडलपराक्रमः ॥ २९६ ॥
पटे लिखित्वा तत्सीतां दर्शयाम्यस्य येन ताम् । हठादपहरत्येष कृते प्रतिकरोम्यदः ॥ २९७ ॥
तथैव नारदः कृत्वा सीतारूपमदर्शयत् । भामंडलकुमारस्यादृष्टपूर्वं जगत्त्रये ॥ २९८ ॥
सद्यो भामंडलो भूतेनेवाक्रामि मनोभुवा । लेभे न जातुचिन्निद्रां विंध्याकृष्ट इव द्विपः ॥ २९९ ॥
बुभुजे न हि भोज्यानि पेयान्यपि पपौ न सः । अवतस्थे च मौनेन योगीव ध्यानतत्परः ॥ ३०० ॥
तं तथा विधुरं प्रेक्ष्यावोचच्चंद्रगतिर्नृपः । किमाधिर्बाधते कोऽपि त्वामथ व्याधिरुद्धतः ॥ ३०१ ॥
किमाज्ञाखंडनं केनाप्यकारि भवतोऽथवा । अन्यद्वा ब्रूहि हे वत्स यत्ते दुःखस्य कारणम् ॥ ३०२ ॥
भामंडलकुमारोऽभूद्ह्रिया द्वेधाप्यवाङ्मुखः । गुरूणां तादृगाख्यातुं कुलीनाः कथमीशते ॥ ३०३ ॥
ऊचुर्वयस्या अथ भामंडलस्यार्तिकारणम् । कामनां नारदानीतपटालिखितयोषिति ॥ ३०४ ॥
वेश्मन्यानीय भक्त्याशु नारदं राजपुंगवः । का सा कस्यात्मजेत्यादि पप्रच्छ पटयोषितः ॥ ३०५ ॥
आचख्यौ नारदोऽप्येवं विदेहाजनकात्मजा । नामधेयेन सीता सा या मया दर्शिता पटे ॥ ३०६ ॥
यादृशी सास्ति रूपेण लिखितुं तादृशीं पुनः । नाभिज्ञोऽहं न चान्यो वा मूर्त्या लोकोत्तरैव सा ॥३०७॥

नामरीषु न नागीषु न गंधर्वीषु तादृशम् । सीताया यादृशं रूपं का कथा मानवीषु तु ॥ २०८ ॥
यादृग्रूपं यथावस्थं विकर्तुं नेश्वराः सुराः । नानुकर्तुं सुरनरा न च कर्तुं प्रजापतिः ॥ २०९ ॥
तस्या मधुरता काचिदाकृतौ वचनेऽपि च । कंठे च पाणिपादे च रक्तता काचिदुच्चकैः ॥ २१० ॥
अथवा तां यथावस्थां यथा नालेखितुं क्षमः । नालं तथा वक्तुमपि वच्म्यतः परमार्थतः ॥ २११ ॥
योग्या भामंडलस्येति विचार्य मनसा मया । यथाप्रज्ञं समालिख्य दर्शितेयं पटे नृप ॥ २१२ ॥
भविष्यति तवैवैषा पत्नी खिद्यस्व मा ततः । इत्याश्वास्य सुतं राजा व्यसृजन्नारदं मुनिम् ॥ २१३ ॥
ततश्च चपलगतिं नाम विद्याधरं नृपः । इत्यादिदेश जनकमपहृत्यानय द्रुतम् ॥ २१४ ॥
रजन्यां जनकं हृत्वानुपलक्षित एव सः । समानीयार्पयामास राज्ञश्चंद्रगतेरथ ॥ २१५ ॥
जनकं बंधुवत्स्नेहाद्रथनूपुरपार्थिवः । समाश्लिष्यासयित्वा च ससौहार्दमदोऽवदत् ॥ २१६ ॥
लोकोत्तरगुणा पुत्री तव सीतेति विद्यते । भामंडलश्च मे सूनुरनूनो रूपसंपदा ॥ २१७ ॥
द्वयोर्वधूवरत्वेन संयोगोऽस्तूचितोऽधुना । संबंधादावयोश्चापि मिथो भवतु सौहृदम् ॥ २१८ ॥
इत्यूचे जनको दत्ता रामाय स्वसुता मया । कथमन्यस्य यच्छामि दीयंते कन्यकाः सकृत् ॥ २१९ ॥
अथ चंद्रगतिः प्रोचे स्नेहवृद्धिकृते मया । आनीय याचितोऽसि त्वं तां क्षमो हर्तुमप्यहम् ॥ २२० ॥
यद्यपि स्वसुता सीता त्वया रामाय कल्पिता । तथापि नः पराजित्य रामस्तां परिणेष्यति ॥ २२१ ॥
वज्रावर्तार्णवावर्ते धनुषी देवताज्ञया । सदा यक्षसहस्राधिष्ठिते दुःसहतेजसी ॥ २२२ ॥

१ धनुर्नाम्नी एते ।

पूज्ये ते नः सदा गोत्रदेवतावन्निकेतने । कृते भविष्यतो रामशार्ङ्गिणोस्तद्गृहाण ते ॥ ३२३ ॥
आन्यामारोपयत्येकमपि दाशरथिः स चेत् । वयं जितास्तदा तेन स उद्वहतु ते सुताम् ॥ ३२४ ॥
प्रतिज्ञामित्यनुग्राह्य बलादपि हि मैथिलम् । मिथिलायामनैषीच्च चापे ते च [1]सनंदनः ॥ ३२५ ॥
मुमोच जनकं राजौकसि चंद्रगतिर्नृपः । स्वयं तु सपरीवारोऽवात्सीत्पुर्या बहिर्भुवि ॥ ३२६ ॥
आचख्यौ जनकस्तच्च वृत्तं निशि तदैव हि । महादेव्या विदेहायाः सद्यो हृदयशल्यदम् ॥ ३२७ ॥
विदेहापि रुरोदैवं रे दैवात्यंतनिर्घृण । पुत्रं हृत्वा न मे तृप्तः पुत्रीमपि हरिष्यसि ॥ ३२८ ॥
स्वेच्छयैव वरादानं लोके न हि परेच्छया । परेच्छया वरादानं दैवादापतितं मम ॥ ३२९ ॥
परेच्छया प्रतिज्ञातं कोदंडारोपणं यदि । कुर्यान्न [2]रामोऽन्यः कुर्यात्तदानिष्टो वरो भवेत् ॥ ३३० ॥
अथेत्थं जनकोऽवोचन्मा भैपीरेप राघवः । दृष्टसारो मया देवि लतावत्तस्य तद्धनुः ॥ ३३१ ॥
विदेहामिति संबोध्य प्रभाते जनकोऽमुचत् । अर्चित्वा चापरत्ने ते मंडपे मंचमंडिते ॥ ३३२ ॥
सीतास्वयंवरायाथ विद्याधरनरेश्वराः । तत्रैत्य जनकाहूता अधिमंचमुपाविशन् ॥ ३३३ ॥
ततः सखीपरिवृता दिव्यालंकारधारिणी । भूचारिणीव त्रिदशी तत्रोपेयाय जानकी ॥ ३३४ ॥
तत्र कृत्वा धनुःपूजां रामं मनसिकृत्य च । अतिष्ठज्जानकी तत्र जननेत्रसुधासरित् ॥ ३३५ ॥
नारदोदितसंवादिसीतारूपेक्षणात्तदा । भामंडलकुमारस्य [3]भारोऽभून्मारकात्मकः ॥ ३३६ ॥
अथोचे जनकधाःस्थो भो भोः सर्वेऽपि खेचराः । महीचराश्च राजानो जनकोऽयं वदत्यदः ॥ ३३७ ॥

१ सपुत्रः । २ रामो न कुर्यादन्यश्च कुर्यादित्यन्वयः । ३ कामदेवः ।

आरोपयति यः कश्चिदनयोश्चापदंडयोः । अप्येकतरमद्यैव स उद्वहतु नः सुताम् ॥ ३३८ ॥
एकैकशोऽथ दोष्मन्तः खेचरा भूभुजोऽपि च । उपधन्वं समाजग्मुस्तदारोपणकाम्यया ॥ ३३९ ॥
वेष्टिते पन्नगै रौद्रैश्चापे[1] ते तीव्रतेजसी । नालं बभूवुस्ते स्प्रष्टुमप्यादातुं तु का कथा ॥ ३४० ॥
धनुःस्फुलिंगज्वालाभिर्निर्यातीभिरनेकशः । प्लुष्यमाणा[2] निवृत्त्येयुस्तेऽन्यतोऽधोमुखा ह्रिया ॥ ३४१ ॥
अथ दाशरथी रामश्चलत्कांचनकुंडलः । गजेन्द्रलीलागमनश्चापोपांतमुपासरत् ॥ ३४२ ॥
वीक्ष्यमाणः सोपहासं चंद्रगत्यादिभिर्नृपैः । जनकेन च साशंकं निःशंको लक्ष्मणाग्रजः ॥ ३४३ ॥
वज्रमिव वज्रपाणिर्वज्रावर्तं महाधनुः । शांतोरगानलं सद्यः परिपस्पर्श पाणिना ॥ ३४४ ॥
॥ युग्मम् ॥
स्थापयित्वाध्ययःपीठं[3] नमयित्वा च वेत्रवत् । अधिज्यं विदधे धन्वं तद्रामो धन्विनां वरः ॥ ३४५ ॥
आकर्णांतं तदाकृष्य रोदःकुक्षिंभरिध्वनि[4] । धनुरास्फालयामास स्वयशःपटहोपमम् ॥ ३४६ ॥
स्वयंवरस्रजं रामे स्वयं चिक्षेप मैथिली । चापाच्चोत्तारयामास रामभद्रोऽपि शिंजिनीम्[5] ॥ ३४७ ॥
लक्ष्मणोऽप्यर्णवावर्तं कार्मुकं रामशासनात् । अधिज्यं विदधे सद्यः प्रेक्षितो विस्मितैर्जनैः ॥ ३४८ ॥
आस्फालयच्च तन्नादबधरीकृतदिङ्मुखम् । उत्तार्य मौर्वीं सौमित्रः पुनः स्थाने मुमोच च ॥ ३४९ ॥
ददुः सौमित्रये विद्याधराश्चकितविस्मिताः । अष्टादश निजाः कन्याः सुरकन्या इवाद्भुताः ॥ ३५० ॥

---

१ सर्पैः । २ दह्यमानाः । ३ लोहपीठोपरि । ४ अंतरीक्षस्य कुक्षिंभरिर्ध्वनिर्यस्य तत्तथा । ५ मौर्वीम् प्रत्यञ्चाम् ।

चंद्रगतिपुष्पवत्योः सभामंडलसीतयोः । समाचख्यौ पूर्वभवांस्तेषां पापान्निवृत्तये ॥ २७८ ॥
॥ युग्मम् ॥
सीताभामंडलयोश्च भवेऽस्मिन् युग्मजातताम् । भामंडलापहारं च यथावदवदन्मुनिः ॥ २७९ ॥
भामंडलकुमारोऽपि तदाकर्ण्य मुनेर्वचः । संजातजातिस्मरणो मूर्छितो न्यपतद्भुवि ॥ २८० ॥
भामंडलो लब्धसंज्ञः कथितं सत्यभूतिना । स्वपूर्वभववृत्तांतं शशंस स्वयमप्यथ ॥ २८१ ॥
ययुः परमसंवेगं चंद्रगत्यादयोऽप्यथ । स्वसेति सीतां च नमश्चक्रे भामंडलः सुधीः ॥ २८२ ॥
जातमात्रो योऽपजह्रे सोऽयं मम सहोदरः । इति हृष्टाशिषं तस्मै ददौ सीता महासती ॥ २८३ ॥
नमश्चकार रामं च ललाटस्पृष्टभूतलः । भामंडलो विनयवान् सद्यः संजातसौहृदः ॥ २८४ ॥
समं विदेहया देव्या जनकं भूपतिं ततः । तत्रानैषीच्चंद्रगतिः प्रेष्य विद्याधरोत्तमान् ॥ २८५ ॥
जातमात्रापहारादिवृत्तांताख्यानपूर्वकम् । भामंडलसुतस्तेऽसाविति तस्मै शशंस सः ॥ २८६ ॥
जहर्ष वचसा तेन स्तनितेनेव बर्हिणः । जनको जननी सा च विदेहा स्तन्यमक्षरत् ॥ २८७ ॥
भामंडलो नमश्चक्रे पितरावुपलक्ष्य तौ । चुंब्यमानो मूर्ध्नि ताभ्यां स्नाप्यमानोऽश्रुवारिभिः ॥ २८८ ॥
अथ चंद्रगती राज्यं न्यस्य भामंडले सुते । भवोद्विग्नः प्रवव्राज सत्यभूतिमुनेः पुरः ॥ २८९ ॥
सत्यभूतिं चंद्रगतिं पितरावनरण्यजम् । सीतारामौ च नत्वागान्निजं भामंडलः पुरम् ॥ २९० ॥
सत्यभूतिं महर्षिं तं नत्वा दशरथो नृपः । अपृच्छदात्मनः पूर्वभवानाख्यन्मुनिश्च सः ॥ २९१ ॥

१ मेघगर्जितेन । २ दशरथम् ।

सेनापुरे त्वं वणिजो भावनस्य महात्मनः । पत्न्यामभूद्दीपिकायामुपास्तिर्नाम कन्यका ॥ ३९२ ॥
साधूनां प्रत्यनीका सा भूत्वा तत्र भवे चिरम् । परिबभ्राम कष्टात्तु तिर्यगादिषु योनिषु ॥ ३९३ ॥
तज्जीवस्त्वं भवं भ्रांत्वा पुरे चंद्रपुरे ततः । धनस्याभूत्सुतः पत्न्यां सुंदर्यां वरुणाभिधः ॥ ३९४ ॥
तदोदारः प्रकृत्या त्वं साधुभ्यः श्रद्धयाधिकम् । निरंतरमदा दानं कालधर्ममथासदः ॥ ३९५ ॥
द्वीपेऽथ धातकीखंडे युग्म्युत्तरकुरुष्वभूः । मृत्वा चागा देवभूयं परिच्युत्य ततोऽपि हि ॥ ३९६ ॥
विजये पुष्कलावत्यां पुष्कलायां च पुर्यभूः । नंदिघोषनृपपृथ्वीदेव्योस्तुङ्ग नंदिवर्धनः ॥ ३९७ ॥
नंदिघोषः सुतं राज्ये न्यस्य त्वां नंदिवर्धनम् । यशोधरमुनेरात्तदीक्षो ग्रैवेयके ययौ ॥ ३९८ ॥
श्रावकत्वं पालयित्वा त्वं मृत्वा नंदिवर्धनः । त्रिदशो ब्रह्मलोकेऽभूः परिच्युत्य ततोऽपि हि ॥ ३९९ ॥
प्रत्यग्विदेहे वैताढ्ये चोत्तरश्रेणिभूषणे । पुरे शशिपुरे रत्नमालिनः खेचरेशितुः ॥ ४०० ॥
विद्युल्लताभिधानायां सधर्मिण्यां महाभुजः । सूनुः सूर्यंजय इति नाम्ना त्वं तनयोऽभवः ॥ ४०१ ॥
॥ त्रिभिर्विशेषकम् ॥
अन्यदा रत्नमाली स दृप्तं विद्याधरेश्वरम् । विजेतुं वज्रनयनं पुरं सिंहपुरं ययौ ॥ ४०२ ॥
स ज्वालयितुमारेभे पुरं सिंहपुरं ततः । सबालवृद्धं सस्त्रैणं सपशूपवनं हठात् ॥ ४०३ ॥
अभिधानेनोपमन्योः पूर्वजन्मपुरोधसः । जीवो देवः सहस्रारात्तं तदैत्यैवमब्रवीत् ॥ ४०४ ॥
भो भो महानुभावैवं मा कृथाः पापमुत्कटम् । त्वं भूरिनन्दनो नाम राजाभूः पूर्वजन्मनि ॥ ४०५ ॥

---

१ द्वेषिणी । २ पुत्रः ।

तदा मांसनिवृत्तिं त्वं प्रत्यज्ञासीर्विवेकतः । पुरोहितेन तेनोपमन्युनोक्तश्च भग्नवान् ॥ ४०६ ॥
पुरोधाः सोऽन्यदा पुंसा स्कंदनाम्ना निपातितः । गजश्चाभूद्गृहीतश्च भूरिनंदनभूभुजा ॥ ४०७ ॥
हतश्चैत्रो रणे सोऽथ भूरिनंदनभूपतेः । गंधारायामभूत्पत्न्यां सूनुर्नाम्नारिसूदनः ॥ ४०८ ॥
संजातजातिस्मरणः प्रव्रज्य च विपद्य च । सोऽहं देवः सहस्रारे कल्पे जातोऽस्मि विद्धि माम् ॥४०९॥
भूरिनंदनराजोऽभूद्विपद्याजगरो वने । दग्धो दावेन सोऽयासीद् द्वितीयां नरकावनिम् ॥ ४१० ॥
नरकेऽपि मया गत्वा स प्राक्स्नेहात्प्रबोधितः । तस्मादुद्धृत्य सोऽभूस्त्वं रत्नमालीह पार्थिवः ॥ ४११ ॥
मांसप्रत्याख्यानभंगं तदानीमिव संप्रति । अनंतदुःखोदर्कं तत्पुरदाहं स्म मा कृथाः ॥ ४१२ ॥
तदाकर्ण्य वचो युद्धाद्रत्नमाली न्यवर्तत । राज्ये न्यधत्त च कुलनंदनं [1]सूर्यनंदनम् ॥ ४१३ ॥
सूर्यंजयेन पुत्रेण सहैव व्रतमाददे । तत्कालमेव तिलकसुंदराचार्यसंनिधौ ॥ ४१४ ॥
द्वावप्यभूतां तौ मृत्वा महाशुक्रेऽमरोत्तमौ । सूर्यंजयस्ततश्च्युत्वा भोस्त्वं दशरथोऽभवः ॥ ४१५ ॥
प्रच्युत्य रत्नमाली तु जनकोऽयमजायत । अभूच्च्युत्वोपमन्युस्तु कनको जनकानुजः ॥ ४१६ ॥
नंदिघोषः पिता यस्ते नंदिवर्धनजन्मनि । सोऽहं ग्रैवेयकाच्च्युत्वा सत्यभूतिरिहाभवम् ॥ ४१७ ॥
तच्छ्रुत्वा जातसंवेगस्तं वंदित्वानरण्यजः । प्रविव्रजिषुरा[2]धातुं रामे राज्यं गृहं ययौ ॥ ४१८ ॥
अथ राज्ञीः सुतान्मंत्रिमुख्यानाहूय पार्थिवः । आपप्रच्छे यथौचित्यं [3]दत्तालापसुधारसः ॥ ४१९ ॥
नत्वा बभाषे भरतोऽहं सर्वविरतिं प्रभो । त्वया सममुपादास्येऽवस्थास्ये त्वां विना न हि ॥ ४२० ॥

१ सूर्यजयस्य पुत्रं कुलनंदननामानम् । २ स्थापयितुम् । ३ दत्त आलाप एव सुधारसो येन सः ।

ममान्यथा हि दे कष्टे स्वामिन्नत्यंतदुःसहे । एकं त्वत्पादविरहोऽपरं संसारतर्पणम् ॥ ४२१ ॥
तच्छ्रुत्वा चाथ कैकेयी निश्चितं भाव्यतः परम् । न पतिर्न च मे सूनुरिति ध्यात्वाब्रवीदिदम् ॥ ४२२ ॥
स्वामिन् स्मरसि योऽदत्तस्त्वया मह्यं स्वयं वरः । स्वयंवरोत्सवे तत्र तेन सारथ्यकर्मणा ॥ ४२३ ॥
तं प्रयच्छाधुना मह्यं नाथ सत्यप्रतिश्रव[1] । प्रस्तरोत्कीर्णरेखेव[2] प्रतिज्ञा हि महात्मनाम् ॥ ४२४ ॥
अथावदद्दशरथः प्रतिपन्नं स्मराम्यहम् । याचस्व यन्ममाधीनं विना व्रतनिषेधनम् ॥ ४२५ ॥
ततो ययाचे कैकेयी त्वं चेत्प्रव्रजसि स्वयम् । स्वामिन् विश्वंभरामेतां[3] भरताय प्रयच्छ तत् ॥ ४२६ ॥
अद्यैव गृह्यतामेषा मद्भूरित्यभिधाय ताम् । सलक्ष्मणं समाहूय रामं दशरथोऽवदत् ॥ ४२७ ॥
अस्याः सारथ्यतुष्टेन दत्तः पूर्वं मया वरः । सोऽयं भरतराज्येन कैकेय्या याचितोऽधुना ॥ ४२८ ॥
रामोऽपि हृष्टोऽभाषिष्ट मात्रेदं साधु याचितम् । यन्मद्भ्रात्रे भरताय राज्यदानं महौजसे ॥ ४२९ ॥
आपप्रच्छे प्रसादान्मामिदं तातस्तथाप्यदः । दुनोति मामविनयसूचनाकारणं[4] जने ॥ ४३० ॥
अप्येकवंदिने राज्यं तुष्टस्तातो ददात्वदः । निषेधेऽनुमतौ वा मे न स्वाम्यं पत्तिमानिनः[5] ॥ ४३१ ॥
भरतोऽप्यहमेवास्मि निर्विशेषावुभौ तव । अतोऽभिषिच्यतां राज्ये भरतः परया मुदा ॥ ४३२ ॥
इति रामवचः श्रुत्वा भूपतिः प्रीतिविस्मितः । आदिशन्मंत्रिणो यावद्भरतस्तावदब्रवीत् ॥ ४३३ ॥
स्वामिन् सह व्रतादानमादावप्यर्थितं मया । तात तन्नान्यथा कर्तुं कस्यापि वचसार्हसि ॥ ४३४ ॥
राजाप्युवाच मा वत्स मत्प्रतिज्ञां मुधा कुरु । वरो मया हि त्वन्मातुर्दत्तो न्यासीकृतश्चिरम् ॥ ४३५ ॥

१ हे सत्यप्रतिज्ञ । २ प्रस्तरः पाषाणः । ३ पृथ्वीम् । ४ अविनयसूचनस्य कारणम् । ५ पत्तिसदृशस्य मम नाधिपत्यम् ।

सोऽद्य ते राज्यदानेन कैकेय्या याचितोऽनघ । आज्ञां मम च मातुश्च नान्यथा कर्तुमर्हसि ॥ ४३६ ॥
रामो भरतमित्यूचे न ते गर्वोऽस्ति यद्यपि । तथापि सत्यापयितुं तातं त्वं राज्यमुद्वह ॥ ४३७ ॥
अथाश्रुभरितदृष्टिर्भरतो गद्गदाक्षरम् । पतित्वा पादयो राममित्युवाच कृतांजलिः ॥ ४३८ ॥
तातपादार्यपादानां महेच्छानामदः खलु । उचितं ददतां राज्यमाददानस्य मे न तु ॥ ४३९ ॥
तातस्य सूनुः किं नाहं किं वा नार्यस्य चानुजः । सत्यं मातृमुखोऽस्म्येष गर्वमेवं करोमि चेत् ॥ ४४० ॥
रामो राजानमित्यूचे भरतो मयि सत्यसौ । राज्यं नादास्यते तस्माद्वनवासाय याम्यहम् ॥ ४४१ ॥
इत्यनुज्ञाप्य राजानं रामो नत्वा च भक्तितः । भरते च रुदत्युच्चैर्निर्ययौ चापतूणवान् ॥ ४४२ ॥
वनवासाय गच्छंतं दृष्ट्वा दशरथः सुतम् । भूयो भूयो ययौ मूर्छामतुच्छां स्नेहकातरः ॥ ४४३ ॥
अथापराजितां देवीं नत्वा रामोऽभ्यधादिति । मातर्यथाहं तनयो भरतोऽपि तथैव ते ॥ ४४४ ॥
स्वां सत्यापयितुं संधां तस्मै राज्यमदात्पिता । मयि सत्येष नादत्ते तद्गंतव्यं मया वने ॥ ४४५ ॥
तद्दृशा भरतं पश्येः सविशेषप्रसादया । कदाचिदपि मा भूस्त्वं मद्वियोगेन कातरा ॥ ४४६ ॥
तामाकर्ण्य गिरं देवी पपात भुवि मूर्छिता । चेटीभिश्चंदनांभोभिः सिक्तोत्तस्थावुवाच च ॥ ४४७ ॥
आः केन जीवितास्म्येषा मूर्छा हि सुखमृत्यवे । सहिष्ये रामविरहदुःखं जीवंत्यहं कथम् ॥ ४४८ ॥
वनं व्रजिष्यति सुतः पतिश्च प्रव्रजिष्यति । श्रुत्वाप्येतन्न यद्दीर्णा कौशल्ये वज्रमय्यसि ॥ ४४९ ॥
रामो जगाद भूयोऽपि मातः पत्न्यसि मत्पितुः । ततः किमिदमारब्धं कातरस्त्रीजनोचितम् ॥ ४५० ॥

१ तस्मात्कारणात् । २ कौशल्येत्यपराजिताया अपरं नाम ।

वनान्यटितुमेकाकी याति केसरिणीसुतः । स्वस्था तु केसरिण्यास्ते न ताम्यति मनागपि ॥ ४५१ ॥
तातस्य ऋणमस्त्युच्चैः प्रतिपन्नवरो ह्ययम् । अत्र स्थिते च मय्येव तस्यानृण्यं भवेत्कथम् ॥ ४५२ ॥
इत्यादियुक्तिवचनैर्बोधयित्वापराजिताम् । तां नत्वान्याश्च जननीर्निर्ययौ लक्ष्मणाग्रजः ॥ ४५३ ॥
दूराद्दशरथं नत्वा सीतोपेत्यापराजिताम् । नत्वा चायाचतादेशं रामानुगमनं प्रति ॥ ४५४ ॥
ऊचेऽपराजिता देवी क्रोडमारोप्य जानकीम् । बालामिव स्नपयंती कवोष्णैर्नयनोदकैः ॥ ४५५ ॥
वत्से वत्सो रामभद्रो विनयी पित्रनुज्ञया । वनं प्रयाति तस्यैतन्नृसिंहस्य न दुष्करम् ॥ ४५६ ॥
देवीव[३] लालितासि त्वमाजन्मोत्तमवाहनैः । सहिष्यसे कथं वत्से पादचंक्रमणव्यथाम् ॥ ४५७ ॥
तवांगं सौकुमार्येण कमलोदरसोदरम् । क्लिष्टं तापादिना कुर्यात्क्लेशं दाशरथेरपि ॥ ४५८ ॥
स्वभर्तुरनुयानेनानिष्टकष्टागमेन च । न निषेधं न चानुज्ञां यांत्यास्ते कर्तुमुत्सहे ॥ ४५९ ॥
सीताप्युवाच निःशोका नमस्कृत्यापराजिताम् । दधती प्रातरुत्फुल्लसरोरुहमिवाननम् ॥ ४६० ॥
अधित्वदस्तु मे भक्तिर्नित्यं क्षेमंकरा पथि । एषाहमनुयास्यामि रामं विद्युदिवांबुदम् ॥ ४६१ ॥
इत्युक्त्वा तां पुनर्नत्वा निर्ययौ जनकात्मजा । आत्मानमात्मारामेव ध्यायंती लक्ष्मणाग्रजम् ॥ ४६२ ॥
अहो अत्यंतमनया पतिभक्त्याद्य जानकी । आद्योदाहरणं जज्ञे पतिदेवतयोषिताम् ॥ ४६३ ॥
कष्टादभीता सीतेयं सतीजनमतल्लिका । अहो शीलेन महता पुनाति स्वं कुलद्वयम् ॥ ४६४ ॥

---

१ सिंहीपुत्रः । २ अकम् । ३ पट्टराज्ञीव । ४ रामस्यापि क्लेशं कुर्यात्तापादिना क्लिष्ट तवागम् कर्तृ । ५ त्वयीत्यधित्वत् । ६ पतिरेव दैवतं यासां तासां नारीणाम् । ७ सतीसमूहे प्रशस्या ।

इति व्यावर्णयन्तीभिः शोकगद्गदया गिरा । पौरीभिः कथमप्येभिः सीता यांती वनं प्रति ॥ ४६५ ॥
॥ त्रिभिर्विशेषकम् ॥

रामं वनाय निर्यातं श्रुत्वा सपदि लक्ष्मणः । सद्यः संधुक्षितक्रोधवह्निर्दध्याविदं हृदि ॥ ४६६ ॥
ऋजुस्तातः प्रकृत्यापि प्रकृत्यानृजवः स्त्रियः । इयच्चिरं वरं धृत्वा याचते सान्यथा कथम् ॥ ४६७ ॥
दत्तमेतावता राज्यं भरताय महीभुजा । अपनीतमृणं स्वस्य गता नश्च पितृणभीः ॥ ४६८ ॥
निर्भयः सांप्रतं हृत्वा भरतात् कुलपांसनात्[3] । न्यस्यामि राज्यं किं रामे विरामाय निजक्रुधः[1] ॥ ४६९ ॥
अथवासौ महासत्त्वस्तृणवद्राज्यमुज्झितम् । रामो नादास्यते दुःखं तातस्य तु भविष्यति ॥ ४७० ॥
तातस्य मा स्म भूद्दुःखं राजास्तु भरतोऽपि हि । अहं त्वनुगमिष्यामि रामपादान् पदातिवत् ॥ ४७१ ॥
एवं विचिंत्य सौमित्रिर्नत्वापृच्छ्य च भूपतिम् । ययौ सुमित्रामाप्रष्टुं नत्वा चैवमवोचत ॥ ४७२ ॥
गमिष्यति वनं रामोऽनुगमिष्यामि तं त्वहम् । मर्यादाब्धिं विना ह्यार्यं न स्थातुं लक्ष्मणः क्षमः ॥ ४७३ ॥
कथंचिद्धैर्यमालंब्य सुमित्राप्यब्रवीदिदम् । साधु वत्सासि मे वत्सो ज्येष्ठं यदनुगच्छसि ॥ ४७४ ॥
मां नमस्कृत्य वत्सोऽद्य रामभद्रश्चिरं गतः । अतिदूरे भवति ते मा विलंबस्व वत्स तत् ॥ ४७५ ॥
इदं साध्वंब साध्वंब मदंबासीत्युदीर्य ताम् । नत्वा च लक्ष्मणोऽगच्छत् प्रणंतुमपराजिताम् ॥ ४७६ ॥
तां नत्वोवाच सौमित्रिरार्य एकाक्यगाच्चिरम् । त्वामाप्रष्टुमहं त्वागामार्यानुगमनोत्सुकः ॥ ४७७ ॥
उदश्रुरूचे कौशल्या मंदभाग्यास्मि हा हता । वत्स त्वमपि मां मुक्त्वा प्रस्थितोऽसि वनाय यत् ॥ ४७८ ॥

१ दीप्तः क्रोधाग्निर्यस्य सः । २ वक्राः । ३ कुलाधमात् ।

त्वमेकोऽत्रावतिष्ठस्व मा प्रतिष्ठस्व लक्ष्मण । ममाश्वासकृते रामविरहार्दितचेतसः ॥ ४७९ ॥
प्रत्यूचे लक्ष्मणोऽप्येवं माता रामस्य नन्वसि । मातः कृतमधैर्येणार्हेण सामान्ययोपिताम् ॥ ४८० ॥
दूरे गच्छति मे बंधुरनुयास्यामि तं द्रुतम् । तद्विघ्नं मा कृथा देवि रामनिघ्नः सदाप्यहम् ॥ ४८१ ॥
तामित्युक्त्वा च नत्वा च सौमित्रिरथ सत्वरम् । अनुधाव्यागमत् सीतारामौ कार्मुकतूणभृत् ॥४८२॥
त्रयोऽपि निर्ययुः पुर्या विकस्वरमुखांबुजाः । विलासोपवनायेव वनवासाय सोद्यमाः ॥ ४८३ ॥
प्राणैरिव विनिर्यद्भिर्मैथिलीरामलक्ष्मणैः । कष्टां नराश्च नार्यश्च नगर्यां लेभिरे दशाम् ॥ ४८४ ॥
वेगात्तानन्वधावन्तानुरागेण गरीयसा । नागराः क्रूरकैकेयीविध्योराक्रोशदायिनः ॥ ४८५ ॥
बाष्पायमाणो राजापि सांतःपुरपरिच्छदः । द्रुतमन्वसरद्राममाकृष्टः स्नेहरज्जुभिः ॥ ४८६ ॥
द्रुतं राज्ञि जने चापि रामभद्रानुगामिनी । नगर्ययोध्या समभूदुद्वसेव[3] समंततः ॥ ४८७ ॥
अथावस्थाय काकुत्स्थः पितरं जननीरपि । न्यवर्तयत्कथमपि गिरा विनयसारया ॥ ४८८ ॥
तथा यथोचितालापैः पौरानपि विसृज्य सः । सीतासौमित्रिसहितस्त्वरितत्वरितं ययौ ॥ ४८९ ॥
ग्रामे ग्रामे ग्रामवृद्धैर्महेभ्यैश्च पुरे पुरे । प्रार्थ्यमानोऽप्यवस्थातुं काकुत्स्थो न ह्यवास्थित ॥ ४९० ॥
इतश्च भरतो राज्यं नाददे किं तु प्रत्युत । कैकेयीं स्वं च चुक्रोश स्वभ्रातृविरहासहः ॥ ४९१ ॥
परिव्रज्योत्सुको राजा सामंतान् सचिवानपि । प्राहिणोद्राममानेतुं राज्याय सहलक्ष्मणम् ॥ ४९२ ॥

१ रामाधीनः । २ क्रूरायाः कैकेय्या विधेरदृष्टस्य च । ३ उद्वसा निर्जना 'उजड' इति भाषायां अनुकरणे । ४ रामः ।

पश्चिमायायिनं रामं प्रापुस्त्वरितमेव ते । निवृत्त्यै चान्यधुर्भक्त्या राजाज्ञाख्यानपूर्वकम् ॥ ४९३ ॥
तैर्दीनैः प्रार्थ्यमानोऽपि न न्यवर्तत राघवः । महतां हि प्रतिज्ञा तु न चलत्यद्रिपादवत् ॥ ४९४ ॥
विसृज्यमाना अपि ते राघवेण मुहुर्मुहुः । सहैव चेलुः सर्वेऽपि कृताशास्तन्निवर्तने ॥ ४९५ ॥
अथोग्रश्वापदपदं निर्मानुष्यां घनद्रुमाम् । पारियात्राटवीं प्रापुर्जानकीरामलक्ष्मणाः ॥ ४९६ ॥
अभिधानेन गंभीरां गंभीरावर्तभीषणाम् । पृथुप्रवाहां पथि ते समीक्षांचक्रिरे नदीम् ॥ ४९७ ॥
तत्र स्थित्वावदद्रामः सामंतादीनिदं वचः । इतः स्थानान्निवर्तध्वमध्वा कष्टो ह्यतः परम् ॥ ४९८ ॥
अस्माकं कुशलोदंतं गत्वा तातस्य शंसत । उपाध्वं भरतं मद्वत्तातवच्चाप्यतः परम् ॥ ४९९ ॥
धिगस्मान्रामपादानामयोग्यानिति भूरिशः । ते रुदन्तो न्यवर्तन्त बाष्पांभःस्तिमितांशुकाः ॥ ५०० ॥
उत्ततार ततो रामो दुस्तरां तां तरंगिणीम् । ससीतालक्ष्मणः सास्रैः प्रेक्षितस्तैस्तटस्थितैः ॥ ५०१ ॥
रामेऽथ दृक्पथातीते सामंताद्याः कथंचन । अयोध्यानगरीमीयुस्तद्राज्ञे व्याचचक्षिरे ॥ ५०२ ॥
राजाप्युवाच भरतं नायातौ रामलक्ष्मणौ । राज्यं गृहाण मम तद्दीक्षाविघ्नाय मा स्म भूः ॥ ५०३ ॥
भरतोऽप्यवदद्राज्यं नादास्येऽहं कथंचन । आनेष्ये तु स्वयं गत्वा प्रसाद्य निजमग्रजम् ॥ ५०४ ॥
आगात्तदा च कैकेयी राजानमिति चाब्रवीत् । भरताय त्वया राज्यं दत्तं सत्यप्रतिश्रव ॥ ५०५ ॥
परमेष न गृह्णाति राज्यं ते विनयी सुतः । अन्यासां चास्य मातॄणां महद्दुःखं ममापि च ॥ ५०६ ॥

---

१ पश्चिमाया गामिनम् । २ निवर्तनाय । ३ पर्वतप्रत्यंतवत् । ४ बद्धाशाः । ५ पारियात्रनामा कुलाचलस्तस्याटवीं केचित् सौराष्ट्रदेशेषु प्रसिद्धं 'बरडा' इत्याख्यंगिरिं पारियात्रं वदन्ति । ६ सेवध्वम् । ७ बाष्पजलेनार्द्रवस्त्राणि येषां ते । ८ अश्रुसहितैः ।

अविमृष्य विधायिन्या पापीयस्या मया कृतम् । सति त्वयि सपुत्रेऽपि हहा राज्यमराजकम् ॥ ५०७ ॥
कौशल्यायाः सुमित्रायाः सुप्रजायाश्च दुःश्रवम् । रुदितं मम शृण्वंत्या हृदयं भवति द्विधा ॥ ५०८ ॥
भरतेन समं गत्वा तौ वत्सौ रामलक्ष्मणौ । अनुनीय समानेष्याम्यनुजानीहि नाथ माम् ॥ ५०९ ॥
अथादिष्टा प्रहृष्टेन राज्ञा दशरथेन सा । ययौ सभरतामात्या प्रति रामं कृतत्वरा ॥ ५१० ॥
कैकेयीभरतौ षड्भिः प्रापतुस्तद्वनं दिनैः । अपश्यतां द्रुमूले च जानकीरामलक्ष्मणान् ॥ ५११ ॥
रथादुत्तीर्य कैकेयी वत्स वत्सेति भाषिणी । प्रणमंतं रामभद्रं चुचुंबोपरि मूर्धनि ॥ ५१२ ॥
पादाब्जयोः प्रणमन्तौ वैदेहीलक्ष्मणावपि । आक्रम्योपरि बाहुभ्यां तारतारं रुरोद सा ॥ ५१३ ॥
भरतोऽपि नमश्चक्रे रामपादावुदश्रुदृक् । प्रत्यपद्यत मूर्छां च मूर्छत्[1]खेदमहाविषः ॥ ५१४ ॥
बोधितो रामभद्रेण विनयी भरतोऽवदत् । अभक्तमिव मां त्यक्त्वा कथमत्र त्वमागमः ॥ ५१५ ॥
राज्यार्थी भरत इति मातृदोषेण योऽभवत् । ममापवादो हर तमात्मना सह मां नयन् ॥ ५१६ ॥
निवृत्य यद्वायोध्यायां गत्वा राज्यश्रियं श्रय । कौलीनशल्यं[2] मे भ्रातरेवमप्यपयास्यति ॥ ५१७ ॥
जगन्मित्रं हि सौमित्रिस्तवामात्यो भविष्यति । अयं जनः प्रतीहारः शत्रुघ्नस्त्वातपत्रभृत् ॥ ५१८ ॥
एवं ब्रुवाणे भरते कैकेय्यप्यब्रवीदिदम् । कुरु भ्रातृवचो वत्स सदासि मातृवत्सलः ॥ ५१९ ॥
अत्र न त्वत्पितुर्दोषो न दोषो भरतस्य च । कैकेय्या एव दोषोऽयं सुलभः स्त्रीस्वभावतः ॥ ५२० ॥
कौलट्यवर्जा[3] ये केऽपि दोषाः स्त्रीणां पृथक् पृथक् । ते सर्वे कृतसंस्थाना मयि दोषखनाविव ॥ ५२१ ॥

---

१ मूर्छत् व्याप्तीभवत् खेद एव महाविषं यस्य सः । २ कुलनाशक शल्यम् । ३ कुलटायाः कर्म कौलट्यं तद्वर्जाः ।

पत्युः सुतानां तन्मातृजनस्य च मया कृतम् । इदं दुःखाकरं कर्म तत्सहस्व सुतोऽसि यत् ॥ ५२२ ॥
इत्यादि साश्रु जल्पंतीं तामूचे लक्ष्मणाग्रजः । तातस्य सूनुर्भूत्वाहं प्रतिज्ञातं त्यजामि किम् ॥ ५२३ ॥
तातेन दत्तमेतस्मै राज्यं ह्यनुमतं मया । अस्त्वन्यथा कथंकारं वाग्द्वयोर्जीवतोरपि ॥ ५२४ ॥
तदस्तु भरतो राजा द्वयोरपि निदेशतः । अस्यास्म्यहमनुल्लंघ्यो मम तात इवांबिके ॥ ५२५ ॥
इत्युक्त्वोत्थाय काकुत्स्थः सीतानीतजलैः स्वयम् । राज्येऽभ्यपिंचद्भरतं सर्वसामंतसाक्षिकम् ॥ ५२६ ॥
रामः प्रणम्य कैकेयीं संभाष्य भरतं तथा । विससर्ज प्रतस्थे च केकुभं दक्षिणां प्रति ॥ ५२७ ॥
ययावयोध्यां भरतस्तत्र चाखंडशासनः । धुरीचक्रे राज्यभारं पितुर्भ्रातुश्च शासनात् ॥ ५२८ ॥
महामुनेः सत्यभूतेः पार्श्वे दशरथोऽप्यथ । भूयसा परिवारेण समं दीक्षामुपाददे ॥ ५२९ ॥
स्वभ्रातृवनवासेन भरतः शल्यितो हृदि । अर्हत्पूजोद्यतोऽरक्षद्राज्यं यामिकवत्सुधीः ॥ ५३० ॥

सौमित्रिमैथिलसुतासहितोऽथ रामो गच्छन्नतीत्य गिरिमध्वनि चित्रकूटम् ।
आसादयत्कतिपयैर्दिवसैरवंतिदेशैकदेशमवनिस्थितदेवदेश्यः ॥ ५३१ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि रामलक्ष्मणोत्पत्तिपरिणयनवनवासगमनो नाम चतुर्थः सर्गः समाप्तः ॥

---

१ अश्रुसहितं यथा स्यात्तथा । २ दिशम् ।

## ॥ अथ पंचमः सर्गः ॥

रामोऽथ विश्रमयितुं श्रांतामध्वनि जानकीम् । वटस्य मूले न्यषदद्गुह्यकानामिवेश्वरः ॥ १ ॥
तं देशं सर्वतो वीक्ष्य रामः सौमित्रिमभ्यधात् । देशः कस्यापि भीत्यायमधुनैवोद्वसोऽभवत् ॥ २ ॥
अशुष्ककुल्यान्युद्यानानीक्षुवाटाश्च सेक्षवः । सान्नानि च खलान्याहुर्नूतनोद्वसतामिह ॥ ३ ॥
तदा च रामः पप्रच्छ गच्छंतं जनमेककम् । किमुच्चचाल देशोऽयं क्व चासि चलितोऽनघ ॥ ४ ॥
सोऽप्यूचेऽवंतिदेशोऽस्मि पुर्यवंत्यां नरेश्वरः । अस्ति सिंहोदरो नाम सिंहवद्दुःसहो द्विषाम् ॥ ५ ॥
तस्य च प्रतिबद्धोऽस्ति[2] विषयेऽस्मिन्महामतिः । सामंतो वज्रकर्णाख्यो दशांगपुरनायकः ॥ ६ ॥
स पापर्द्ध्यां[3] गतोऽन्येद्युर्वनमध्ये महामुनिम् । कायोत्सर्गस्थमैक्षिष्ट नामतः प्रीतिवर्धनम् ॥ ७ ॥
किं तिष्ठसि द्रुम इवारण्येऽमुत्रेति तेन तु । अनुयुक्तो मुनिरात्महितार्थमिति सोऽवदत् ॥ ८ ॥
भूयोऽप्यूचे वज्रकर्णः खाद्यपेयादिवर्जिते । अत्र संपद्यतेऽरण्ये किं नामात्महितं तव ॥ ९ ॥
तं च योग्यं मुनिर्ज्ञात्वा धर्ममात्महितं जगौ । श्रावकत्वं सोऽपि सद्यः प्रपेदे तत्पुरः सुधीः ॥ १० ॥
विना च देवमर्हन्तं विना साधूंश्च नापरम् । नंस्यामीति तदग्रे स जग्राहाभिग्रहं दृढम् ॥ ११ ॥
ततश्च तं स वंदित्वागादशांगपुरं पुरम् । पालयन् श्रावकत्वं च चिंतयामासिवानिदम् ॥ १२ ॥

---

१ निर्जनः । २ अधीनः । ३ मृगयायाम् ।

सिंहोदरश्च मे वैरी भविष्यत्यनमस्कृतः ॥ १३ ॥
नमस्कार्यो मया नान्य इति तावदभिग्रहः । सिंहोदरश्च मे वैरी भविष्यत्यनमस्कृतः ॥ १३ ॥
एवं विमृश्योत्प्रतिज्ञः स्वांगुलीये मणीमयीम् । मुनिसुव्रतनाथस्य प्रतिमां संन्यवीविशत् ॥ १४ ॥
तद्बिंबं स्वांगुलीयस्थं नमन् वंचयते स्म सः । सिंहोदरं नरपतिं मायोपायो बलीयसि ॥ १५ ॥
तं वज्रकर्णवृत्तांतं सिंहोदरमहीपतेः । आचचक्षे खलः कोऽपि खलाः सर्वंकषाः खलु ॥ १६ ॥
सद्यः सिंहोदरोऽकुप्यन्महाहिरिव निःश्वसन् । वज्रकर्णाय तत्कोपं कोऽप्यागत्य शशंस च ॥ १७ ॥
तस्य कोपो मयि कथं त्वया ज्ञात इति स्फुटम् । वज्रकर्णेन पृष्टः सन्नाचख्यौ स पुमानिति ॥ १८ ॥
पुरे कुंदपुरे श्राद्धः समुद्रसंगमो वणिक् । यमुना नाम तत्पत्नी विद्युदंगोस्मि तत्सुतः ॥ १९ ॥
क्रमाच्च यौवनं प्राप्तो भांडमादाय चागमम् । उज्जयिन्यामहं पुर्यां क्रयविक्रयहेतवे ॥ २० ॥
तत्र कामलतां नाम्ना पश्यं वेश्यां मृगीदृशम् । सद्यश्च कामबाणानामभूवमहमास्पदम् ॥ २१ ॥
निशामेकां वसामीति तया कृतसमागमः । दृढं रागेण बद्धोऽहं मृगो वागुरया यथा ॥ २२ ॥
आजन्म कष्टेन धनं यन्मत्पित्रार्जितं बहु । तद्दर्शने मया तत्तु षड्भिर्मासैर्विनाशितम् ॥ २३ ॥
सिंहोदरमहिष्याः श्रीधराया ये हि कुंडले । तादृशे देहि मह्यं त्वमित्यूचे सान्यदा तु माम् ॥ २४ ॥
न मेऽर्थः कश्चिदप्यस्ति ते एवापहराम्यहम् । इति रात्रौ साहसिकः खात्रेणागां नृपौकसि ॥ २५ ॥
सिंहोदरं श्रीधरेति पृच्छंती शुश्रुवे मया । नाथोद्विग्न इवेदानीं निद्रां न लभसे कथम् ॥ २६ ॥

१ उत्पन्ना प्रतिभा बुद्धिर्यस्य सः । २ माया कपटमेवोपायः । ३ सर्वं कषति नाशयंतीति सर्वंकषाश्छुरिकातुल्या इत्यर्थः । ४ पाशेन । ५ वेश्यावशेन. ।

सिंहोदरोऽवदद्देवि तावन्निद्रा कुतो मम । प्रणामविमुखो यावद्वज्रकर्णो न मार्यते ॥ २७ ॥
अमुं प्रातर्हनिष्यामि ससुहृत्पुत्रबांधवम् । यात्वियं रजनी तावद्विनिद्रस्यापि मे प्रिये ॥ २८ ॥
तदाकर्ण्य तवाख्यातुं त्यक्तकुंभलचौरिकः । त्वां साधर्मिकवात्सल्यादिह त्वरितमागमम् ॥ २९ ॥
वज्रकर्णस्तदाकर्ण्य पुरीं तृणकणाधिकाम् । सद्यो व्यधत्तापश्यच्च परचक्ररजोऽम्बरे ॥ ३० ॥
क्षणाच्चावेष्टयत सिंहोदरेण प्रबलैर्बलैः । तद्दशांगपुरं विष्वक् चंदनद्रुरिवाहिभिः ॥ ३१ ॥
सिंहोदरोऽथ दूतेन वज्रकर्णमदोऽवदत् । प्रणाममायया मायिन् वंचितोऽस्मि त्वया चिरम् ॥ ३२ ॥
विना तेनांगुलीयेन मामागत्य नमस्कुरु । अन्यथा सकुटुंबस्त्वं यमवेश्माद्य यास्यसि ॥ ३३ ॥
प्रत्यूचे वज्रकर्णोऽपि मम ह्ययमभिग्रहः । विनार्हंतं विना साधुं प्रणमाम्यपरं न हि ॥ ३४ ॥
न पौरुषाभिमानोत्र किं तु धर्माभिमानिता । नमस्कारं विना सर्वं ममादत्स्व यथारुचि ॥ ३५ ॥
धर्मद्वारं देहि मह्यं यथा धर्माय कुत्रचित् । अहमन्यत्र गच्छामि धर्म एवास्तु मे धनम् ॥ ३६ ॥
इत्युक्ते वज्रकर्णेन न हि तत्प्रत्यपादि सः । जातु धर्ममधर्मं वा गणयंति न मानिनः ॥ ३७ ॥
पुरं सवज्रकर्णं तद्रुध्ध्वा सिंहोदरो बहिः । स्थितोऽस्ति मुष्णन् देशश्च तद्भयादयमुद्भसः ॥ ३८ ॥
अहं च सकुटुंबोऽपि नष्टोऽस्मिन् राजविग्रहे । दग्धान्यत्राद्य सौधानि जीर्णा सा च कुटी मम ॥ ३९ ॥
शून्येभ्य इभ्यवेश्मभ्यो वेश्मोपकरणान्यहम् । आनेतुं क्रूरगेहिन्या प्रेषितो यामि तन्मुखः ॥ ४० ॥
तस्या दुर्वचसोऽप्येतत्फलं शुभमभून्मम । यन्मया देवकल्पस्त्वं दृष्टो दैववशादसि ॥ ४१ ॥

---

१ गृहाण । २ देवसदृशः ।

एवमुक्तवतस्तस्य दरिद्रस्य रघूद्वहः । रत्नस्वर्णमयं सूत्रमदत्त करुणानिधिः ॥ ४२ ॥
तं विसृज्य ततो रामो दशांगपुरमीयिवान् । चंद्रप्रभं बहिश्चैत्ये नत्वा तत्राप्यवास्थित ॥ ४३ ॥
रामादेशेन सौमित्रिस्तत्प्रविश्य क्षणात् पुरम् । वज्रकर्णांतिकेऽगच्छदलक्ष्याणां ह्यसौ स्थितिः ॥ ४४ ॥
वज्रकर्णः सदाकारं ज्ञात्वा तं नरमुत्तमम् । । ऊचे महाभाग भव भोजनातिथ्यभाग् मम ॥ ४५ ॥
रामानुजोऽप्यभिदधे सकलत्रो मम प्रभुः । स्थितोऽस्ति बहिरुद्याने तमादौ भोजयाम्यहम् ॥ ४६ ॥
ततः सौमित्रिणा सार्धं वज्रकर्णो महीपतिः । भूयिष्ठव्यंजनं[1] भोज्यमुपराममनाययत्[2] ॥ ४७ ॥
भुक्तोत्तरे चानुशिष्य रामेण प्रेषितो ययौ । लक्ष्मणोऽवन्तिनृपतिं जगादेति च सौष्ठवी[3] ॥ ४८ ॥
राजा दाशरथिर्दासीकृताशेषमहीपतिः । विरोधं वज्रकर्णेन भरतस्ते निषेधति ॥ ४९ ॥
सिंहोदरोऽपि प्रत्यूचे भृत्यानां भरतोऽपि हि । भक्तानामेव कुरुते प्रसादं नान्यथा पुनः ॥ ५० ॥
अयं पुनर्वज्रकर्णो मत्सामंतो दुराशयः । न मां नमति तेनास्य प्रसीदामि कथं वद ॥ ५१ ॥
भूयोऽपि लक्ष्मणोऽवोचन्नासावविनयी त्वयि । अस्याप्रणामसंधा[4] हि जज्ञे धर्मानुरोधतः ॥ ५२ ॥
मा कुप्यो वज्रकर्णोऽयं मान्यं भरतशासनम् । आसमुद्रांतमेदिन्या भरतः शासिता यतः ॥ ५३ ॥
क्रुद्धः सिंहोदरः स्माह को नाम भरतो नृपः । यो वज्रकर्णगृह्यः[5] सन् वातुलो मां वदत्यदः ॥ ५४ ॥
कोपारुणाक्षः सौमित्रिः स्फुरदोष्ठदलोऽवदत् । रे न जानासि भरतं ज्ञापयाम्येष मंक्षु तम् ॥ ५५ ॥
उत्तिष्ठस्व युधे सर्वात्मना संवर्मितो भव । न भवस्येष गोधेव मज्जुजाशनिताडितः ॥ ५६ ॥

---

१ बहुतराणि शाकानि यस्मिंस्तत् । २ प्रापयत् । ३ सौष्ठवं भद्रत्वमस्यास्तीति । ४ प्रणामाकरणे प्रतिज्ञा । ५ वज्रकर्णस्य पक्षपाती।

सिंहोदरः ससैन्योऽथ सौमित्रिं हंतुमुद्यतः । बालः परिस्प्रष्टुमिव भस्मछन्नं हुताशनम् ॥ ५७ ॥
लक्ष्मणोऽपि गजालानं भुजेनोन्मूल्य नालवत् । विद्विषस्ताडयामासोर्द्धस्तदंड इवांतकः ॥ ५८ ॥
अथ सौमित्रिरुत्पत्य सिंहोदरमिभस्थितम् । तद्वाससा पशुमिवाबध्नात् कंठे महाभुजः ॥ ५९ ॥
आश्चर्यं पश्यतां तत्र दशांगपुरवासिनाम् । तं निन्ये गामिवाकृष्य लक्ष्मणो रामसंनिधौ ॥ ६० ॥
दृष्ट्वा सिंहोदरो रामं नत्वा चेदमभाषत । न ज्ञातस्त्वमिहायातो मया रघुकुलोद्वह ॥ ६१ ॥
अथवा किमिदं देव मत्परीक्षाकृते कृतम् । कृतं नः प्राणितेनापि यूयं छलपरा यदि ॥ ६२ ॥
क्षमस्वाज्ञानदोषं मे यत्कर्तव्यं तदादिश । भृत्ये कोपः शिक्षामात्रकृते शिष्ये गुरोरिव ॥ ६३ ॥
संधेहि वज्रकर्णेनेत्यादिशत्तं रघूद्वहः । सिंहोदरोऽपि तां वाचं तथेति प्रत्यपद्यत ॥ ६४ ॥
तत्रागाद्वज्रकर्णोऽपि रामभद्रस्य शासनात् । विनयेन पुरोभूय कृतांजलिरुवाच च ॥ ६५ ॥
स्वामिनौ वृषभस्वामिवंशजौ रामशार्ङ्गिणौ । युवां दृष्टौ मया दिष्ट्या किं तु ज्ञातौ चिरादिह ॥ ६६ ॥
भरतार्धस्य सर्वस्य युवां नाथौ महाभुजौ । अहमन्ये च राजानो युवयोरेव किंकराः ॥ ६७ ॥
मुंचैनं मत्प्रभुं नाथ शाधि चैनमतः परम् । यथासौ सहते मेऽन्यप्रणामाभिग्रहं सदा ॥ ६८ ॥
विनार्हन्तं विना साधुं नमस्यो नापरो मया । इति ह्यभिग्रहोऽग्राहि महर्षेः प्रीतिवर्धनात् ॥ ६९ ॥
रामभ्रूसंज्ञया सिंहोदरस्तत्प्रत्यपद्यत । सौमित्रिणा विमुक्तः सन् वज्रकर्णं च सस्वजे ॥ ७० ॥
सिंहोदरोऽपि परया प्रीत्या राघवसाक्षिकम् । राज्यार्धं वज्रकर्णाय सोदरायेव दत्तवान् ॥ ७१ ॥

१ गजबंधनस्तंभं । २ ऊर्ध्वीकृत दंडः । ३ शिक्षां देहि ।

श्रीधराकुक्षिले ते च याचित्वावंतिपार्थिवात् । अदत्त विद्युदंगाय दशांगपुरपार्थिवः ॥ ७२ ॥
सौमित्रये वज्रकर्णो ददावष्टौ स्वकन्यकाः । सिंहोदरः ससामंतः पुनः कन्याशतत्रयम् ॥ ७३ ॥
अथोचे लक्ष्मणः कन्याः पार्श्वे वः संतु संप्रति । भ्राता नो भरतो राज्ये यतः पित्रा निवेशितः ॥ ७४ ॥
समयेऽङ्गीकृतराज्यः परिणेष्यामि वः सुताः । इदानीं तु वयं गत्वा स्थास्यामो मलयाचले ॥ ७५ ॥
ओमित्युक्त्वा स्थितौ वज्रकर्णसिंहोदरौ नृपौ । विसृष्टौ रामभद्रेणेयतुर्निजनिजं पुरम् ॥ ७६ ॥
रामस्तत्र निशां नीत्वा ससीतालक्ष्मणः प्रगे । गच्छन् क्रमेण संप्राप देशं कमपि निर्जलम् ॥ ७७ ॥
पिपासितायां सीतायां विश्रांतायां तरोस्तले । रामाज्ञयाथ सौमित्रिर्जलमानेतुमन्यगात् ॥ ७८ ॥
गच्छन् सरो ददर्शैकमनेकाम्भोजमण्डितम् । दूरादानंदजननं वयस्यमिव वल्लभम् ॥ ७९ ॥
तदा च क्रीडितुं तत्रागात् कूबरपुराधिभूः[1] । नृपः कल्याणमालाख्यः प्रेक्षांचक्रे च लक्ष्मणम् ॥ ८० ॥
स कामबाणैः सद्योऽपि बिभिदे भिदुरात्मकैः[2] । नत्वा लक्ष्मणमूचे च भव मे भोजनातिथिः ॥ ८१ ॥
विकारं मान्मथं देहलक्षणानि च लक्ष्मणः । निरीक्ष्य दध्यौ नार्येषा पुंवेषा कारणेन तु ॥ ८२ ॥
ध्यात्वेत्युवाच सौमित्रिः सभार्योऽस्ति मम प्रभुः । इतश्चादूरदेशेऽस्मिन् भुंजे तेन विना न हि ॥ ८३ ॥
तेन प्रधानपुरुषैर्भद्राकारैः प्रियंवदैः । तत्रानिन्ये समभ्यर्थ्य ससीतोऽपि रघूद्वहः ॥ ८४ ॥
[3]सोऽनमस्यद्रामभद्रं भद्रधीर्मैथिलीमपि । तयोः कृते पटकुटीं[4] तत्कालं च न्यवेशयत् ॥ ८५ ॥
तत्र रामं कृतस्नानभोजनं स उपाययौ । सहैकमंत्रिणा युक्तः स्त्रीवेशो निःपरिच्छदः ॥ ८६ ॥

१ अधिभू राजा । २ मेदनशील आत्मा येषां तैः । ३ कूबरपतिः । ४ वस्त्रगृहम्, तम्बु इति लोके ।

लज्जानतमुखीं तां च निजगादेति राघवः । भद्र पुरुषवेषेण स्त्रीभावं निह्नुषे कुतः ॥ ८७ ॥
ऊचेऽथ कूबरपतिः कूबरेऽस्मिन् महापुरे । वालिखिल्यो नाम राजा पृथ्वीनामास्य तु प्रिया ॥ ८८ ॥
आपन्नसत्वा सा जज्ञेऽन्येद्युर्म्लेच्छैर्महाभटैः । [1]अवस्कंदागतैर्निन्ये वालिखिल्यो नि[2]यम्य सः ॥ ८९ ॥
पश्चाच्च पृथिवी देवी तनयां मामसूत सा । पुत्रोऽजनीति चाघोषि सचिवेन सुबुद्धिना ॥ ९० ॥
तज्ज्ञापितः पुत्रजन्म प्रभुः सिंहोदरोऽवदत् । तत्र राजास्तु बालोऽयं वालखिल्यागमावधि ॥ ९१ ॥
क्रमेण वर्धमानाहं मूलात् पुंवेषधारिणी । मातृमंत्रिजनं मुक्त्वापरैरनुपलक्षिता ॥ ९२ ॥
राज्यं करोमि कल्याणमालाख्या प्रथिता सती । मंत्रिणां मंत्रसामर्थ्यात् स्यादलीकेऽपि सत्यता ॥ ९३ ॥
म्लेच्छानां भूरि यच्छामि द्रविणं पितृमुक्तये । द्रव्यमेते तु गृह्णंति मुंचंति पितरं न तु ॥ ९४ ॥
तत्प्रसीदत मे तातं तेभ्यो मोचयताधुना । सिंहोदरान्मोचितः प्राग्वज्रकर्णो नृपो यथा ॥ ९५ ॥
रामोऽप्युवाच पुंवेषैव स्वराज्यं प्रशासती[3] । यावद्गत्वा मोचयामो म्लेच्छेभ्यः पितरं तव ॥ ९६ ॥
महाप्रसाद इत्यूचे सा स्त्री पुंवेषधारिणी । ऊचे सुबुद्धिमंत्री तु लक्ष्मणोऽस्या वरोऽस्त्विति ॥ ९७ ॥
राघवोऽप्यब्रवीत्तातादेशाद्देशांतरं वयम् । यास्यामोऽथ निवृत्तेषु लक्ष्मणः परिणेष्यति ॥ ९८ ॥
प्रतिपद्येति काकुत्स्थस्तस्थौ तत्र दिनत्रयम् । निशाशेषे सुप्तजने ससीतालक्ष्मणो ययौ ॥ ९९ ॥
सापि प्रातरपश्यंती जानकीरामलक्ष्मणान् । विमनाः स्वं पुरमगाच्चक्रे राज्यं तथैव तु ॥ १०० ॥
प्राप क्रमेण रामोऽपि नर्मदामुत्ततार च । पथिकैर्वार्यमाणोऽपि विंध्याटव्यां विवेश च ॥ १०१ ॥

१ युद्धागतैः । २ बद्ध्वा । ३ शासनं कुर्वती सती तिष्ठत्यध्याहार्यम् ।

तत्रादौ दक्षिणदिशि कंटकिद्रुस्थितो ध्वांक्षः । ररास विरसं क्षीरद्रुस्थोऽन्यो मधुरं पुनः ॥ १०२ ॥
न विषादो न वा हर्षोऽभूद्रामस्य तथापि हि । शकुनं चाशकुनं च गणयंति हि दुर्बलाः ॥ १०३ ॥
गच्छन् ददर्श चागच्छन्म्लेच्छसैन्यमुदायुधम् । असंख्येन्नरथाश्वीयं देशघाताय निर्गतम् ॥ १०४ ॥
युवा सेनापतिस्तत्र दृष्ट्वा सीतां स्मरातुरः । स्वच्छन्दवृत्तिः स्वान् म्लेच्छानुच्चकैरेवमादिशत् ॥ १०५ ॥
अरे रे पथिकावेतौ नाशयित्वा विनाश्य वा । एतां वरस्त्रियं हृत्वा समानयत मत्कृते ॥ १०६ ॥
इत्युक्ताः सह तेनैवाधावन्त प्रति राघवम् । प्रहरन्तः शरप्रासप्रायैः प्रहरणैः शितैः ॥ १०७ ॥
उवाच लक्ष्मणो रामं तिष्ठार्येह सहार्यया । अमून् शुन इव म्लेच्छान् यावद्विद्रावयाम्यहम् ॥ १०८ ॥
इत्युक्त्वा लक्ष्मणोऽधिज्यं कृत्वा धनुरनादयत् । तन्नादाच्चात्रसन्म्लेच्छाः सिंहनादादिव द्विपाः ॥ १०९ ॥
असह्यश्चापनादोऽपि शरमोक्षोऽस्ति दूरतः । इत्थं विमृश्य स म्लेच्छराजो राममुपाययौ ॥ ११० ॥
विमुक्तशस्त्रो दीनास्यः स्यंदनादवतीर्य सः । रामपादं नमश्चक्रे क्रुधा सौमित्रिणेक्षितः ॥ १११ ॥
सोऽवोचदेव कौशांब्यां पुर्यां वैश्वानरो द्विजः । सावित्री नाम तत्पत्नी रुद्रदेवोऽस्मि तत्सुतः ॥ ११२ ॥
आजन्म क्रूरकर्मत्वात्तस्करः पारदारिकः । न तत्किमपि कर्मास्ति यत्पापो नाचराम्यहम् ॥ ११३ ॥
अथैकदा खात्रमुखे प्राप्तोऽहं राजपूरुषैः । शूलां समारोपयितुं नीतश्च नृपशासनात् ॥ ११४ ॥
उपशूलं च दीनोऽहमुपशूनमिव छगः । दृष्टः श्रावकवणिजा दत्वा दंडं च मोचितः ॥ ११५ ॥
मा कार्षीश्चौरिकां भूय इत्युदीर्य महात्मना । विसृष्टो वणिजा तेन तं देशं त्यक्तवानहम् ॥ ११६ ॥

१ काकः । २ कठोरम् । ३ तीक्ष्णैः । ४ परस्त्रीरतः । ५ प्राणिवधस्थानसमीपम् । ६ अजः ।

ज्रमन्नागामिमां पल्लीं काक इत्याख्ययान्यया । इह ख्यातः क्रमात्पल्लीपतित्वमिदमासदम् ॥ ११७ ॥
इह स्थितश्च लुंटाकैर्लुटयामि पुरादिकम् । आनयामि स्वयं गत्वा बंदे धृत्वा नृपानपि ॥ ११८ ॥
वश्योऽस्मि व्यंतर इव तव स्वामिन् समादिश । किंकरः किं करोम्येष सहस्वाविनयं मम ॥ ११९ ॥
वालिखिल्यं विमुंचेति रामेणोक्तः किरातराट् । तं मुमोच नमश्चक्रे वालिखिल्योऽपि राघवम् ॥ १२० ॥
रामाज्ञया च काकेन स निन्ये कूबरं पुनः । कल्याणमालां पुंवेषामपश्यच्च सुतां निजाम् ॥ १२१ ॥
रामलक्ष्मणवृत्तांतं मिथोऽकथयतां च तौ । कल्याणमालिकावालिखिल्यावखिलमप्यथ ॥ १२२ ॥
काकोऽपि स्वां ययौ पल्लिं ततो रामोऽपि निर्गतः । विंध्याटवीमतिक्रम्य प्राप तापीं महानदीम् ॥ १२३॥
तापीमुत्तीर्य च क्रामंस्तद्देशप्रांतवर्तिनम् । अरुणग्रामनामानं रामो ग्राममथासदत् ॥ १२४ ॥
पिपासितायां सीतायां तत्र रामः सलक्ष्मणः । गृहे ययौ कोपनस्य कपिलस्याग्निहोत्रिणः ॥ १२५ ॥
ब्राह्मणी च सुशर्माख्या तेभ्योऽदात् पृथगासनम् । स्वयं च पाययामास सलिलं स्वादु शीतलम् ॥१२६
आगात्तदा च कपिलः पिशाच इव दारुणः । निरीक्ष्य चोपविष्टांस्तान् रुष्टोऽभाषिष्ट गेहिनीम् ॥१२७॥
मलिनानां किमेतेषां प्रवेशो मम वेश्मनि । पापीयसि त्वया दत्तोऽग्निहोत्रमशुचीकृतम् ॥ १२८ ॥
एवमाक्रोशिनं विप्रं क्रूरं रामानुजः क्रुधा । करीवारमतोत्क्षिप्य परिभ्रमयितुं दिवि ॥.१२९ ॥
रामोऽप्युवाच को नाम कोपोऽस्मिन् कीटमात्रके । द्विजेभ्रुवं विब्रुवंतमप्यमुं मुंच मानद ॥ १३० ॥
रामाज्ञया च सौमित्रिस्तं मुमोच शनैर्द्विजम् । ससीतालक्ष्मणो रामो निर्जगाम च तद्गृहात् ॥ १३१ ॥

---

१ कोपवतः । २ अधमब्राह्मणम् ।

ते गच्छन्तः क्रमात्प्रापुररण्यमपरं महत् । कज्जलश्यामजलदः कालश्च समुपाययौ ॥ १३२ ॥
वर्षत्यब्दे च काकुत्स्थस्तस्थौ वटतरोरधः । वर्षाकालं वटेऽत्रैव नयाम इति चावदत् ॥ १३३ ॥
आकर्ण्य तद्वचो भीतस्तन्न्यग्रोधाधिदैवतम् । इभकर्णाभिधो यक्षो गोकर्णं स्वप्रभुं ययौ ॥ १३४ ॥
तं प्रणम्येत्यभाषिष्ट स्वामिन्नुद्वासितस्ततः । कैश्चिद्दुःसहतेजोभिर्निजावासाद्वटादहम् ॥ १३५ ॥
तत्कुरुष्व परित्राणमत्राणस्य मम प्रभो । ते हि स्थास्यंति सकलां प्रावृषं मद्वटद्रुमे ॥ १३६ ॥
गोकर्णोऽप्यवधिं ज्ञात्वा चख्याविति विचक्षणः । अर्च्यावेतौ गृहायातावष्टमौ रामशार्ङ्गिणौ ॥ १३७ ॥
इत्युक्त्वा निशि तत्रैत्य नवयोजनविस्तृताम् । द्वादशयोजनायामां धनधान्यादिपूरिताम् ॥ १३८ ॥
उत्तुंगवप्रप्रासादां भांडपूर्णापणावलिम् । पुरीं रामपुरीं नामाकृत रामाय सोऽमरः ॥ १३९ ॥
॥ युग्मम् ॥
प्रातर्मंगलशब्देन प्रबुद्धो राम ऐक्षत । तं वीणाधारिणं यक्षं महर्द्धिनगरीं च ताम् ॥ १४० ॥
सोऽवोचद्विस्मितं रामं स्वामी त्वमतिथिश्च मे । गोकर्णो नाम यक्षोऽहमकार्षं त्वत्कृते पुरीम् ॥ १४१ ॥
मया सपरिवारेण सेव्यमानो दिवानिशम् । इह तिष्ठ सुखं स्वामिन् यथाकालं यथारुचि ॥ १४२ ॥
इति तेनार्थितो रामो यक्षपुंभिर्निषेवितः । अवतस्थे सुखं तत्र सीतासौमित्रिसंयुतः ॥ १४३ ॥
इतश्च विप्रः कपिलः समिदादिकृतेऽन्यदा । भ्रमंस्तस्मिन्महारण्ये पर्शुपाणिः समाययौ ॥ १४४ ॥
स ददर्श पुरीं तां च दध्यौ चेतसि विस्मयात् । मायेयमिन्द्रजालं वा गांधर्वमथवा पुरम् ॥ १४५ ॥

तत्रैकां मानुषीरूपां चारुनेपथ्यवाससम् । सोऽपृच्छद्यक्षिणीं दृष्ट्वा कस्येयं नूतना पुरी ॥ १४६ ॥
सोचे गोकर्णयक्षेण कृतेयं नूतना पुरी । नाम्ना रामपुरी रामसीतासौमित्रिहेतवे ॥ १४७ ॥
दीनादिभ्यो ददात्यर्थमत्र रामो दयानिधिः । सर्वः कृतार्थीभूतोऽत्र यो यो दुःस्थः[1] समाययौ ॥ १४८ ॥
त्यक्त्वा सोऽपि समिद्भारं पतित्वा तत्पदाब्जयोः । ऊचे मया कथं रामो द्रष्टव्यः शंस मेऽनघे ॥ १४९ ॥
साप्यवादीदत्र पुर्यामस्ति द्वारचतुष्टयम् । नित्यं च रक्ष्यते यक्षैः प्रवेशोऽमुत्र दुर्लभः ॥ १५० ॥
पूर्वद्वारेऽत्र यच्चैत्यं तद्वंदित्वा यथाविधि । श्रावकीभूय चेद्यासि प्रवेशं लभसे तदा ॥ १५१ ॥
तद्गिरा कपिलोऽर्थार्थी[2] साधूनामंतिके ययौ । अभ्यवंदत तान् साधून् धर्मं तेभ्योऽशृणोच्च सः ॥१५२॥
ततः स लघुकर्मत्वाद्विशुद्धः श्रावकोऽभवत् । गत्वौको[3] धर्ममाख्याय भार्यां च श्राविकां व्यधात् ॥१५३
आजन्म दौस्थ्यदग्धौ तौ रामादर्थयितुं धनम् । उपेयतू रामपुरीं तच्च चैत्यं प्रणेमतुः ॥ १५४ ॥
राजवेश्म प्रविश्याथ मैथिलीरामलक्ष्मणान् । उपलक्ष्य विभायोच्चैर्दत्ताक्रोशान् द्विजः स्मरन् ॥ १५५ ॥
तं नंष्टुमनसं सानुक्रोशः[4] सौमित्रिरब्रवीत् । मा भैषीर्भो द्विजा[5]र्थी चेदेह्यर्थं प्रार्थयस्व तत् ॥ १५६ ॥
ततोऽपशंकः कपिलो गत्वा रामाय चाशिषम् । दत्वोपाविशदग्रे च गुह्यकैरर्पितासने ॥ १५७ ॥
कुतस्त्वमागतोऽसीति पृष्टो रामेण सोऽवदत् । किं मां न वेत्सि तं विप्रमरुणग्रामवासिनम् ॥ १५८ ॥
यूयं येनातिथीभूता अपि दुर्वचसा मया । आक्रुष्टा मोचितोऽस्म्यस्माद्युष्माभिश्च कृपापरैः ॥ १५९ ॥
सुशर्मा ब्राह्मणी सापि प्राग्वृत्ताख्यानपूर्वकम् । गत्वोपसीतं[6] दीनास्या प्रदत्ताशीरुपाविशत् ॥ १६० ॥

---

१ दुःखी । २ धनार्थी । ३ गृहम् । ४ दयासहितः । ५ द्विजेति संबोधनम् । ६ सीतायाः समीपम् ।

ततः स विप्रो द्रविणैः कृतार्थीकृत्य भूरिभिः । राघवेण विसृष्टः सन् स्वग्राममगमत् पुनः ॥ १६१ ॥
प्रबुद्धो ब्राह्मणः सोऽपि दत्वा दानं यथारुचि । नंदावतंससूरीणामन्तिके व्रतमग्रहीत् ॥ १६२ ॥
अथ प्रावृष्यतीतायां यियासुं प्रेक्ष्य राघवम् । गोकर्णयक्षो विनयादेवमूचे कृतांजलिः ॥ १६३ ॥
यद्यतो यास्यसि स्वामिंस्तत्प्रसीद क्षमस्व मे । यद्भक्तिस्खलितं किंचिन्मनागप्यभवत्त्वयि ॥ १६४ ॥
तवानुरूपां कः पूजां कर्तुमीशो महाभुज । इत्युक्त्वादत्त रामाय हारं नाम्ना स्वयंप्रभम् ॥ १६५ ॥
सौमित्रये च ताडंके दिव्यरत्नविनिर्मिते । चूडामणिं च सीतायै वीणां चेप्सितनादिनीम् ॥ १६६ ॥
रामोऽनुमान्य तं यक्षं प्रतस्थे स्वेच्छया ततः । तां पुरीमुपसंजह्रे सोऽपि यक्षः स्वयं कृताम् ॥ १६७ ॥
ते क्रामंतः प्रतिदिनं जानकीरामलक्ष्मणाः । त्यक्त्वारण्यानि विजयपुरं संध्याक्षणे ययुः ॥ १६८ ॥
तस्मिंश्च बहिरुद्याने मरुदिशि महीयसः । तले न्यग्रोधवृक्षस्य तेऽवात्सुर्वेश्मसन्निभे ॥ १६९ ॥
पुरे च तस्मिन्नभवद्राजा नाम्ना महीधरः । इंद्राणी नाम तत्पत्नी वनमालेति तत्सुता ॥ १७० ॥
वनमाला च बाल्येऽपि सौमित्रेर्गुणसंपदम् । रूपं चाकर्ण्य तं मुक्त्वा नान्यं वरमियेष सा ॥ १७१ ॥
तदा प्रव्रजितं श्रुत्वा नृपं दशरथं तथा । निर्गतौ रामसौमित्री विषण्णोऽभून्महीधरः ॥ १७२ ॥
अदत्त चंद्रनगरे वृषभक्ष्मापजन्मने[1] । नाम्ना सुरेन्द्ररूपाय वनमालां महीधरः ॥ १७३ ॥
वनमालापि तच्छ्रुत्वा मरणे कृतनिश्चया । तस्यां निश्येकिका दैवात्तदुद्यानमुपाययौ ॥ १७४ ॥
प्रविश्य तत्रायतनेऽपूजयद्वनदेवताम् । जन्मांतरेऽपि सौमित्रिः पतिर्मेऽस्त्वित्युवाच च ॥ १७५ ॥

१ वृषभनृपस्य पुत्राय ।

ययौ च सा तं न्यग्रोधं ददृशे लक्ष्मणेन च । प्रसुप्तजानकीरामयामिकेन प्रजाग्रता ॥ १७६ ॥
इदं च दध्यौ सौमित्रिः किमियं वनदेवता । अधिष्ठात्री वटतरोरस्य वा कापि यक्षिणी ॥ १७७ ॥
एवं चिंतयतस्तस्य साध्यारोहद्वटद्रुमम् । करिष्यति किमेषेति लक्ष्मणोऽप्यारुरोह तम् ॥ १७८ ॥
सा प्रोचे प्रांजलिर्भूत्वा मातरो वनदेवताः । दिग्देव्यो व्योमदेव्यश्च सर्वाः शृणुत मद्वचः ॥ १७९ ॥
नाभूदिह भवे तावन्मम भर्ता स लक्ष्मणः । भूयाद्भवांतरे तर्हि भक्तिस्तत्र ममास्ति चेत् ॥ १८० ॥
इत्युदित्वा कंठपाशं विधायोत्तरवाससा । बद्ध्वा च वटशाखायां द्राक् सात्मानमलंबयत् ॥ १८१ ॥
भद्रे मा साहसं कार्षीर्लक्ष्मणोऽहमिति ब्रुवन् । लक्ष्मणोऽपास्य तत्पाशं तामादायोत्ततार च ॥ १८२ ॥
प्रबुद्धयोर्निशाशेषे लक्ष्मणो रामसीतयोः । शशंस वनमालाया वृत्तान्तं तमशेषतः ॥ १८३ ॥
ह्रियावगुंठितमुखी वनमालापि तत्क्षणम् । जानकीरामचरणारविंदेभ्यो नमोऽकरोत् ॥ १८४ ॥
इतोऽपि च तदेन्द्राणी महीधरनृपप्रिया । वनमालामपश्यंती पूच्चक्रे करुणस्वरम् ॥ १८५ ॥
वनमालान्वेषणाय निर्ययौ च महीधरः । इतस्ततः परिभ्राम्यंस्तत्रस्थां च ददर्श ताम् ॥ १८६ ॥
हत हततान् कुमारीतस्करानिति भाषिषु । उदस्त्रेषु च सैन्येषूत्तस्थौ रामानुजः क्रुधा ॥ १८७ ॥
धनुष्यारोपयामास स ज्यां भाल इव भ्रुवम् । अकारयच्च टंकारं वैर्यहंकारहारकम् ॥ १८८ ॥
चक्षुभुस्त्रसुः पेतुस्तद्धनुर्ध्वनिना परे । महीधरः पुरः स्थित्वा सौमित्रिं स्वयमैक्षत ॥ १८९ ॥
उपलक्ष्य ततोऽवादीज्ज्यामुत्तारय धन्वनः । सौमित्रे मत्सुतापुण्यैरिष्यमाणस्त्वमागतः ॥ १९० ॥

उत्तारितज्ये सौमित्रौ सुस्थितः सन्महीधरः । प्रेक्ष्य रामं नमश्चक्रेऽवतीर्य स्यंदनोत्तमात् ॥ १९१ ॥
उवाच च तव भ्रात्रेऽमुष्मै सौमित्रये मया । स्वयं जातानुरागेति कल्पितेयं पुराप्यभूत् ॥ १९२ ॥
इदानीमनयोर्जज्ञे मद्भाग्येन समागमः । जामाता लक्ष्मणस्त्वं च संबंधी दुर्लभः खलु ॥ १९३ ॥
इत्युदित्वा महत्या च प्रतिपत्त्या महीधरः । निनाय जानकीरामलक्ष्मणान्निजसद्मनि ॥ १९४ ॥
तेषु तत्र च तिष्ठत्सु कदाचन सभास्थितम् । एत्यातिवीर्यराड्दूतो नृपमूचे महीधरम् ॥ १९५ ॥
नंद्यावर्तपुराधीशोऽतिवीर्यो वीर्यसागरः । साहाय्यायाह्वयति त्वां जाते भरतविग्रहे ॥ १९६ ॥
भूयांसो भूभुजोऽन्येयुस्तस्य दाशरथेर्बले । तत्त्वमप्यतिवीर्येणाहूयसे सुमहाबलः ॥ १९७ ॥
अथैवं लक्ष्मणोऽपृच्छन्नद्यावर्तमहीभुजः । भरतक्ष्माभुजा सार्धं किं विरोधनिबंधनम् ॥ १९८ ॥
दूतोऽप्युवाच नः स्वामी भरताद्भक्तिमिच्छति । स तु प्रतीच्छति न तामिदं विग्रहकारणम् ॥ १९९ ॥
रामः पप्रच्छ तं दूतमतिवीर्यस्य संगरे । समर्थो भरतः किं भोस्तत्सेवां यन्न मन्यते ॥ २०० ॥
दूतोऽप्यूचे महावीर्योऽतिवीर्यस्तावदेष नः । भरतोऽपि न सामान्यस्तद्द्वयोः संशयो जये ॥ २०१ ॥
इत्युक्तवंतं तं दूतमागच्छाम्येष सत्वरम् । इत्युक्त्वा व्यसृजद्राजा रामं चैवमभाषत ॥ २०२ ॥
अहो अज्ञत्वमेतस्यातिवीर्यस्याल्पमेधसः । यदस्मानयमाहूय भरतं योधयिष्यति ॥ २०३ ॥
तत्सर्वसेनया गत्वानुपलक्षितदोर्हृदा[1] । अमुमेव हनिष्यामो भारतादिव शासनात् ॥ २०४ ॥
ऊचे रामोऽत्र तिष्ठत्वं त्वत्सुतैः सबलैः सह । तत्राहमेव यास्यामि करिष्यामि यथोचितम् ॥ २०५ ॥

१ अज्ञातेन शत्रुत्वेन ।

एवमस्त्विति तेनोक्तस्तत्पुत्रबलसंयुतः । नंद्यावर्तपुरं रामः ससीतालक्ष्मणो ययौ ॥ २०६ ॥
उषितं बहिरुद्याने रामं तत्क्षेत्रदेवता । अभाषत महाभाग किमभीष्टं करोमि ते ॥ २०७ ॥
न नः किमपि कर्तव्यमित्युक्ते राघवेण तु । साभ्यधादेवमेतद्धि तथाप्युपकरोम्यदः ॥ २०८ ॥
अतिवीर्यो जितः स्त्रीभिरिति तस्यायशस्कृते । ससैन्यस्य करिष्यामि स्त्रीरूपं कामिकं तव ॥ २०९ ॥
स्त्रीराज्यमिव तत्सैन्यं स्त्रीरूपमभवत्क्षणात् । स्त्रीरूपौ रामसौमित्री चाभूतां सुंदराकृती ॥ २१० ॥
महीधरेण स्वं सैन्यं तव साहाय्यहेतव । प्रैषीदमिति रामस्तं द्वाःस्थेनाज्ञापयन्नृपम् ॥ २११ ॥
अतिवीर्योऽप्युवाचैवं स्वयं नागान्महीधरः । कृतं तदस्य सैन्येन मुमूर्षोर्बहुमानिनः ॥ २१२ ॥
जेष्याम्येकोऽपि भरतं सहायाः किं ममापि हि । निर्वास्यतां द्रुतमिदं तत्सैन्यमयशस्करम् ॥ २१३ ॥
अथान्यः कश्चिदप्यूचे स्वयमागान्न केवलम् । स प्रत्युतोपहासाय स्त्रीसैन्यं प्राहिणोदिह ॥ २१४ ॥
तच्छ्रुत्वा सुमहाक्रोधं नंद्यावर्तेश्वरोऽकरोत् । स्त्रीरूपधारिणस्ते च रामाद्या द्वारमाययुः ॥ २१५ ॥
आदिक्षदतिवीर्योऽपि दासीवदिमिकाः स्त्रियः । गाढं गृहीत्वा ग्रीवासु निर्वास्यंतां पुराद्बहिः ॥ २१६ ॥
समंतात्तस्य सामन्ता उत्थाय सपदातयः । स्त्रीसैन्यं तदुपद्रोतुं प्रावर्तंत महाभुजाः ॥ २१७ ॥
रामभद्रो भुजस्तंभेनेभस्तंभमथोच्चकैः । समुत्पाट्यायुधीकृत्य तान् समंतादपातयत् ॥ २१८ ॥
तेन सामंतभंगेनातिवीर्यः कुपितो भृशम् । रणाय स्वयमुत्तस्थे खङ्गमाकृष्य भीषणम् ॥ २१९ ॥
अथ तत् खङ्गमाछिद्य लक्ष्मणस्तत्क्षणादपि । तमाचकर्ष केशेषु तद्वस्त्रेण बबंध च ॥ २२० ॥

मृगं व्याघ्र इवादाय तं नृव्याघ्रश्चचाल सः । दृश्यमानो जनैः पौरैरुत्त्रासतरलेक्षणैः[1] ॥ २२१ ॥
अथ तं मोचयामास मैथिली करुणापरा । सद्यो भरतसेवां च सौमित्रिः प्रत्यपादयत् ॥ २२२ ॥
स्त्रीवेषमथ संजहे सर्वेषां क्षेत्रदेवता । अज्ञासीदतिवीर्योऽपि तौ तदा रामलक्ष्मणौ ॥ २२३ ॥
अतिवीर्यस्तयोः पूजां महतीं विदधे ततः । दध्यौ च मानध्वंसेन मानी वैराग्यमुच्चकैः ॥ २२४ ॥
किं सेविष्येऽहमप्यन्यमित्यहंकारभाग्घृदि । दीक्षार्थी विजयरथे पुत्रे राज्यं न्यधत्त सः ॥ २२५ ॥
द्वितीयो भरतो मेऽसि शाधि क्ष्मां प्रव्रजः स्म मा । रामेणेत्थं निषिद्धोऽपि स प्राव्राजीन्महामनाः ॥२२६॥
तत्सूनुर्विजयरथो रतिमालाभिधां निजाम् । लक्ष्मणाय ददौ जामिं[2] तां प्रतीयेष[3] लक्ष्मणः ॥ २२७ ॥
ययौ ससैन्यो विजयपुरं रामोऽपि पत्तनम् । अयोध्यां विजयरथो भरतं सेवितुं पुनः ॥ २२८ ॥
विज्ञाततद्वृत्तांतोऽपि भरतो गरिमाचलः । सच्चकार तमायातं संतो हि नतवत्सलाः ॥ २२९ ॥
कनिष्ठां रतिमालाया नाम्ना विजयसुंदरीम् । ददौ स्वसारं स्त्रीसारं भरताय स भूभुजे ॥ २३० ॥
तदा च विहरंस्तत्रातिवीर्यो मुनिराययौ । वंदित्वा क्षमयांचक्रे भरतेन स भूभुजा ॥ २३१ ॥
विसृष्टः सप्रसादेन भरतेन महीभुजा । सानंदो विजयरथो नंद्यावर्तपुरं ययौ ॥ २३२ ॥
महीधरमनुज्ञाप्य रामे गंतुं समुद्यते । वनमालामापप्रच्छे यियासुरथ लक्ष्मणः ॥ २३३ ॥
जगाद वनमालापि बाष्पपूर्णविलोचना । प्राणत्राणं तदाकार्षीः प्राणेश मम किं मुधा ॥ २३४ ॥
वरं भवेत् सुखमृत्युस्तदैव मम वल्लभ । न त्वर्धवैशसमिदं[4] दुःखं त्वद्विरहोत्थितम् ॥ २३५ ॥

१ अधिकत्रासेन चपलनेत्रैः । २ स्वसारम् । ३ जग्राह । ४ अर्धवधसदृशम् ।

अद्यैव परिणीय त्वं सहैव नय मां प्रभो । त्वद्वियोगाच्छलं प्राप्य नेष्यत्यपरथांतकः ॥ २३६ ॥
अन्वनैषील्लक्ष्मणोऽथ भ्रातुः शुश्रूषको ह्यहम् । शुश्रूषाविघ्नकृन्मा भूः सहायांती मनस्विनि ॥ २३७ ॥
प्राप्स्याम्यभीप्सितं स्थानं ज्यायांसं वरवर्णिनि । त्वां समेष्यामि भूयोऽपि वास्तव्या हृदये ह्यसि ॥ २३८ ॥
घोरेभ्यः शपथेभ्यो यं त्वं कारयसि मानिनि । तं करोमि पुनरिहागमप्रत्ययहेतवे ॥ २३९ ॥
न चेदायामि भूयोऽपि तदहं रात्रिभोजिनाम् । गृह्णेंऽहसेति शपथं सौमित्रिः कारितस्तया ॥ २४० ॥
रात्रिशेषे ततो रामः ससीतालक्ष्मणोऽचलत् । क्रमाद्वनानि लंघित्वा प्राप क्षेमाञ्जलिं पुरीम् ॥ २४१ ॥
रामस्तद्बहिरुद्याने वन्याहारैः फलादिभिः । बुभुजे लक्ष्मणानीतैर्जानकीकरसंस्कृतैः ॥ २४२ ॥
तत्र राममनुज्ञाप्य कौतुकात्प्राविशत् पुरीम् । सौमित्रिस्तत्र चाश्रौषीदुच्चैराघोषणामिति ॥ २४३ ॥
शक्तिप्रहारं सहते योऽमुष्य पृथिवीपतेः । तस्मै परिणयनाय ददात्येष स्वकन्यकाम् ॥ २४४ ॥
तेन चाघोषणाहेतुं पृष्ट एकोऽवदत् पुमान् । अत्रास्ति शत्रुदमनो नाम राजा महाभुजः ॥ २४५ ॥
तस्यास्ति कनकादेवीकुक्षिजा वरकन्यका । जितपद्मेति पद्मायाः सद्मैकं पद्मलोचना ॥ २४६ ॥
वरस्यौजःपरीक्षार्थमिदमारभ्यते ततः । प्रत्यहं क्ष्माभुजानेन तादृक्षो नैति कोऽपि ना ॥ २४७ ॥
श्रुत्वेत्थं लक्ष्मणोऽगच्छत्तं राजानं सभास्थितम् । कुतो हेतोः कुतस्त्यस्त्वं तत्पृष्टश्चैवमब्रवीत् ॥ २४८ ॥
अहं भरतदूतोऽस्मि गच्छन्नर्थेन केनचित् । तव कन्यामिमां श्रुत्वा परिणेतुमिहागमम् ॥ २४९ ॥
सहिष्यसे शक्तिघातं ममेत्युक्तो महीभुजा । किमेकेन सहिष्येऽहं पंचेत्यूचे च लक्ष्मणः ॥ २५० ॥

---

१ अन्यथा । २ वरः वर्णो यस्याः सा वरवर्णिनी । ३ पापेन । ४ लक्ष्म्याः सद्म गृहम् । ५ बलपरीक्षार्थम् ।

जितपद्मा तदानीं च तत्रागाद्राजकन्यका । बभूव लक्ष्मणं प्रेक्ष्य क्षणाच्च मदनातुरा ॥ २५१ ॥
तया सद्योऽनुरागिण्या वार्यमाणोऽपि भूपतिः । चिक्षेप लक्ष्मणायाशु दुःसहं शक्तिपंचकम् ॥ २५२ ॥
द्वे कराभ्यां द्वे कक्षाभ्यां दंतैरेकां च लक्ष्मणः । अग्रहीज्जितपद्मायाः कन्याया मनसा सह ॥ २५३ ॥
जितपद्माक्षिपत्तत्र स्वयं वरणमालिकाम् । उद्वह्यतामियं कन्येत्यब्रवीत्पार्थिवोऽपि तम् ॥ २५४ ॥
लक्ष्मणोऽप्यवदद्बाह्योपवनेऽस्ति ममाग्रजः । रामो दाशरथिस्तेन परतंत्रोऽस्मि सर्वदा ॥ २५५ ॥
तौ रामलक्ष्मणौ ज्ञात्वा तत्क्षणं स क्ष्मापतिः । गत्वा रामं नमश्चक्रे स्ववेश्मन्यानिनाय च ॥ २५६ ॥
महत्या प्रतिपत्त्या स राजा राममपूजयत् । सामान्योऽप्यतिथिः पूज्यः किं पुनः पुरुषोत्तमः ॥ २५७ ॥
ततोऽपि चलिते रामे सौमित्रिस्तं महीपतिम् । उवाच परिणेष्यामि व्यावृत्तस्त्वत्सुतामिति ॥ २५८ ॥
निशायां निर्ययौ रामः प्राप सायं च पत्तनम् । वंशस्थलं नाम वंशशैलाख्याद्रितटस्थितम् ॥ २५९ ॥
तस्मिन् सभूपतिं लोकमालुलोके भयाकुलम् । पप्रच्छ च नरं कंचिद्रामस्तद्भयकारणम् ॥ २६० ॥
आचख्यौ पुरुषः सोऽपि तार्तीयीकोऽद्य वासरः । अमुष्मिन् पर्वते रात्रौ रौद्रस्योच्छलतो ध्वनेः ॥२६१॥
तद्भयाद्रात्रिमन्यत्र गमयत्यखिलो जनः । प्रातश्च पुनरायाति कष्टा नित्यमियं स्थितिः ॥ २६२ ॥
ततश्च कौतुकाद्रामः प्रेरितो लक्ष्मणेन च । तत्रारुरोहापश्यच्च कायोत्सर्गस्थितौ मुनी ॥ २६३ ॥
भक्त्या ववंदिरे तौ तु जानकीरामलक्ष्मणाः । तदग्रेऽवादयद्रामो गोकर्णार्पितवल्लकीम्[1] ॥ २६४ ॥
हृद्यं जगौ च सौमित्रिर्ग्रामरागमनोहरम् । चित्रांगहारकरणं सीता देवी ननर्त च ॥ २६५ ॥

१ वल्लकी वीणा ।

तदा चास्तं ययावर्को जजृंभे च विभावरी । विकृतानेकवेतालश्चागाद्देवोऽनलप्रभः ॥ २६६ ॥
स्वयं वेतालरूपः सोऽट्टहासैः स्फोटयन्नभः । महर्षी तावुपद्रोतुं प्रावर्तत दुराशयः ॥ २६७ ॥
मुक्त्वोपसाधु वैदेहीं सन्नद्धौ रामलक्ष्मणौ । उत्तस्थाते तं निहंतुमकाले कालतां गतौ ॥ २६८ ॥
सोऽपि देवस्तयोस्तेजःप्रसरं सोढुमक्षमः । निजं स्थानं ययौ साध्वोस्तयोश्चाजनि केवलम् ॥ २६९ ॥
देवैश्च केवलज्ञानमहिमा विदधे तयोः । नत्वा रामश्च पप्रच्छोपसर्गविधिकारणम् ॥ २७० ॥
तत्राख्यदेको महर्षिराख्यया कुलभूषणः । आसीन्नगर्यां पद्मिन्यां राजा विजयपर्वतः ॥ २७१ ॥
तस्यामृतस्वराख्योऽभूद्दूतो दूतस्य तस्य च । भार्योपयोगा तत्पुत्रावुदितो मुदितोऽपि च ॥ २७२ ॥
वयस्यस्तस्य दूतस्य वसुभूतिरिति द्विजः । उपयोगा तदासक्ताजिघांसदमृतस्वरम् ॥ २७३ ॥
नृपादेशाद्विदेशायान्यदागादमृतस्वरः । सह गच्छन् वसुभूतिर्मार्गे तं चावधीच्छलात् ॥ २७४ ॥
वसुभूतिः पुरीमेत्य जनायैवमवोचत । कुतोऽपि कार्यादमृतस्वरेणाहं निवर्तितः ॥ २७५ ॥
शशंस चोपयोगायाः स नौ संभोगविघ्नकृत् । मया व्यापादितो मार्गे छलं लब्ध्वामृतस्वरः ॥ २७६ ॥
साऽप्यूचे साध्वकार्षीस्त्वं जहि पुत्राविमावपि । अस्तु निर्मक्षिकमिति सोऽपि तत्प्रत्यपद्यत ॥ २७७ ॥
दैवाच्छ्रुत्वा च तं मंत्रं वसुभूतिसधर्मिणी । ईर्ष्ययाख्यच्च तत्सून्वोर्मुदितस्योदितस्य च ॥ २७८ ॥
उदितेन रुषा सद्यो वसुभूतिर्निपातितः । मृत्वैष नलपल्ल्यां स म्लेच्छः समुदपद्यत ॥ २७९ ॥
धर्मं श्रुत्वान्यदा राजा महर्षेर्मतिवर्धनात् । प्रव्रज्यामाददे तावप्युदितो मुदितोऽपि च ॥ २८० ॥

१ यमत्वं प्राप्तौ रामलक्ष्मणौ । २ हंतुमैच्छत् ।

संमेते वन्दितुं चत्यौन्युदितो मुदितोऽपि च । प्रचेलतुः पथि भ्रांतौ पल्लीं तां च समेयतुः ॥ २०१ ॥
पूर्ववैराद्वसुभूतिजीवो म्लेछो निरीक्ष्य तौ । हन्तुं दधावे म्लेछाधिपतिना च न्यषिध्यत ॥ २०२ ॥
म्लेछेशः प्राग्भवे सोऽभून्मृगो व्याधाच्च मोचितः । मुदितोदितजीवाभ्यां कर्षकाभ्यां च तद्भवे ॥ २०३॥
तेन म्लेछाधिपेनातस्त्रातौ संमेतमेत्य च । तौ चैत्यानि ववंदाते विजह्राते चिराय च ॥ २०४ ॥
विधायानशनं मृत्वा महाशुक्रे सुरोत्तमौ । तौ सुंदरसुकेशाख्यावजायेतां महर्द्धिकौ ॥ २०५ ॥
भ्रांत्वा भवं वसुभूतिजीवो म्लेछः कथंचन । अवाप मानुषं जन्म तत्र सोऽभूच्च तापसः ॥ २०६ ॥
स विपद्य समुत्पेदे ज्योतिष्केषु सुरेषु तु । धूमकेतुर्नाम देवो मिथ्यादृष्टिर्दुराशयः ॥ २०७ ॥
उदितमुदितजीवौ शुक्राच्च्युत्वात्र भारते । महापुरेऽरिष्टपुरे प्रियंवदमहीपतेः ॥ २०८ ॥
पद्मावत्यां सधर्मिण्यामजायेतामुभौ सुतौ । विश्रुतौ नामतो रत्नरथचित्ररथावित्ति ॥ २०९ ॥
धूमकेतुरपि च्युत्वा पत्न्यां तस्यैव भूपतेः बभूव कनकाभायां नाम्ना सूनुरनुद्धरः ॥ २१० ॥
अभूत्समत्सरो रत्नरथे चित्ररथे च सः । तस्योपरि न मात्सर्यं बिभराञ्चक्रतुस्तु तौ ॥ २११ ॥
न्यस्य रत्नरथे राज्यं यौवराज्यं द्वयोः पुनः । प्रियंवदः षड्दिनानि प्रायं कृत्वा सुरोऽभवत् ॥ २१२ ॥
राज्यं पालयतो रत्नरथस्यैको नृपो ददौ । श्रीप्रभां नाम कन्यां स्वां याचमानेऽप्यनुद्धरे ॥ २१३ ॥
क्रुद्धोऽथानुद्धरो रत्नरथस्योर्वीमलुंटयत् । पातयित्वा रणे रत्नरथेन जगृहे च सः ॥ २१४ ॥
विडंब्य बहुधा रत्नरथेन मुमुचेऽथ सः । तापसोऽभूच्च स्त्रीसंगान्मोघीचक्रे निजं तपः ॥ २१५ ॥

१ अनशनम् । २ विफलीचक्रे ।

ततो मृत्वा ज्ञवं ज्रांत्वा चिरान्मर्त्यो बज्जूव सः । तापसीज्रूय ज्रूयोऽपि चकाराज्ञानकं तपः ॥ २ए६ ॥
मृत्वानलप्रज्ञः सोऽयं ज्योतिष्कस्त्रिदशोऽज्ञवत् । दीक्षां रत्नरथचित्ररथौ जगृहतुश्च तौ ॥ २ए७ ॥
विपद्य चाच्युते कल्पेऽतिबलोऽथ महाबलः । नामधेयेन जज्ञाते त्रिदशौ प्रवरर्द्धिकौ ॥ २ए८ ॥
च्युत्वा च सिद्धार्थपुरे क्षेमंकरमहीपतेः । महिष्या विमलादेव्यास्तौ कुक्षाववतेरतुः ॥ २एए ॥
क्रमादजनिषातां च विमलायामुज्ञौ सुतौ । कुलज्रूषण एषोऽहं तथायं देशज्रूषणः ॥ ३०० ॥
उपाध्यायस्य घोषस्यार्पितौ पाठाय ज्रूज़ुजा । अपठाव कलाः सर्वा द्वादशाब्दीमवस्थितौ ॥ ३०१ ॥
त्रयोदशेऽब्दे घोषेण सहायातौ नृपांतिके । राजवेश्मन्यपश्याव कन्यां वातायनस्थिताम् ॥ ३०२ ॥
जातानुरागौ तस्यां च सद्योऽपि विमनायितौ । अगमावांतिकं राज्ञोऽदर्शयावाखिलाः कलाः ॥ ३०३ ॥
उपाध्यायोऽर्चितो राज्ञा जगाम निजमंदिरम् । आवां च मातरं नंतुं गतौ राजाज्ञया ततः ॥ ३०४ ॥
तत्र चावामपश्याव तां कन्यां मातुरंतिके । अशंसच्चाम्बा युवयोः स्वसेयं कनकप्रज्ञा ॥ ३०५ ॥
घोषोपाध्यायसदने युवयोस्तस्थुषोः सतोः । जातेयं वत्सौ तेनेमां नोपलक्ष्यथो युवाम् ॥ ३०६ ॥
तच्छ्रुत्वा लज्जितावावामज्ञानात् स्वसृकांक्षिणौ । क्षणाद्वैराग्यमापन्नौ प्राव्रजावांतिके गुरोः ॥ ३०७ ॥
तप्यमानौ तपस्तीव्रमिहायातौ महागिरौ । कायोत्सर्गेण चास्थाव निरपेक्षौ वपुष्यपि ॥ ३०८ ॥
पितावयोर्वियोगेन गृहीत्वानशनं मृतः । गरुडेशोऽज्ञवद्देवो महालोचननामकः ॥ ३०ए ॥
विज्ञायासनकंपेन चोपसर्गं स आवयोः । संप्रत्ययमिहायातः प्राग्जन्मस्नेहपीडितः ॥ ३१० ॥

१ न जानीथः ।

अनलप्रभदेवः सोऽनंतवीर्यमहामुनेः । पार्श्वे केवलिनोऽगच्छत् सह देवैः कुतूहलात् ॥ ३११ ॥
देशनांतेऽनन्तवीर्यः पृष्टः शिष्येण केनचित् । मुनिसुव्रततीर्थेऽस्मिन् कः पश्चात्तव केवली ॥ ३१२ ॥
सोऽप्याख्यन्मम निर्वाणे केवली कुलभूषणः । देशभूषण इति च भ्रातरौ द्वौ भविष्यतः ॥ ३१३ ॥
तच्चानलप्रभः श्रुत्वा निजं स्थानमुपेत्य च । विभंगेनान्यदा ज्ञात्वा कायोत्सर्गस्थिताविह ॥ ३१४ ॥
मिथ्यात्वेनानन्तवीर्यवचनं कर्तुमन्यथा । प्राग्जन्मवैराच्च स नावुपद्रुभाव दारुणम् ॥ ३१५ ॥
युग्मम् ॥

दिनान्यतीयुश्चत्वारि तस्योपद्रवतो दृढम् । अद्यायातौ युवामत्र युष्मद्भीत्यानशच्च सः ॥ ३१६ ॥
कर्मक्षयादावयोश्च केवलं समजायत । कर्मक्षये सहायोऽयमुपसर्गपरोऽप्यभूत् ॥ ३१७ ॥
महालोचनदेवोऽपि तदोचे गरुडाधिपः । काकुत्स्थ साध्वकार्षीस्त्वं किं प्रत्युपकरोमि ते ॥ ३१८ ॥
नार्थो नः कश्चिदप्यस्तीत्युक्ते रामेण सोऽमरः । तथाप्युपकरिष्यामि क्वापीत्युक्त्वा तिरोदधे ॥ ३१९ ॥
अथ वंशस्थलाधीशो राजा नाम्ना सुरप्रभः । तत्रागत्य नमश्चक्रे राममानर्च चोच्चकैः ॥ ३२० ॥
रामाज्ञया तत्र शैले सोऽर्हच्चैत्यान्यकारयत् । रामनाम्ना रामगिरिर्गिरिः सोऽभूत्तदादि च ॥ ३२१ ॥
सुरप्रभमथापृच्छ्य प्रतस्थे रघुपुंगवः । उद्दंडं दंडकारण्यं प्रविवेश च निर्भयः ॥ ३२२ ॥
विधाय तत्र चावासं महागिरिगुहागृहे । काकुत्स्थः सुस्थितस्तस्थौ स्वकीय इव वेश्मनि ॥ ३२३ ॥
तत्र भोजनवेलायामन्येद्युश्चारणौ मुनी । नाम्ना त्रिगुप्तसुगुप्तौ नभसा समुपेयतुः ॥ ३२४ ॥

२ नौ आवाम् । २ न प्रयोजनम् ।

द्विमासोपोषितौ तौ तु पारणार्थमुपस्थितौ । भक्त्या ववंदिरे रामसीतासौमित्रयस्त्रयः ॥ ३२५ ॥
यथोचितैरन्नपानैः सीता तौ प्रत्यलाभयत् । तदा देवैर्विदधिरे रत्नगन्धांबुवृष्टयः ॥ ३२६ ॥
तदा रत्नजटी कंबुद्वीपविद्याधरेश्वरः । द्वौ सुरौ चैत्य रामाय प्रीताः साश्वं रथं ददुः ॥ ३२७ ॥
गन्धाम्बुवृष्टिगन्धेन तत्र गन्धाभिधः खगः । उत्तीर्य पादपाद्रोगी तद्वास्तव्यः समाययौ ॥ ३२८ ॥
संजातजातिस्मरणो मुनेर्दर्शनमात्रतः । पपात मूर्छया भूमौ सीताम्भोभिः सिषेच तम् ॥ ३२९ ॥
लब्धसंज्ञः समुत्थाय साधुपादेषु सोऽपतत् । साधोः स्पर्शौषधीलब्ध्या नीरोगश्चाभवत्क्षणात् ॥ ३३० ॥
पक्षौ हैमावजायेतां चञ्चूर्विद्रुमविभ्रमा । पद्मरागप्रभौ पादौ नानारत्नप्रभं वपुः ॥ ३३१ ॥
रत्नांकुरश्रेणिनिभा जटाः शिरसि चाभवन् । जटायुर्नाम तस्याभूत्ततः प्रभृति पक्षिणः ॥ ३३२ ॥
॥ युग्मम् ॥
रामोऽपृच्छन्महर्षी तौ गृध्रः क्रव्यादयं कुधीः । स्थित्वा वः पादयोः पार्श्वे शान्तः कस्मादजायत ॥३३३॥
भेदंतावयमत्यंतविरूपावयवः पुरा । कथमद्य क्षणाज्जातो हेमरत्नोत्करद्युतिः ॥ ३३४ ॥
सुगुप्तर्षिरथाचख्यावासीदिह पुरा पुरम् । कुंभकारकटं नाम राजा तत्रैष दंडकः ॥ ३३५ ॥
श्रावस्त्यां च तदा राजा जितशत्रुरजायत । धारिणी नाम तत्पत्नी स्कन्दको नाम तत्सुतः ॥ ३३६ ॥
पुरन्दरयशा नामाभवच्च दुहिता तयोः । कुंभकारकटेशस्तां पर्यणैषीच्च दंडकः ॥ ३३७ ॥
अन्यदार्थेन केनापि जितशत्रुनृपान्तिके । प्राहिणोद्दंडको दूतं पालकं नामतो द्विजम् ॥ ३३८ ॥

१ क्रव्य मासमत्तीति क्रव्याद् क्विप्प्रत्ययान्तः । २ हे भगवन्तौ. ।



जितशत्रुस्तदा चार्हद्धर्मगोष्ठीपरोऽभवत् । आरेभे पालकस्तं तु धर्मं दूषयितुं कुधीः ॥ ३३९ ॥
स स्कन्दककुमारेण मिथ्यादृष्टिर्दुराशयः । युक्त्या निरुत्तरीचक्रे सत्यसंवादपूर्वकम् ॥ ३४० ॥
तदा स हसितः सभ्यैरमर्षं स्कंदकेऽदधत् । विसृष्टश्चान्यदा राज्ञा कुंभकारकटं ययौ ॥ ३४१ ॥
विरक्तश्चान्यदा पंचराजपुत्रशतान्वितः । मुनिसुव्रतपादान्ते स्कंदको व्रतमाददे ॥ ३४२ ॥
पुरंदरयशोमुख्यलोकं बोधयितुं पुरे । कुंभकारकटे यामीत्यापप्रच्छे स च प्रभुम् ॥ ३४३ ॥
उवाच प्रभुरप्येवं तत्र ते मारणान्तिकः । गतस्य सपरीवारस्योपसर्गो भविष्यति ॥ ३४४ ॥
वयमाराधकास्तत्र भाविनो वा न वेत्यथ । भूयोऽपि स्कंदकोऽपृच्छत् स्वामिनं मुनिसुव्रतम् ॥ ३४५ ॥
त्वां विनाराधकाः सर्वेऽपीत्याख्यद्भगवानपि । सर्वमेतर्हि संपूर्णमित्युक्त्वा स्कंदकोऽचलत् ॥ ३४६ ॥
क्रमेण स्कन्दकाचार्यो मुनिपंचशतीयुतः । गच्छन्नासादयामास कुंभकारकटं पुरम् ॥ ३४७ ॥
तं दृष्ट्वा पालकः क्रूरः संस्मरंस्तं पराभवम् । साधूपयोग्योद्यानेषु शस्त्राण्युर्व्यामखानयत् ॥ ३४८ ॥
उद्याने स्कन्दकाचार्य एकस्मिन् समवासरत् । आययौ वंदितुं तं च दंडकः सपरिच्छदः ॥ ३४९ ॥
स्कन्दको देशना चक्रे जहृषुर्बहवो जनाः । प्रहृष्टो देशनान्ते च वेश्मागाद्दंडको नृपः ॥ ३५० ॥
गत्वा रहसि राजानमित्यूचे पालकः कुधीः । स्वामिन्नेष बकाचारः पाखंडी स्कंदकः खलु ॥ ३५१ ॥
सहस्रयोधिभिः पुंभिर्मुनिवेषधरैरसौ । त्वां हत्वा राज्यमादातुमागादिह महाशठः ॥ ३५२ ॥
अत्रोद्याने स्वस्थाने च मुनिवेषैर्महाभटैः । छन्नं क्षिप्तानि शस्त्राणि दृष्ट्वा प्रत्येतु भूपतिः ॥ ३५३ ॥
ततश्चाखानयद्राजा मुनिस्थानानि सर्वतः । चित्राण्यस्त्राण्यपश्यच्च विषादं च परं ययौ ॥ ३५४ ॥

अविचार्य ततो राजाप्यादिदेशेति पालकम् । साधु मंत्रिंस्त्वया ज्ञातं चक्षुष्मान् भवता ह्यहम् ॥३५५॥
कर्तुं त्वमेव जानासि दुर्मतेरस्य चोचितम् । तत्कुरुष्व न भूयोऽपि प्रष्टव्योऽहं महामते ॥ ३५६ ॥
इत्युक्तः पालकः शीघ्रं गत्वा यंत्रमकारयत् । स्कन्दकस्याग्रतः साधूनेकैकं च न्यपीलयत् ॥ ३५७ ॥
निःपील्यमानानेतांस्तु देशनापूर्वकं स्वयम् । अकारयत् स्कंदकोऽपि सम्यगाराधनाविधिम् ॥ ३५८ ॥
उपयंत्रं शिशौ नीते परिवारांतिमे[1] मुनौ । कारुण्यात् स्कन्दकाचार्य इत्यभापत पालकम् ॥ ३५९ ॥
आदौ पीलय मामेव कुरुष्वैतद्वचो मम । बालं मुनिं न पश्यामि पीड्यमानं यथा ह्यमुम् ॥ ३६० ॥
तत्पीडापीडितं ज्ञात्वा स्कंदकं पालकोऽपि हि । तमेव बालकमुनिं तत्पीडार्थमपीलयत् ॥ ३६१ ॥
उत्पन्नकेवलाः सर्वेऽप्यवापुः पदमव्ययम् । प्रत्याख्याय स्कन्दकस्तु निदानमिति निर्ममे ॥ ३६२ ॥
दंडकस्य पालकस्य तथात्र कुलराष्ट्रयोः । व्यापादनाय भूयासं तपसोऽस्य फलं यदि ॥ ३६३ ॥
एवं कृतनिदानः सन् पीलितः पालकेन सः । देवो वह्निकुमारोऽभूत् कालाग्निरिव तत्क्षये ॥ ३६४ ॥
पुरन्दरयशोदत्तरत्नकंबलतंतुजम् । तद्रजोहरणं रक्तेनाक्तं[2] शकुनिका[3]हरत् ॥ ३६५ ॥
दोर्दंडबुद्ध्या यत्नेन गृहीतमपि तत्त्वतः । पुरः पुरंदरयशोदेव्या दैवात् पपात सः ॥ ३६६ ॥
विदांचकार सा भ्रातुर्महर्षेर्विपदं ततः । किमकार्षीः पाप पापमित्याक्रोशच्च दंडकम् ॥ ३६७ ॥
तां शोकमग्नामुद्धृत्यानैषीच्छासनदेवता । मुनिसुव्रतपादांते प्रव्रज्यामाददे च सा ॥ ३६८ ॥
स्कंदकाग्निकुमारोऽपि प्राग्जन्मावधिना विदन् । सपालकं सपूर्लोकमदहद्दंडकं नृपम् ॥ ३६९ ॥

---

१ परिवारेऽन्तिमश्चरमस्तस्मिन् । २ रक्तेन शोणितेनाक्त व्याप्तम् । ३ पक्षिणी ।

तदादि दंडकारण्यमिदं दारुणमुद्वसम् । दंडकस्याभिधानेन बभूव भुवि विश्रुतम् ॥ ३७० ॥
दंडकोऽपि भवे भ्रांत्वा दुःखखानिषु योनिषु । गंधाख्योऽयमभूत् पक्षी महारोगी स्वकर्मभिः ॥ ३७१ ॥
अस्मत्सदर्शनाज्जातिस्मरणं समजायत । अस्मत्स्पर्शौषधीलब्ध्या रोगाश्च क्षयमासदन् ॥ ३७२ ॥
तच्छ्रुत्वा मुदितः पक्षी भूयोऽपि मुनिपादयोः । पपात धर्मं चाश्रौषीच्छ्रावकत्वं च शिश्रिये ॥ ३७३ ॥
जीवघातंपलाहाररात्रिभोजनकर्मणाम् । प्रत्याख्यानं ददौ तस्येप्सितं ज्ञात्वा महामुनिः ॥ ३७४ ॥
इत्यूचे च मुनी रामं साधर्मिक इहैष वः । साधर्मिके च वात्सल्यमुक्तं श्रेयस्करं जिनैः ॥ ३७५ ॥
बन्धुर्न एष परम इत्युक्त्वा राघवेण तौ । वंदितौ नभसोत्पत्य मुनी जग्मतुरन्यतः ॥ ३७६ ॥
तं दिव्यं रथमारुह्य जानकीरामलक्ष्मणाः । विजह्रुः क्रीडयान्यत्र सहचारिजटायवः ॥ ३७७ ॥
इतः पातालंलकायां खरचन्द्रणखात्मजौ । शंबूकसुंदनामानावभूतां नवयौवनौ ॥ ३७८ ॥
पितृभ्यां वार्यमाणोऽपि दंडकारण्यमन्यदा । शंबूकः सूर्यहासासिसाधनार्थमुपेयिवान् ॥ ३७९ ॥
सोऽथ क्रौञ्चरवातीरे स्थित्वान्तर्वंशगह्वरम् । वारयिष्यति मां यस्तं हनिष्यामीत्यवोचत ॥ ३८० ॥
एकान्नभुग्विशुद्धात्मा ब्रह्मचारी जितेन्द्रियः । अधोमुखो वटशाखानिबद्धचरणद्वयः ॥ ३८१ ॥
विद्यां जपितुमारेभे सूर्यहासासिसाधिनीम् । सप्ताहाग्रद्वादशाब्द्या या सिद्धिमुपगच्छति ॥ ३८२ ॥
एवं च तस्थुषस्तस्य वल्गुलीस्थानकस्पृशः । वर्षाणि द्वादशातीयुश्चत्वारि दिवसानि च ॥ ३८३ ॥
सेद्धुकामः सूर्यहासः प्रत्याकारतिरोहितः । स्फूर्जत्परिमलो व्योम्ना तत्रागाद्वंशगह्वरे ॥ ३८४ ॥

१ पलं मांसम् । २ पक्षिणः । ३ सहचारी जटायुर्येषां ते । ४ वल्गुलोऽधोमुखस्थायी पक्षी तस्य स्थानमाश्रितः । ५ कोशच्छन्नः ।

क्रीडयेतस्ततो भ्राम्यंस्तत्र सौमित्रिराययौ । ददर्श सूर्यहासासिं सूर्यस्येव करोत्करम्[1] ॥ ३८५ ॥
तं खड्गमाददे सोऽथ प्रत्याकाराच्चकर्ष च । अपूर्वशस्त्रालोके हि क्षत्रियाणां कुतूहलम् ॥ ३८६ ॥
तत्तीक्ष्णत्वपरीक्षार्थं तत्क्षणं तेन लक्ष्मणः । अभ्यर्णस्थां वंशजालीं नालवावं लुलाव च ॥ ३८७ ॥
वंशजालांतरस्थस्य शंबूकस्याथ कर्तितम् । भूतले मौलिकमलं[2] सोऽपश्यत्पतितं पुरः ॥ ३८८ ॥
प्रविवेशाग्रतो यावत् सौमित्रिर्वंशगह्वरम् । तावत्कबंधमैक्षिष्ट वटशाखावलंबिनम् ॥ ३८९ ॥
अयुध्यमानोऽशस्त्रश्च पुमान् कोऽपि हतो मया । अमुना कर्मणा धिङ्मामित्यात्मानं निनिन्द सः॥३९०॥
गत्वा च रामभ्रभाय तदशेषं शशंस सः । असिं च दर्शयामास रामोऽप्येवमभाषत ॥ ३९१ ॥
असावसिः सूर्यहासः साधकोऽस्य त्वया हतः । अस्य संभाव्यते नूनं कश्चिदुत्तरसाधकः ॥ ३९२ ॥
अत्रांतरे दशग्रीवस्वसा चन्द्रणखाभिधा । मत्सूनोः सूर्यहासोऽद्य सेत्स्यतीति कृतत्वरा ॥ ३९३ ॥
पूजापानान्नसहिता तत्र प्रमुदिता ययौ । ददर्श च शिरः सूनोश्छिन्नं लुलितकुंतलम् ॥ ३९४ ॥
॥ युग्मम् ॥

क्वासि हा वत्स शंबूक शंबूकेति रुदत्यथ । अपश्यल्लक्ष्मणस्यांघ्रिन्यासपंक्तिं मनोहराम् ॥ ३९५ ॥
मम सूनुर्हतो येन तस्येयं पदपद्धतिः । इति तत्पदपद्धत्या द्रुतं चंद्रणखा ययौ ॥ ३९६ ॥
यावत् किंचिदगात्तावत् ससीतालक्ष्मणं पुरः । नेत्राभिरामं रामं सापश्यत्तरुतले स्थितम् ॥ ३९७ ॥
निरीक्ष्य रामं सा सद्यो रिरंसा[3]विवशाभवत् । कामावेशः कामिनीनां शोकोद्रेकेऽ[4]पि कोऽप्यहो ॥३९८॥

१ किरणसमूहम् । २ शीर्षकमलम् । ३ रन्तुमिच्छा रिरसा । ४ शोकाधिके ।

कन्यारूपं विकृत्याथ नागकन्यासहोदरम् । सा मन्मथार्ता काकुत्स्थमुपतस्थे सवेपथुः ॥ ३९९ ॥
बभाषे रामभद्रस्तां भद्रे कुत इहागमः । दारुणे दंडकारण्ये कृतांतैकनिकेतने ॥ ४०० ॥
साप्यूचेऽवन्तिराजस्य कन्याहं भवनोपरि । सुप्ता हृतास्मि केनापि खेचरेण क्षपान्तरे ॥ ४०१ ॥
इहारण्ये समायातो दृष्टः सोऽन्येन केनचित् । विद्याधरकुमारेण जगदे चेति सासिना ॥ ४०२ ॥
स्त्रीरत्नमपहृत्येदं चिल्लो हारलतामिव । क्व गमिष्यसि रे पाप मृत्युस्तेऽहमुपस्थितः ॥ ४०३ ॥
इत्युक्तः सोऽत्र मां मुक्त्वा तेनाजिं सुचिरं व्यधात् । उभावपि विपेदाते मत्तौ वनगजाविव ॥ ४०४ ॥
एकाकिनी कांदिशीका भ्राम्यन्त्यहमितस्ततः । प्राप्ता त्वां पुण्ययोगेन छायाद्रुमिव जंगले ॥ ४०५ ॥
तन्मां परिणय स्वामिन् कुमारीं कुलसंभवाम् । महत्सु जायते जातु न वृथा प्रार्थनार्थिनाम् ॥ ४०६ ॥
ध्रुवं मायाविनी काचिन्नटवद्वेषधारिणी । कूटनाटकमुत्पाद्यागाद्वंचयितुमत्र नः ॥ ४०७ ॥
चिन्तयंन्ताविति चिरं बुद्धिसंवादिनौ मुखम् । अन्योऽन्यमीक्षांचक्राते स्मेराक्षौ रामलक्ष्मणौ ॥ ४०८ ॥
॥ युग्मम् ॥

अथ रामः स्मितज्योत्स्नापूरस्तबकिताधरः । तामित्यूचे सभार्योऽहमभार्यं भज लक्ष्मणम् ॥ ४०९ ॥
तयार्थितस्तथैवैत्य लक्ष्मणोऽप्येवमब्रवीत् । आर्यं गता त्वमार्येव तदलं वार्तयानया ॥ ४१० ॥
सा याञ्चाखंडनात् पुत्रवधाच्च रुषिताधिकम् । आख्यद्गत्वा खरादीनां तत्कृतं तनयक्षयम् ॥ ४११ ॥
विद्याधरसहस्रैस्ते चतुर्दशभिरावृताः । ततोऽभ्येयुरुपद्रोतुं रामं शैलमिव द्विपाः ॥ ४१२ ॥

१ कामार्ता । २ रात्रिमध्ये । ३ खड्गसहितेन । ४ पक्षिविशेषः । ५ युद्धम् । ६ प्रफुल्लनेत्रौ ।

किमार्यः सत्यपि मयि योत्स्यते स्वयमीदृशैः । इति राममयाचिष्ट तेषां युद्धाय लक्ष्मणः ॥ ४१३ ॥
गच्छ वत्स जयाय त्वं यदि ते संकटं भवेत् । सिंहनादं ममाहूत्यै कुर्या इत्यन्वशात्स तम् ॥ ४१४ ॥
रामाज्ञां प्रतिपद्योच्चैर्लक्ष्मणोऽथ धनुःसखः[1] । गत्वा प्रववृते हंतुं स तांस्तार्क्ष्य[2] इवोरगान् ॥ ४१५ ॥
प्रवर्धमाने तद्युद्धे स्वभर्तुः पार्ष्णि[3]वृद्धये । गत्वा त्वरितमित्यूचे रावणं रावणस्वसा ॥ ४१६ ॥
आयातौ दंडकारण्ये मनुष्यौ रामलक्ष्मणौ । अनात्मज्ञौ[4] निन्यतुस्ते जामेयं यमगोचरम् ॥ ४१७ ॥
श्रुत्वा स्वसृपतिस्ते तु सानुजः सबलो ययौ । तत्र सौमित्रिणा सार्धं युध्यमानोऽस्ति संप्रति ॥ ४१८ ॥
कनिष्ठभ्रातृवीर्येण स्ववीर्येण च गर्वितः । परतो[5]ऽस्ति स्थितो रामो विलसन् सीतया सह ॥ ४१९ ॥
सीता च रूपलावण्यश्रिया सीमेव योषिताम् । न देवी नोरगी नापि मानुष्यन्यैव कापि सा ॥ ४२० ॥
तस्या दासीकृताशेषसुरासुरवधूजनम् । त्रैलोक्येऽप्यप्रतिच्छंदं रूपं वाचामगोचरम् ॥ ४२१ ॥
[6]आसमुद्रसमुद्राज्ञ यानि कान्यपि भूतले । तवैवार्हन्ति रत्नानि तानि सर्वाणि बांधव ॥ ४२२ ॥
दृशामनिमिषीकारकारणं रूपसंपदा । स्त्रीरत्नमेतद्गृह्णीया न चेत्त्वन्नासि रावणः ॥ ४२३ ॥
आरुह्य पुष्पकमथादिदेश दशकन्धरः । विमानराज त्वरितं याहि यत्रास्ति जानकी ॥ ४२४ ॥
ययौ चात्यंतवेगेन विमानमनुजानकि । स्पर्धयेव दशग्रीवमनसस्तत्र गच्छतः ॥ ४२५ ॥
दृष्ट्वापि रामादत्युग्रतेजसो दशकन्धरः । बिभ्याय दूरे तस्थौ च व्याघ्रो हुतवहादिव ॥ ४२६ ॥

---

१ धनुःसहायः । २ गरुडः । ३ पार्ष्णिः सेनापृष्ठभागः । ४ अबुधौ । ५ युद्धस्थानादन्यत्र । ६ समुद्रपर्यंतं मुद्रया सहितत्राज्ञा यस्य तत्संबोधनम् ।

इति चाचिन्तयदितः कष्टं रामो दुरासदः । इतश्च सीताहरणमितो व्याघ्र इतस्तटी ॥ ४२७ ॥
विमृश्य च ततो विद्यामस्मार्षीदवलोकनीम् ॥ उपतस्थे च सा मंक्षु किंकरीव कृतांजलिः ॥ ४२८ ॥
ततश्चाज्ञापयामास तत्कालं तां दशाननः । कुरु साहाय्यमह्नाय मम सीतां हरिष्यतः ॥ ४२९ ॥
सावोचद्वासुकेर्मौलिरत्नमादीयते सुखम् । न तु रामसमीपस्था सीता देवासुरैरपि ॥ ४३० ॥
उपायः किं त्वसावस्ति यायाद्येनैष[1] लक्ष्मणम् । तेस्यैव[2] सिंहनादेन संकेतो ह्यनयोरयम् ॥ ४३१ ॥
एवं कुर्विति तेनोक्ता व्रजित्वा परतस्ततः । सा साक्षादिव सौमित्रिः सिंहनादं विनिर्ममे ॥ ४३२ ॥
सिंहनादं च तं श्रुत्वा रामो दध्यौ ससंभ्रमः । जगत्यप्रतिमल्लो मे हस्तिमल्ल इवानुजः ॥ ४३३ ॥
तं न पश्यामि सौमित्रिर्येन प्राप्नोति संकटम् । तस्य संकटसंकेतक्ष्वेडा त्वत्र निशम्यते ॥ ४३४ ॥
एवं वितर्कव्यग्रोऽजूद्यावद्रामो महामनाः । सीता लक्ष्मणवात्सल्यात्तावदेवमवोचत ॥ ४३५ ॥
आर्यपुत्र किमद्यापि वत्से संकटमागते । विलंबसे द्रुतं गत्वा त्रायस्व ननु लक्ष्मणम् ॥ ४३६ ॥
इत्यादि सीतावचनैः सिंहनादेन चेरितः । जगाम त्वरितं रामो शकुनान्यप्यमानयन् ॥ ४३७ ॥
अथोत्तीर्य दशग्रीवो विमाने पुष्पकाभिधे । आरोपयितुमारेभे रुदंतीं जनकात्मजाम् ॥ ४३८ ॥
स्वामिन्येषोऽस्मि मा भैषीस्तिष्ठ तिष्ठ निशाचर । रोषादिति वदन् दूराज्जटायुस्तमधावत ॥ ४३९ ॥
स त्रोटि[3]नखकोटीभिर्निशिताभिर्महाखगः । चकर्ष रावणस्योरः सीरैः[4] कृषिमहीमिव ॥ ४४० ॥
ततः क्रुद्धो दशग्रीवः खड्गमारोप्य दारुणम् । पक्षौ भित्वापातयत्तं पतंगं[5] पृथिवीतले ॥ ४४१ ॥

१ येनोपायेनैष रामो लक्ष्मणं यायात् । २ लक्ष्मणस्यैव । ३ चंचूनखाग्रैः । ४ हलैः । ५ पक्षिणम् ।

निःशंकोऽथ दशग्रीवः सीतामारोप्य पुष्पके । चचाल नभसा तूर्णं पूर्णप्रायमनोरथः ॥ ४४२ ॥
हा नाथ विद्विषन्माथ राम हा वत्स लक्ष्मण । हा तातपादा हा भ्रातर्भामंडल महाभुज ॥ ४४३ ॥
सीता वो ह्रियतेऽनेन काकेनेव बलिश्छलात् । एवं सीता रुरोदोच्चै रोदयंतीव रोदसीम् ॥ ४४४ ॥
श्रुत्वा तदुदितं रत्नजट्यर्कजटिनन्दनः । खेचरो विममर्शैवं नूनं रामस्य पत्न्यसौ ॥ ४४५ ॥
समुद्रोपरि शब्दोऽयं श्रूयते येन तेन तु । ह्रियते रावणेनेयं छलितौ रामलक्ष्मणौ ॥ ४४६ ॥
प्रभोर्भामंडलस्याद्योपकरोमीति जातधीः । दधावे खड्गमाकृष्य दशकंधरमाक्षिपन् ॥ ४४७ ॥
युद्धायाह्वयमानं तं हसित्वैष दशाननः । सद्यो जहार तद्विद्यां विद्यासामर्थ्यतोऽखिलाम् ॥ ४४८ ॥
निकृ[3]त्तपक्षः पक्षीव हृतविद्यः पपात सः । कंबुद्वीपे कंबुशैलमारुह्य समवास्थित ॥ ४४९ ॥
रावणोऽपि विमानस्थो गच्छन् व्योम्नार्णवोपरि । इति सानुनयं प्रोचे मैथिलीं मन्मथातुरः ॥ ४५० ॥
नभश्चरक्ष्माचराणां भर्तुर्मे महिषीपदम् । प्राप्तासि रोदिषि कथं हर्षस्थाने कृतं शुचा ॥ ४५१ ॥
मंदभाग्येन रामेण सह त्वां योजयन् विधिः । नानुरूपं पुरा चक्रे मयाकार्यधुनोचितम् ॥ ४५२ ॥
मां पतिं देवि मन्यस्व सेवया दाससन्निभम् । मयि दासे तव दासाः खेचर्यः खेचरा अपि ॥ ४५३ ॥
ब्रुवाणे रावणे त्वेवं सीता तस्थावधोमुखी । स्मरन्ती मंत्रवद्भक्त्या राम इत्यक्षरद्वयम् ॥ ४५४ ॥
जानकीपादयोर्मूर्ध्ना स पपात स्मरातुरः । साप्यपासारयत्पादौ [4]परपुंस्पर्शकातरा ॥ ४५५ ॥
आचुक्रोश च सीतैवं निरनुक्रोश निस्त्रप । अचिराल्लप्स्यसे मृत्युं परस्त्रीकामनाफलम् ॥ ४५६ ॥

१ विद्विषता शत्रूणा माथो मथनं यस्मात्तत्सबोधने । २ अचिंतयत् । ३ लूनौ पक्षौ यस्य सः । ४ परपुरुषस्पर्शने कातरा ।

तदानीं संमुखा एयुर्मन्त्रिणः सारणादयः । अन्ये च रक्षःसामन्ताः समंताद्राक्षसप्रभोः ॥ ४५७ ॥
महोत्सवां महोत्साहो महासादसकृत्पुरीम् । आगमद्रावणो लंकामलंकर्मीणविक्रमः ॥ ४५८ ॥
न यावद्रामसौमित्रिक्षेमोदन्तसमागमः । भोक्ष्ये न तावदित्युच्चैः सीताभिग्रहमाददे ॥ ४५९ ॥
लंकापूर्वदिशि स्थिते सुरवरोद्यानोपमे खेचर स्त्रीणां विभ्रमधाम्नि देवरमणोद्याने स्वयं जानकीम् ।
रक्ताशोकतरोस्तले त्रिजटया चारक्षकैरावृतां मुक्त्वागाद्दशकंधरः प्रमुदितः स्वं धाम धाम्नां निधिः॥४६०॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सीताहरणो'नाम पंचमः सर्गः ।

---

## ॥ अथ षष्ठः सर्गः ॥

इतश्च रामः संप्राप्तस्त्वरितं तत्र चापभृत् । अमित्रैः सह सौमित्रिर्यत्राजूरणकेलिकृत् ॥ १ ॥
आयांतं राममालोक्य सौमित्रिरिदमब्रवीत् । आर्यामेकाकिनीं मुक्त्वा किमार्येह त्वमागमः ॥ २ ॥
आहूतः सिंहनादेन तव वैधुर्यलक्ष्मण । लक्ष्मणाहमिहायातो व्याजहारेति राघवः ॥ ३ ॥
लक्ष्मणोऽप्यवदत्सिंहनादोऽकारि मया न हि । श्रुतश्चार्येण तन्नूनं वयं केनापि वंचिताः ॥ ४ ॥
अपहर्तुं सत्यमार्यामपनीतोऽस्युपायतः । सिंहनादस्य करणे शंके स्तोकं न कारणम् ॥ ५ ॥
तगच्छ शीघ्रमेवार्य त्रातुमार्यां महाभुज । हत्वारीनहमप्येष यावदायामि पृष्ठतः ॥ ६ ॥
इत्युक्तो रामचन्द्रोऽगात् स्वस्थानं तत्र जानकीम् । नापश्यच्च महीपृष्ठे मूर्छितो निपपात च ॥ ७ ॥
लब्धसंज्ञः समुत्थाय तं मुमूर्षुं जटायुषम् । ईक्षांचक्रे रामचन्द्रो दध्याविति च तीक्ष्णधीः ॥ ८ ॥
केनापि दयिता नूनं जह्रे छलपरेण मे । तेनापहारकृद्धोयं महात्मा निहतः खगः ॥ ९ ॥
ततः प्रत्युपकाराय श्रावकस्य जटायुषः । ददौ रामो नमस्कारं परलोकाध्वशंबलम् ॥ १० ॥
स विपद्याभवत् कल्पे माहेंद्रे प्रवरः सुरः । रामोऽपि सीतामन्वेष्टुमाटाटव्यामितस्ततः ॥ ११ ॥
इतश्च लक्ष्मणो वीरः खरेण प्राज्यपत्तिना । योद्धुं प्रावर्ततैकोऽपि न सिंहस्य सखा युधि ॥ १२ ॥

---

१ शत्रुभिः । २ वैकल्यचिन्हेन । ३ हे लक्ष्मण । ४ दूरं नीतः । ५ प्राज्या बहवः पत्तयो यस्य तेन ।

अत्रांतरे च त्रिशिराः खरस्यावरजो भटः । को नामास्मिंस्तवाक्षेप इति ज्येष्ठं न्यवारयत् ॥ १३ ॥
अथो रथस्थं त्रिशिरोराक्षसं समरोद्यतम् । जघान रामावरजो गणयंस्तं पतंगवत् ॥ १४ ॥
तदा पातालंलंकेशचन्द्रोदरनृपात्मजः । विराधः सर्वसन्नाहिसैन्यस्तत्र समाययौ ॥ १५ ॥
आरिराधयिषुर्नत्वा विराधो रामसोदरम् । इत्यूचे तव भृत्योऽहमेतेषां त्वद्द्विषां द्विषन् ॥ १६ ॥
चन्द्रोदराख्यं निर्वास्य पितरं मे महाभुज । पातालंलंकां जगृहुरमी रावणपत्तयः ॥ १७ ॥
कः सखांशोस्तमोध्वंसे द्विषच्छिदलने च ते । तथापि भृत्यलेशत्वाद्रणायादिश मां प्रभो ॥ १८ ॥
स्मित्वा च लक्ष्मणोऽवोचद्धन्यमानान्मया द्विषः । पश्यामून् विजयो ह्यन्यसाहाय्याद्दोष्मतां ह्रिये ॥१९॥
अद्यप्रभृति ते स्वामी ज्येष्ठो मम रघूद्वहः । पातालंलंकाराज्ये च स्थापितोऽसि मयाद्य भोः ॥ २० ॥
विरोधिनं विरोधं स्वं तं दृष्ट्वा लक्ष्मणांतिके । क्रुद्धोधिकं खरोऽभ्येत्याधिज्यधन्वैवमब्रवीत् ॥ २१ ॥
तनयो मम शंबूकः क्वास्ते विश्वस्तघातक । विराधेन वराकेण सख्या किं रक्ष्यसेऽधुना ॥ २२ ॥
स्मित्वा चोवाच सौमित्रिस्त्रिशिरा अपि तेऽनुजः । भ्रातुःपुत्रस्य सोत्कंठस्तमनुप्रेषितो मया ॥ २३ ॥
पुत्रे भ्रातरि चोत्कंठा चेत्तवापि बलीयसी । नेतुं त्वामपि तत्रास्मि सद्यः सज्यधनुर्ननु ॥ २४ ॥
मया प्रमादघातेन पादन्यासेन कुंथुवत् । तव सूनुर्हतो मूढ तत्र मे पौरुषं न हि ॥ २५ ॥
अधुना त्वं भटंमन्यश्चेत्पूरयसि कौतुकम् । त्वया प्रीणामि कीनाशं वनवासेपि सत्र्यहम् ॥ २६ ॥

---

१ कनीयान् भ्राता । २ सर्वं सन्नद्धं सैन्यं यस्य सः । ३ आराधयितुमिच्छुः । ४ सूर्यस्य । ५ शत्रुदलने । ६ ज्यया प्रत्यंचया सहितं सज्यं धनुर्यस्य सः । ७ यमम् । ८ सत्री दाता ।

इत्युक्तवति सौमित्रावमित्रो राक्षसः खरः । खरं प्रहर्तुमारेभे दंतीव गिरिसानुनि ॥ २७ ॥
लक्ष्मणोऽपि क्षणेनापि कंकपत्रैः सहस्रशः । अंबरं तिरयामास भानुभिर्भानुमानिव ॥ २८ ॥
भयंकरः खेचराणां गरीयान् संगरस्तयोः । अजायत श्राद्ध[3]देवदैवतैकमहोत्सवः ॥ २९ ॥
विष्णुनापि रणे यस्य शक्तिरीदृक् खरः स हि । प्रतिविष्णोरप्यधिको व्योमन्येवं गिरोऽभवन् ॥ ३० ॥
कालक्षेपो वधेऽस्यापीत्यमर्षाल्लजितः स्वयम् । सौमित्रिः खरमूर्धानं क्षुरप्रेणाछिदत् क्षणात् ॥ ३१ ॥
दूषणो लक्ष्मणेनापि ससैन्यो योद्धुमुद्यतः । संजह्ने कुञ्जर इव सयूथो दववह्निना ॥ ३२ ॥
ततः सार्धं विराधेन ववले रामसोदरः । स्फुरद्वामेक्षणः काममाशंसन्नार्ययोः शुभम् ॥ ३३ ॥
गत्वा दूरमपश्यच्च रामभद्रं द्रुमांतरे । सीताविरहितं दृष्ट्वा विषादं परमं ययौ ॥ ३४ ॥
पुरःस्थमपि सौमित्रिमपश्यन् रघुपुंगवः । सीताविरहशल्येन पीडितः खेऽब्र[4]वीदिति ॥ ३५ ॥
वनं भ्रांतमिदं तावन्मया दृष्टा न जानकी । युष्माभिः किं न सा दृष्टा ब्रूत हे वनदेवताः ॥ ३६ ॥
अमुष्मिन् भीषणेऽरण्ये भूतश्वापदसंकुले । विमुच्यैकाकिनीं सीतां लक्ष्मणाय गतोऽस्मि हा ॥ ३७ ॥
रक्षोभटसहस्राग्रे संयत्येकं च लक्ष्मणम् । मुक्त्वा भूयोऽहमत्रागामहो धीर्मम दुर्धियः ॥ ३८ ॥
हा सीते निर्जनेऽरण्ये कथं मुक्ता मया प्रिये । हा वत्स लक्ष्मण कथं मुक्तोऽसि रणसंकटे ॥ ३९ ॥
एवं ब्रुवन् रामभद्रो मूर्छया न्यपतत् क्षितौ । क्रन्दद्भिः पक्षिभिरपि वीक्ष्यमाणो महाभुजः ॥ ४० ॥
लक्ष्मणोऽप्यब्रवीदेवमार्याय किमिदं ननु । तवायं लक्ष्मणो भ्राता जित्वारीन् समुपास्थितः ॥ ४१ ॥

---

१ तीक्ष्ण यथा स्यात्तथा । २ किरणैः ३ श्राद्धदेवो यमः । ४ आकाशे आकाशाभिमुख दृष्ट्वाब्रवीदित्यर्थः । ५ रणे ।

पीयूषेणेव संसिक्तो रामभद्रस्तया गिरा । लब्धसंज्ञो ददर्शाग्रे सस्वजे च निजानुजम् ॥ ४२ ॥
उदश्रुरूचे सौमित्रिः सिंहनादस्य कारणं । जानकीहरणमिदं ध्रुवं कस्यापि मायिनः ॥ ४३ ॥
तस्य प्राणैः सहैवाहमाहरिष्यामि जानकीम् । तत्प्रवृत्त्युपलंभाय संप्रति प्रयतामहे ॥ ४४ ॥
पातालंकाराज्ये च स्थाप्यतामेष पैतृके । विराधः प्रतिपन्नं[1] हि मयामुष्मै खराहवे[2] ॥ ४५ ॥
सीताप्रवृत्तिमानेतुं विद्याधरभटानथ । प्रजिघाय विराधस्तावाराधयिषुः प्रभू ॥ ४६ ॥
काकुत्स्थौ तस्थतुस्तत्र शोकानलकरालितौ । मुहुर्मुहुर्निःश्वसंतौ निर्दशंतौ क्रुधाधरम् ॥ ४७ ॥
दूरं विद्याधरा भ्रांत्वा विराधप्रहिताश्च ते । सीताप्रवृत्तिं न प्रापुस्तत्रैत्यास्थुरधोमुखाः ॥ ४८ ॥
तेषामधोमुखत्वेन ज्ञात्वा रामोऽब्रवीदिति । स्वामिकार्ये यथाशक्ति साधु युष्माभिरुद्यतम् ॥ ४९ ॥
सीताप्रवृत्तिर्न प्राप्ता को दोषस्तत्र वो भटाः । दैवस्य विपरीतस्य के यूयं कोऽपरोऽथवा ॥ ५० ॥
नत्वा विराधोऽप्यवदन्मा निर्वेदं कृथाः प्रभो । अनिर्वेदः श्रियो मूलं तव भृत्योऽस्मि नन्वहम् ॥ ५१ ॥
एहि पातालंकायां निवेशयितुमद्य माम् । सीताप्रवृत्तिः सुलभा तत्र भर्तुर्भविष्यति ॥ ५२ ॥
विराधेन ससैन्येन ततो रामः सलक्ष्मणः । ययौ पातालंकायाः पुर्याः परिसरावनौ ॥ ५३ ॥
तत्रारिसूदनः सुन्दो नाम रक्षः खरात्मजः । संमुखीनो रणायागान्महासैन्यसमावृतः ॥ ५४ ॥
पुरोगेण विराधेन समं पूर्वविरोधिना । सुन्दश्चक्रे रणं घोरं सद्यः पितृवधक्रुधा ॥ ५५ ॥
अथो रणस्थे काकुत्स्थे सुन्दश्चन्द्रणखागिरा । सद्यः प्रणश्य लंकायां रावणं शरणं ययौ ॥ ५६ ॥

१ प्रतिज्ञातम् । २ खरसग्रामे ।

॥ ७६ ॥

ततः पाताललंकायां प्रविश्य रघुपुंगवौ । निवेशयामासतुस्तं विराधं पैतृके पदे ॥ ५७ ॥
प्रासादे खरराजस्य तस्थतू रामलक्ष्मणौ । युवराज इव पुनर्विराधः सुन्दवेश्मनि ॥ ५८ ॥
इतश्च साहसगतेश्चिरं ताराभिलाषिणः । सिद्धा प्रतारणी विद्या हिमवद्गिरिकन्दरे ॥ ५९ ॥
तया सुग्रीवरूपः स कामरूप इवामरः । जगाम किष्किन्धपुरे द्वितीयोऽर्क इवांबरे ॥ ६० ॥
क्रीडार्थं बहिरुद्याने सुग्रीवे च गते तदा । स तदन्तःपुरमगात्तारादेवीविभूषितम् ॥ ६१ ॥
आगाच्च सत्यसुग्रीवो द्वारि च द्वारपालकैः । स्खलितोऽग्रे गतो राजा सुग्रीव इति वादिभिः ॥ ६२ ॥
सुग्रीवद्वितयं दृष्ट्वा संदेहाद्वालिनंदनः । शुद्धांतविप्लवं[1] त्रातुं तद्द्वारं त्वरितो ययौ ॥ ६३ ॥
शुद्धांते विटसुग्रीवः प्रविशन् वालिसूनुना । मार्गोद्भिणा सरित्पूर इव प्रस्खलितस्ततः ॥ ६४ ॥
अथामिलन् सैनिकानामक्षौहिण्यश्चतुर्दश । आहूतानि जगत्सारसर्वस्वानीव सर्वतः ॥ ६५ ॥
द्वयोरपि तयोर्भेदमजानंतोऽथ सैनिकाः । सत्यसुग्रीवतोऽर्धेऽर्धे विटसुग्रीवतोऽभवन् ॥ ६६ ॥
ततः प्रववृते युद्धं सैन्ययोरुभयोरपि । कुन्तपातैर्दिवं कुर्वद्भुल्कापातमयीमिव ॥ ६७ ॥
युयुधे सादिना सादी निषादी च निषादिना । पदातिना पदातिश्च रथिको रथिकेन च ॥ ६८ ॥
चतुरंगचमूचक्रविमर्दादथ मेदिनी । अवाप कंपं मुग्धेव प्रौढप्रियसमागमात् ॥ ६९ ॥
एह्येहि रे परगृहप्रवेशिन्निति[2] तं ब्रुवन् । विटसुग्रीवमुद्ग्रीवः सुग्रीवो योद्धुमाह्वत ॥ ७० ॥
ततश्च विटसुग्रीवो मत्तेभ इव तर्जितः । ऊर्जितं गर्जितं कुर्वन् संमुखीनो युधेऽभवत् ॥ ७१ ॥

---

१ अंतःपुरस्योपद्रवम् । २ हे परगृहप्रवेशिन् इति संबोधनम् ।

युयुधाते महायोधौ तौ क्रोधारुणलोचनौ । विदधानौ जगत्त्रासं कीनाशस्येव सोदरौ ॥ ७२ ॥
तौ निशातैर्निशातानि शस्त्रैः शस्त्राण्यथो मिथः । चिच्छिदाते तृणच्छेदं रणछेकौ[1] वुभावपि ॥ ७३ ॥
शस्त्रखंडैरुच्छलद्भिर्उद्रुवे खेचरीगणः । महायुद्धे तयोर्वृक्ष[2]खंडो महिषयोरिव ॥ ७४ ॥
तौ छिन्नास्त्रावथान्योऽन्यममर्षणशिरोमणी । मल्लयुद्धेनास्फलतां पर्वताविव जंगमौ ॥ ७५ ॥
उत्पतन्तौ क्षणाद्व्योम्नि निपतन्तौ क्षणाद्भुवि । ताम्रचूडाविवाभातां वीरचूडामणी उभौ ॥ ७६ ॥
तौ द्वावपि महाप्राणौ मिथो जेतुमनीश्वरौ । अपसृत्य च दूरेण वृषभाविव तस्थतुः ॥ ७७ ॥
साहाय्यकार्थं सुग्रीवः समाहूयांजनासुतम्[3] । भूयोऽपि युयुधे मायासुग्रीवेणोग्रकर्मणा ॥ ७८ ॥
हनूमतः पश्यतोऽपि द्वयोर्भेदमजानतः । कुट्टयामास सुग्रीवं विटसुग्रीव उत्कटः ॥ ७९ ॥
पुनर्युद्धेन सुग्रीवः खिन्नः खिन्नतनुस्ततः । बहिर्निर्गत्य किष्किन्धपुरादावासमग्रहीत् ॥ ८० ॥
तत्रैव विटसुग्रीवस्तस्थावस्वस्थमानसः । अन्तःपुरप्रवेशं च न लेभे वालिनंदनात् ॥ ८१ ॥
सुग्रीवो न्यंचितग्रीवम्[4] अथैवं पर्यचिंतयत् । अहो स्त्रीलंपटः कूटपटुः कोऽप्येष नो द्विषन् ॥ ८२ ॥
आत्मीया अप्यनात्मीया द्विषन्मायावशीकृताः । अहो बभूवुस्तदसाववस्कंदो[5] निजैर्हयैः ॥ ८३ ॥
मायापराक्रमोत्कृष्टः कथं वध्यो द्विषन्मया । धिग्मां पराक्रमभ्रष्टं वालिनाम्नस्त्रपाकरम् ॥ ८४ ॥
धन्यो महाबलो वाली योऽखंडपुरुषव्रतः । राज्यं तृणमिव त्यक्त्वा जगाम परमं पदम् ॥ ८५ ॥
चन्द्ररश्मिः कुमारो मे बलीयान् जगतोऽप्यसौ । किं तु द्वयोरभेदज्ञः कं रक्षतु निहंतु कम् ॥ ८६ ॥

१ रणे छेकौ चतुरौ । २ वृक्षसमूहः । ३ हनूमन्तम् । ४ नम्रशीर्षं यथा तथा । ५ संग्रामः ।

इदं तु विदधे साधु साध्वहो चन्द्ररश्मिना । तस्य पापीयसो रुद्धं शुद्धांते यत्प्रवेशनम् ॥ ८७ ॥
वधाय बलिनोऽमुष्य बलीयांसं श्रयामि कम् । यद्घात्या एव रिपवः स्वतोऽपि परतोऽपि वा ॥ ८८ ॥
भूर्भुवः स्वस्त्रयीवीरं मरुत्तमखभञ्जनम् । भजामि विद्विषद्घातहेतवे किं दशाननम् ॥ ८९ ॥
असौ किं तु प्रकृत्या [1]स्त्रीलोलस्त्रैलोक्यकंटकः । [2]तं च मां च निहत्याशु तारामादास्यते स्वयम् ॥ ९० ॥
ईदृशे व्यसने प्राप्ते साहाय्यं कर्तुमीश्वरः । आसीत् खरः खरतरो राघवेण हतः स तु ॥ ९१ ॥
तावेव रामसौमित्री गत्वा मित्रीकरोमि तत् । तत्कालोपनतस्यापि तौ विराधस्य राज्यदौ ॥ ९२ ॥
तौ तु पाताललंकायामलंकर्मीणदोर्बलौ । विराधस्यो[3]परोधेन तथैवाद्यापि तिष्ठतः ॥ ९३ ॥
एवं विमृश्य सुग्रीवोऽनुशिष्य रहसि स्वयम् । विराधपुर्यां विश्वासभूतं दूतं न्ययोजयत् ॥ ९४ ॥
गत्वा पाताललंकायां विराधाय प्रणम्य सः । स्वामिव्यसनवृत्तांतं कथयित्वाब्रवीदिदम् ॥ ९५ ॥
महति व्यसने स्वामी पतितो नस्तदीदृशे । राघवौ शरणीकर्तुं तव द्वारेण वांछति ॥ ९६ ॥
द्रुतमायातु सुग्रीवः सतां संगो हि पुण्यतः । तेनेत्युक्तो दूत एत्य सुग्रीवाय शशंस तत् ॥ ९७ ॥
प्रचचालाथ सुग्रीवोऽश्वानां ग्रैवेयक[4]स्वनैः । दिशो मुखरयन् सर्वा वेगाद्दूरमदूरयन्[5] ॥ ९८ ॥
पाताललंकां स प्राप क्षणेनाप्युपवेश्मवत् । विराधमुपतस्थे चाभ्युत्तस्थौ सोऽपि तं मुदा ॥ ९९ ॥
विराधोऽपि पुरोभूय रामभद्राय तायिने[6] । तं नमस्कारयामास तद्दुःखं च व्यजिज्ञपत् ॥ १०० ॥
सुग्रीवोऽप्येवमूचेऽस्मिन् दुःखे त्वमसि मे गतिः । द्रुते हि सर्वथा मूढे[7] शरणं तरणिः[8] खलु ॥ १०१ ॥

१ स्त्रीलंपटः । २ मायासुग्रीवम् । ३ आग्रहेण । ४ कंठाभरणस्वनैः । ५ समीपीकुर्वन् । ६ रक्षित्रे । ७ नष्टे । ८ सूर्यः ।

स्वयं दुःख्यपि तद्दुःखं छेत्तुं रामोऽभ्युपागमत् । स्वकार्यादधिको यत्नः परकार्ये महीयसाम् ॥ १०२ ॥
सीताहरणवृत्तांतं विराधेनावबोधितः । रामं विज्ञापयामास सुग्रीवोऽथ कृतांजलिः ॥ १०३ ॥
त्रायमाणस्य ते विश्वं तथा द्योतयतो रवेः । न कापि कारणापेक्षा देव वच्मि तथाप्यदः ॥ १०४ ॥
त्वत्प्रसादात्क्षतारिः सन् ससैन्योऽपि तवानुगः । आनेष्यामि प्रवृत्तिं च सीताया नचिरादहम् ॥१०५॥
ससुग्रीवः प्रतस्थे च किष्किंधां प्रति राघवः । विराधमनुगच्छंतं संबोध्य विससर्ज च ॥ १०६ ॥
रामचन्द्रेऽथ किष्किंधापुरद्वारमधिष्ठिते । सुग्रीवो विटसुग्रीवमाह्वास्त रणकर्मणे ॥ १०७ ॥
निनदन् विटसुग्रीवोऽप्यागादाह्वानमात्रतः । रणाय नालसाः शूरा भोजनाय द्विजा इव ॥ १०८ ॥
दुर्धरैश्च रणन्यासैः कंपयंतौ वसुंधराम् । तावुभावप्ययुध्येतां मत्ताविव वनद्विपौ ॥ १०९ ॥
रामः सरूपौ तौ दृष्ट्वा कोऽस्मदीयः परश्च कः । इति संशयतस्तस्थावुदासीन इव क्षणम् ॥ ११० ॥
भवत्वेवं तावदिति विमृशन् रघुपुंगवः । वज्रावर्ताभिधधनुष्टंकारमकरोत्ततः ॥ १११ ॥
धनुष्टंकारतस्तस्मात् सा साहसगतेः क्षणात् । रूपांतरकरी विद्या हरिणीव पलायत ॥ ११२ ॥
विमोह्य मायया सर्वं परदारै रिरंससे । पापारोपय[1] रे चापमिति रामस्ततर्ज तम् ॥ ११३ ॥
एकेनापीषुणा प्राणांस्तस्याहार्षीद्रघूद्वहः । न द्वितीया चपेटा हि हरेर्हरिणमारणे ॥ ११४ ॥
विराधमिव सुग्रीवं रामो राज्ये न्यवेशयत् । सुग्रीवोऽपि स्वलोकेन प्राग्वदेवानमस्यत ॥ ११५ ॥
त्रयोदश निजाः कन्या दातुमत्यंतसुन्दरीः । रामचन्द्रमयाचिष्ट प्राञ्जलिर्वानरेश्वरः ॥ ११६ ॥

१ रंतुमिच्छसि ।

रामोऽप्युवाच सुग्रीवं सीतान्वेषणहेतवे । प्रयतस्व किमेताभ्निरपरेणापि वस्तुना ॥ ११७ ॥
इत्युक्त्वा बहिरुद्याने गत्वा तस्थौ रघूद्वहः । सुग्रीवोऽपि तदादेशात्प्रविवेश निजां पुरीम् ॥ ११८ ॥
इतश्च पुर्यां लंकायां रावणांतःपुरस्त्रियः । खरादिहननोदन्तान्मन्दोदर्यादयोऽरुदन् ॥ ११९ ॥
रुदती सह सुन्देन स्वसा चन्द्रणखापि च । प्राविशद्रावणगृहं पाणिभ्यां कुट्टयंत्युरः ॥ १२० ॥
दृष्ट्वा च रावणं कंठे लगित्वोच्चतरस्वरम् । रुदती निजगादैवं दैवेन निहतास्मि हा ॥ १२१ ॥
हतः पुत्रो हतो भर्त्ता हतौ च मम देवरौ । चतुर्दश सहस्राणि हताश्च कुलपत्तयः ॥ १२२ ॥
पातालंका चाछिन्ना राजधानी त्वदर्पिता । दर्पवद्भिर्विद्विषद्भिर्बंधो जीवत्यपि त्वयि ॥ १२३ ॥
जीवग्राहं प्रणश्याहं सुंदेन सह सूनुना । त्वां शरण्यमिहायाता कुत्र तिष्ठामि शाधि माम् ॥ १२४ ॥
अबोधयद्दशास्योऽपि रुदंतीं तां ससौष्ठवः । त्वद्भर्तृपुत्रहन्तारं हनिष्याम्यचिरादपि ॥ १२५ ॥
शोकेन तेन [1]वैदेहीविप्रलंभरुजापि च । फालच्युत इव द्वीपी तल्पे तस्थौ निपत्य सः ॥ १२६ ॥
अथ मंदोदरी देवी तमुपेत्याभ्यधादिति । कथं प्राकृतवत् स्वामिन्निश्चेष्ट इव तिष्ठसि ॥ १२७ ॥
रावणोऽप्यब्रवीदेवं वैदेहीविरहज्वरात् । न चेष्टितुं न वक्तुं च न चालोकयितुं क्षमः ॥ १२८ ॥
मया चेज्जीवता तेऽर्थस्तन्मानं प्रोज्झ्य मानिनि । गत्वानुनयवैदेहीं यथा मयि रिरंसते ॥ १२९ ॥
नान्यनारीमनिच्छंतीं भुंजे जातुचिदप्यहम् । अर्गलानियमो ह्यत्र ममास्ति गुरुसाक्षिकः ॥ १३० ॥
पीडिता पीडया पत्युः कुलीना सापि तत्क्षणम् । जगाम देवरमणोद्याने सीतामुवाच च ॥ १३१ ॥

१ सीताविरहपीडया । २ त्यक्त्वा ।

एषा मन्दोदरी नाम दशाननमहिष्यहम् । [1]प्रपत्स्ये त्वयि दासीत्वं भजस्व दशकन्धरम् ॥ १३२ ॥
सीते त्वमेव धन्यासि यां [2]सिसेविषतेऽनिशम् । विश्वसेव्यांघ्रिकमलः पतिर्मम महाबलः ॥ १३३ ॥
अद्यापि तव रामेण भूचरेण तपस्विना । पत्तिमात्रेण किं पत्या प्रार्थ्यते चेद्दशाननः ॥ १३४ ॥
रुषा बभाषे सीतैवं क्व सिंहः क्व च जंबुकः । क्व सुपर्णः क्व वा काकः क्व रामः क्व च ते पतिः ॥ १३५ ॥
दम्पतित्वमहो युक्तं तव तस्य च पाप्मनः । रिरंसुरेकोऽन्यस्त्रीषु दूतीभवति चापरा ॥ १३६ ॥
द्रष्टुमप्युचिता नासि किमु संभाषितुं हले । स्थानादितो गच्छ गच्छ त्यज दृष्टिपथं मम ॥ १३७ ॥
रावणोऽपि तदा तत्राजगाम निजगाद च । कुपितासि कुतः सीते दासी मन्दोदरी तव ॥ १३८ ॥
दासस्ते स्वयमप्यस्मि प्रसादं कुरु देवि मे । जानकि त्वं जनममुं प्रीणासि न दृशापि किम् ॥ १३९ ॥
सीता पराङ्मुखीभूयेत्यभाषत महासती । कृतांतदृष्ट्या दृष्टोऽसि हरन्मां रामगेहिनीम् ॥ १४० ॥
धिगाशां ते हताशस्याप्रार्थितप्रार्थकस्य रे । जीविष्यसि कियद्रामे सानुजे द्विषदन्तके ॥ १४१ ॥
तयेत्याक्रुश्यमानोऽपि भूयो भूयो दशाननः । तथैवोवाच धिगहो कामावस्था बलीयसी ॥ १४२ ॥
अत्रांतरे विपन्मग्नां सीतां द्रष्टुमिवाक्षमः । निममज्ज निधिर्धाम्नां पश्चिमे लवणांबुधौ ॥ १४३ ॥
प्रावर्तत निशा घोरा घोरबुद्धिश्च रावणः । सीतायै क्रोधकामांध उपसर्गान् प्रचक्रमे ॥ १४४ ॥
घूत्कारिणो महाघूकाः फेत्कुर्वाणाश्च फेरवः । वृका विचित्रं क्रंदन्त ओतवोऽन्योऽन्ययोधिनः ॥ १४५ ॥
पुच्छाच्छोटकृतो व्याघ्राः फूत्कुर्वाणाः फणाभृतः । पिशाचप्रेतवेतालभूताश्चाकृष्टकर्त्रिका[3]ः ॥ १४६ ॥

१ प्राप्स्यामि । २ सेवितुमिच्छति । ३ कर्त्री कर्तरी ।

उच्छलंतो[1] दुर्ललिता[2] यमस्येव सभासदः । विकृता रावणेनेयुरुपसीतं भयंकराः ॥ १४७ ॥
॥ त्रिभिर्विशेषकम् ॥

ध्यायन्ती मनसा पंचपरमेष्ठिनमस्क्रियाम् । सीता तस्थावभीतैव न तु भेजे दशाननम् ॥ १४८ ॥
बिभीषणः प्रभाते तु निशावृत्तं निशम्य तत् । आगादुपदशग्रीवं सीतां चैवमवोचत ॥ १४९ ॥
भद्रे का त्वं कुतः स्थानात्कस्य चासि किमत्र च । मा भैषीः सर्वमाख्याहि परस्त्रीसोदरस्य मे ॥ १५० ॥
तं मध्यस्थं परिज्ञाय सीताप्याख्यदधोमुखी । अहं जनकपुत्र्यस्मि सीता भामंडलस्वसा ॥ १५१ ॥
गृहिणी रामचन्द्रस्य स्नुषा दशरथस्य च । समं पत्या सानुजेन दंडकारण्यमागमम् ॥ १५२ ॥
तत्रैकदा देवरो मे क्रीडयेतस्ततो भ्रमन् । खे महासिं ददर्शैकं जग्राह च कुतूहलात् ॥ १५३ ॥
अभ्यर्णस्थां वंशजालीं तेन चिच्छेद सोऽसिना । अज्ञानाच्च तदन्तःस्थतत्साधकशिरोऽच्छिदत् ॥ १५४ ॥
अयुध्यमानोऽनागस्कः[3] कोऽप्ययं हा हतो मया । सानुताप इव भ्रातुः समीपं स उपागमत् ॥ १५५ ॥
तस्यासिसाधकस्यैव काचिदुत्तरसाधिका । मद्देवरस्यानुपदं तत्र कोपादुपागमत् ॥ १५६ ॥
भर्तारं मम दृष्ट्वा चाद्भुतरूपपुरंदरम् । अयाचीद्रन्तुकामार्तावाज्ञासीत्तां च मत्पतिः ॥ १५७ ॥
सागच्छदागमदथ रक्षसां बलमुल्बणम् । क्ष्वेडां वैधुर्यसंकेतीकृत्यागाल्लक्ष्मणो युधि[4] ॥ १५८ ॥
मायाक्ष्वेडामथो कृत्वा दूरं नीत्वा च मत्पतिम् । दुराशोऽहृत मामेष स्ववधायैव राक्षसः ॥ १५९ ॥
तच्छ्रुत्वा रावणं नत्वा बभाषे च बिभीषणः । कुलस्य दूषणमिदं स्वामिन् कर्म त्वया कृतम् ॥ १६० ॥

---

१ उच्छलतः । २ दुर्विनीताः । ३ निरपराधी । ४ वैधुर्ये सकटे संकेतभूतां कृत्वा ।

न यावदिह हंतुं नः काकुत्स्थोऽभ्येति सानुजः । मुच्यतां तावदाश्वेव नीत्वा सीता तदन्तिके ॥ १६१ ॥
इत्युक्ते रावणः क्रोधारुणाक्षोऽप्यब्रवीदिति । किमिदं भाषसे भीरो व्यस्मार्षीर्मम पौरुषम् ॥ १६२ ॥
सीतानुनीतावश्यं हि मम भार्या भविष्यति । तौ चायातौ हनिष्यामि वराकौ रामलक्ष्मणौ ॥ १६३ ॥
ऊचे बिभीषणो भ्रातः सत्यं तज्ज्ञानिनो वचः । यद्रामपत्न्याः सीतायाः कृते नः कुलसंक्षयः ॥ १६४ ॥
भक्तस्य बन्धोर्मे वाचं मन्यसे नान्यथा कथम् । मया हतो दशरथः स तावज्जीवितः कथम् ॥ १६५ ॥
न यद्यप्यन्यथाभावि भावि वस्तु महाभुज । तथापि प्रार्थ्यसे मुंच सीतां नः कुलघातिनीम् ॥ १६६ ॥
अनाकर्णितकेनेव बिभीषणगिरामथ । आरोप्य पुष्पके सीतां भ्रमन्नेवमदर्शयत् ॥ १६७ ॥
अमी क्रीडाद्रयो [1]रत्नसानवः स्वादुनिर्झराः । [2]नन्दनोद्यानसोदर्याण्यमून्युपवनानि च ॥ १६८ ॥
[3]यथाकामीनवृष्टीनि धारावेश्मान्यमूनि च । अमूश्च केलिकूलिन्यः सहंसा हंसगामिनि ॥ १६९ ॥
एतानि रतिवेश्मानि स्वर्गखंडोपमानि च । मया सह रमस्वैषु सुभ्रु यत्र रतिस्तव ॥ १७० ॥
ध्यायंती रामपादाब्जे हंसीव जनकात्मजा । वसुंधरेव धैर्येण चुक्षोभ न हि तद्गिरा ॥ १७१ ॥
सर्वेषु रम्यस्थानेषु भ्रांत्वा भ्रांत्वा दशाननः । मुमोचाशोकवनिकामध्ये भूयोऽपि जानकीम् ॥ १७२ ॥
प्रेक्ष्योन्मत्तमिव ज्येष्ठं वाचोयुक्तेरगोचरम् । बिभीषणो मंत्रयितुं कुलामात्यानथाह्वयत् ॥ १७३ ॥
ऊचे च भोः कुलामात्याः कामाद्या ह्यान्तरद्विषः । भूता इवैते तेष्वेकोऽप्युन्मथ्नाति प्रमादिनम् ॥१७४॥

१ रत्नशिखराः । २ नन्दनोपवनसदृशानि । ३ यथेच्छवृष्टीनि ।

॥ ८० ॥

कामं कामातुरः स्वामी कामस्त्वेको हि दुर्जयः । किं पुनः कृतसाहाय्यः परनारीरिरंसया ॥ १७५ ॥
तदतः परमत्यंतं महति व्यसनार्णवे । पतिष्यति पतिर्लंकापुर्या दोष्मानपि द्रुतम् ॥ १७६ ॥
अथ ते मंत्रिणः प्रोचुर्वयं नाम्नैव मंत्रिणः । त्वमेव मंत्री मंत्रात्तु यस्येदृग्दूरदर्शिता ॥ १७७ ॥
किं करोति परं मंत्रः प्रभौ कामवशंवदे । मिथ्यादृष्टौ जने जैनधर्मस्येवोपदेशनम् ॥ १७८ ॥
सुग्रीवहनुमन्मुख्या मिलिता राघवस्य ते । महात्मनां न्यायभाजां कः पक्षं नावलंबते ॥ १७९ ॥
सीतानिमित्तो ह्यैक्ष्वाकाज्ज्ञान्युक्तो नः कुलक्षयः । तथापि पुरुषाधीनं कर्तव्यं समयोचितम् ॥ १८० ॥
ततो बिभीषणश्चक्रे वप्रे यंत्रादिरोपणम् । अनागतं हि पश्यंति मंत्रिणो मंत्रचक्षुषा ॥ १८१ ॥
इतश्च कालं कमपि कथमप्यत्यवाहयत् । सौमित्रिणाश्वास्यमानो रामो विरहपीडितः ॥ १८२ ॥
अनुशिष्याथ रामेण प्रेषितो लक्ष्मणः स्वयम् । प्रतस्थे प्रति सुग्रीवं तूणचापकृपाणभृत् ॥ १८३ ॥
दलयन् क्ष्मां[2] पदन्यासैः कंपयंस्तं च पर्वतम् । वेगान्दोलितदोःस्पर्शान्मार्गवृक्षांश्च पातयन् ॥ १८४ ॥
उत्कटभ्रुकुटीभीमललाटोऽरुणलोचनः । भीतैर्द्वाःस्थैर्मुक्तमार्गः प्राप सुग्रीववेश्म सः ॥ १८५ ॥
॥ युग्मम् ॥
आयातं लक्ष्मणं श्रुत्वा निर्गत्यांतःपुराद्द्रुतम् । उपतस्थे कपिराजः कंपमानवपुर्भयात् ॥ १८६ ॥
ऊचे च लक्ष्मणः क्रुद्धः कृतकृत्योऽसि वानर । सुखं तिष्ठसि निःशंकः स्वान्तःपुरसमावृतः ॥ १८७ ॥
स्वामी तरुतलासीनो दिवसानब्दसन्निभान् । यथात्येति न तद्वेत्सि प्रतिपन्नं च विस्मृतम् ॥ १८८ ॥

१ परनारीरिरंसया कृतं साहाय्यं यस्यैतादृशः कामो दुर्जयस्तत्र किं वक्तव्यमित्यर्थः । २ पृथ्वीम् ।

सीताप्रवृत्तिमानेतुमुत्तिष्ठस्वाधुनापि हि । मा साहसगतेर्मार्गे गमः संकुचितो न सः[1] ॥ १८९ ॥
पतित्वा पादयोस्तस्य सुग्रीवोऽथाब्रवीदिति । प्रसीदैकं प्रमादं मे सहस्वासि प्रभुर्यतः ॥ १९० ॥
एवमाराध्य सौमित्रिमग्रे कृत्वा कपीश्वरः । द्रुतं ययौ रामभद्रं नमश्चक्रे च भक्तितः ॥ १९१ ॥
इत्यादिशच्च स्वान् सैन्यान् भो भोः सर्वेऽपि दोर्भृतः । सर्वत्रास्खलिता यूयं गवेषयत मैथिलीम् ॥ १९२
इत्युक्तास्तेन ते सैन्या द्वीपेष्वद्रिषु सिंधुषु । भूमिरंध्रेष्वथान्यत्र त्वरितत्वरितं ययुः ॥ १९३ ॥
सीताहरणमाकर्ण्य तदा भामंडलोऽपि हि । आगमद्राममस्थाच्च स[2] इवात्यंतदुःखितः ॥ १९४ ॥
विराधोऽपि समं सैन्यैः स्वामिव्यसनपीडितः । एत्य शुश्रूषमाणोऽस्थात्तत्रैव चिरपत्तिवत् ॥ १९५ ॥
सुग्रीवोऽपि स्वयं गच्छन् कंबुद्वीपमुपाययौ । तं च रत्नजटी दृष्ट्वा दूरादेवमचिंतयत् ॥ १९६ ॥
संस्मृत्य किं ममागस्तत्प्रेष्ययं दशमौलिना । मद्वधाय महाबाहुः सुग्रीवो वानरेश्वरः ॥ १९७ ॥
हृता विद्या दशास्येन पुरा तावन्महौजसा । इदानीमेष मे प्राणान् हरिष्यति हरीश्वरः ॥ १९८ ॥
इति चिंतापरं तं द्राक् सुग्रीवोऽगादुवाच च । नाभ्युदस्थाः कथं मां त्वं व्योमयानेऽलसोऽसि किम् ॥ १९९
सोऽप्यभ्यधाद्दशास्येन विद्या मे सर्वतो हृता । जानकीं हरतस्तस्य युद्धे ह्यहमुपस्थितः ॥ २०० ॥
ततश्च रामपादान्ते स नीतः कपिकेतुना । तेन विज्ञापितः सीतोदन्तमेवं व्यजिज्ञपत् ॥ २०१ ॥
देव देवी नृशंसेन सती सीता दुरात्मना । हृता लंकापुरीशेन विद्या च मम कुप्यतः ॥ २०२ ॥
हा राम वत्स सौमित्रे भ्रातर्भामंडलेति च । देव्यां रुदत्यां सीतायामकुप्यं दशमौलये ॥ २०३ ॥

१ स साहसगतेर्मार्गो मृत्युरूपो न संकुचितः तवापि मरण भविष्यतीति ध्वनिः । २ राम इव ।

सीतोदन्तेन तेनाथ मुदितो रघुपुंगवः । सुरसंगीतपुरेशं रत्नजटिनमाश्लिषत् ॥ २०४ ॥
भूयो भूयोऽपि पप्रच्छ सीतोदन्तं रघूद्वहः । भूयो भूयोऽपि सोऽप्याख्यत्तन्मनःप्रीतिहेतवे ॥ २०५ ॥
अपृच्छद्रामचन्द्रस्तान् सुग्रीवादीन्महाभटान् । इतः कियति दूरे सा लंकापूस्तस्य रक्षसः ॥ २०६ ॥
तेऽप्यूचुः किं तया पुर्यासन्नयाथ दविष्ठया । रावणस्य जगज्जिष्णोर्यत्सर्वे तृणवद्वयम् ॥ २०७ ॥
रामोऽप्यूचे कृतं तस्य जय्याजय्यविचिन्तया । दर्शनप्रतिभूवन्नैस्तं[1][2] दर्शयत केवलम् ॥ २०८ ॥
तस्य दर्शितमात्रस्य सामर्थ्यं ज्ञास्यथाचिरात् । सौमित्रिमुक्तनाराचपीयमानगलासृजः[3] ॥ २०९ ॥
बभाषे लक्ष्मणोऽप्येवं क एष ननु रावणः । सारमेय इवासारश्छलेनैवं चकार यः ॥ २१० ॥
क्षत्राचारेण तस्याहं छेत्स्यामि छलिनः शिरः । संग्रामनाटकं यूयं सभ्यीभूयैव पश्यत ॥ २११ ॥
जाम्बवान् व्याजहाराथ सर्वं वो युज्यते परम् । यो हि कोटिशिलोत्पाटी स हनिष्यति रावणम् ॥ २१२ ॥
साधुनानन्तवीर्येणाख्यातं ज्ञानवता ह्यदः । अस्मत्प्रत्ययहेतोस्तत्समुत्पाटय तां शिलाम् ॥ २१३ ॥
एवमस्त्वित्युक्तवन्तं ते नयंति स्म लक्ष्मणम् । सपदि व्योमयानेन यत्र कोटिशिलास्ति सा ॥ २१४ ॥
उच्चिक्षेप शिलां दोष्णा लक्ष्मणस्तां लतामिव । साधु साध्वित्युच्यमानस्त्रिदशैः पुष्पवर्षिभिः ॥ २१५ ॥
संजातप्रत्ययास्तेऽपि व्योमयानेन पूर्ववत् । किष्किन्धायां समानिन्युर्लक्ष्मणं रामसंनिधौ ॥ २१६ ॥
कपिवृद्धास्ततः प्रोचुर्युष्मत्तो रावणक्षयः । आदौ प्रेष्यो द्विषां दूत इति नीतिमतां स्थितिः ॥ २१७ ॥

---

१ समीपस्थया । २ दर्शने प्रतिभूवत् साक्षिवत् । ३ नोऽस्माकम् । ४ लक्ष्मणेन मुक्तेन नाराचेन पीयमानं कंठशोणितं यस्य सः ।

संदेशहारकेणापि यदि सिध्येत्प्रयोजनम् । पर्याप्तं स्वयमुद्योगकर्मणा भूभुजां तदा ॥ २१८ ॥
समर्थः प्रेष्यतां तत्र कोऽपि दूतो महाभुजः । सा दुःप्रवेशनिष्काशा लंका हि श्रूयते क्षितौ ॥ २१९ ॥
गत्वा दूतः स लंकायां भणिष्यति बिभीषणम् । सीतार्पणकृते रक्षःकुले स खलु नीतिवान् ॥ २२० ॥
सीतां मोचयितुं सोऽपि रावणं बोधयिष्यति । रावणेन त्ववज्ञातस्त्वामेष्यति तदैव हि ॥ २२१ ॥
एवं वचसि तेषां तु रामेणानुमते सति । श्रीभूतिं प्रेष्य सुग्रीवो हनूमन्तमथाह्वत ॥ २२२ ॥
अथ रामं सभासीनं सुग्रीवादिसमावृतम् । नमश्चकार हनुमान् भानुमानिव तेजसा ॥ २२३ ॥
ततो रामाय सुग्रीवः शशंसैवमयं हि नः । विधुरे परमो बंधुर्विनयी पावनंजयिः[1] ॥ २२४ ॥
नास्य तुल्यो द्वितीयोऽस्ति सर्वविद्याधरेष्वपि । सीताप्रवृत्तिलाभार्थं स्वामिन्नेनं तदादिश ॥ २२५ ॥
हनुमानप्युवाचैवं कपयः संत्यनेकशः । मत्प्रायाः[2] स्नेहतस्त्वेतद्वक्ति सुग्रीवभूपतिः ॥ २२६ ॥
गवो गवाक्षो गवयः शरभो गन्धमादनः । नीलो द्विविदमैन्दौ च जांबवानंगदो नलः ॥ २२७ ॥
अन्येऽपि बहवः स्वामिन् संतीह कपिपुंगवाः । तेषां संख्यापूरणोऽहमपि त्वत्कार्यसिद्धये ॥ २२८ ॥
लंकां सराक्षसद्वीपामुत्पाट्येह किमानये । बद्ध्वा सबान्धवमथानयामि दशकन्धरम् ॥ २२९ ॥
सकुटुंबं दशग्रीवं हत्वा तत्रैव वा द्रुतम् । देवीं जनकजामेवानयामि निरुपद्रवाम् ॥ २३० ॥
रामोऽपि निजगादैवं सर्वं संभवति त्वयि । तद्गच्छ पुर्यां लंकायां सीतां तत्र गवेषयेः ॥ २३१ ॥
मदूर्मिकामिमां[3] देव्या मदभिज्ञानमर्पयेः । तस्याश्चूडामणिं चाभिज्ञानमत्र समानयेः ॥ २३२ ॥

१ पवनंजयस्यापत्यं पुमान् पावनजयिः हनुमान् । २ मत्सदृशाः । ३ ममांगुलीयकम् ।

इदं मद्वाचिकं शंसेर्देवि यल्लक्ष्मणाग्रजः । त्वद्वियोगातुरोऽत्यंतं ध्यायंस्त्वामेव तिष्ठति ॥ २३३ ॥
मात्याक्षीर्मद्वियोगेन जीवितं जीवितेश्वरि । लक्ष्मणेन हतं द्रक्ष्यस्यचिरादेव रावणम् ॥ २३४ ॥
हनुमानप्युवाचैवं यावदाज्ञां विधाय ते । लंकायाः पुनरायामि तिष्ठेस्तावदिह प्रभो ॥ २३५ ॥
इत्युक्त्वा राघवं नत्वा मारुतिः सपरिच्छदः । लंकापुरीं प्रत्यचालीद्विमानेनातिरंहसा ॥ २३६ ॥
स गच्छन्नभसापश्यन्महेन्द्रगिरिसानुनि । मातामहमहेन्द्रस्य महेन्द्रपुरपत्तनम् ॥ २३७ ॥
एवं च दध्यौ हनुमान्महेन्द्रस्य पुरं ह्यदः । येन मेऽनपराधापि माता निर्वासिता तदा ॥ २३८ ॥
इति संस्मृत्य संक्रुद्धो रणतूर्यमवादयत् । ब्रह्मांडं स्फोटयदिव दिङ्मुखप्रतिशब्दितैः ॥ २३९ ॥
दृष्ट्वा परबलं राजा महेन्द्रोऽपीन्द्रविक्रमः । समं सैन्यैर्निरगमत् सपुत्रो रणकर्मणे ॥ २४० ॥
महेन्द्रहनुमच्चम्वोरजायत महारणः । व्योमन्युत्पातजीमूत[3] इवासृग्वृष्टिभीषणः ॥ २४१ ॥
प्राभञ्जि निर्बभंजाथ प्रभञ्जन इव द्रुमान् । परसैन्यान् क्षणेनापि भ्रमन् वेगेन संगरे ॥ २४२ ॥
प्रसन्नकीर्तिर्माहेन्द्रिरयुध्यत[4] हनूमता । निष्प्रज्ञशंकं जामेयसंबन्धमविदन्नथ ॥ २४३ ॥
तावुभावपि महाबाहू तावप्यत्यमर्षणौ । अन्योऽन्यं दृढयुद्धेन जनयामासतुः श्रमम् ॥ २४४ ॥
अथैवं चिंतयामास युध्यमानोऽपि पावनिः । आरंभि धिग्मया युद्धं स्वामिकार्यविलंबकृत् ॥ २४५ ॥
ये जीयंते क्षणात्तेऽन्ये मम मातृकुलं ह्यदः । तथाप्यारब्धनिर्वाहकृते जेतव्यमेव हि ॥ २४६ ॥
ध्यात्वेति हनुमान् क्रुद्धः प्रहारैर्मोहयन् क्षणात् । प्रसन्नकीर्तिं जग्राह भग्नास्त्ररथसारथिम् ॥ २४७ ॥

१ मम संदेशम् । २ दिङ्मुखानां प्रतिध्वानैः । ३ जीमूतो मेघः । ४ महेन्द्रपुत्रः ।

अग्रहीद्भृशमायोध्य महेन्द्रमपि मारुतिः । नत्वा चैवं समाचख्यौ नप्ता तेऽस्म्यञ्जनासुतः ॥ २४८ ॥
रामाज्ञया च वैदेहीशुद्ध्यै लंकां व्रजन्नहम् । अत्रायातः समस्मार्षं मातृनिर्वासनं चिरात् ॥ २४९ ॥
जातामर्षेण तत्तात योधितोऽसि सहस्व मे । स्वामिकार्याय यास्यामि याहि नः स्वामिसन्निधौ ॥ २५० ॥
महेन्द्रोऽपि समालिंग्य तमित्यूचे महाभुजम् । प्राक्छ्रुतोऽसि जनश्रुत्या दिष्ट्या दृष्टोऽद्य विक्रमी॥२५१
गच्छ स्वस्वामिकार्याय पंथानः संतु ते शिवाः । इत्युदित्वा महेन्द्रोऽगात् ससैन्यो राघवान्तिके ॥२५२॥
व्योम्नाथ हनुमान् गच्छन् द्वीपे दधिमुखाभिधे । कायोत्सर्गे तस्थिवांसौ प्रेक्षांचक्रे महामुनी ॥ २५३ ॥
तयोरनतिदूरे चापश्यत्तिस्रः कुमारिकाः । ध्यानस्था निरवद्यांगीर्विद्यासाधनतत्पराः ॥ २५४ ॥
दवानलस्तदा द्वीपे प्रजज्वालाखिलेऽपि हि । तौ साधू ताः कुमार्यश्च निपेतुर्दवसंकटे ॥ २५५ ॥
तद्वात्सल्येन हनुमान् विद्ययादाय सागरात् । तं दवाग्निं मेघ इव शमयामास वारिभिः ॥ २५६ ॥
तदैव सिद्धविद्यास्ताः कन्या ध्यानस्थितौ तु तौ । मुनी प्रदक्षिणीकृत्य हनूमंतं बभाषिरे ॥ २५७ ॥
साधूपसर्गं साधूनामरक्षः परमार्हत । त्वत्साहाय्येन विद्या नः सिद्धाः कालं विनापि हि ॥ २५८ ॥
का यूयमिति तेनोक्ताः कन्यास्ता एवमब्रुवन् । अस्मिन् गन्धर्वराजोऽस्ति राजा दधिमुखे पुरे ॥ २५९ ॥
स्मस्तस्य कन्याः कुसुममालाकुक्षिभवा वयम् । तातं ययाचिरेऽस्मांस्तु बहवः खेचरेश्वराः ॥ २६० ॥
खेचरोऽङ्गारको नामोन्मत्तश्चास्मत्कृतेऽभवत् । ततस्तस्मै न चान्यस्मै ददौ तातस्त्वरोचकी[2] ॥ २६१ ॥
मत्पुत्रीणां पतिः कः स्यादित्यपृच्छत्पिता मुनिम् । यः साहसगतेर्हन्ता स स्यादिति च सोऽवदत् ॥२६२॥

१ पौत्रः । २ अरुचिवान् ।

तज्जिरान्वेषयंस्तातो नोपलेभे तु तं क्वचित् । विद्यासाधनमस्माभिस्तं ज्ञातुं च प्रचक्रमे ॥ २६३ ॥
विद्याभ्रंशनिमित्तं चाङ्गारकेण कृतो दवः । त्वया च शमितः साधु नो निष्कारणबंधुना ॥ २६४ ॥
मासैः सिध्यति या षड्भिस्त्वत्साहाय्यात् क्षणादपि । सा मनोगामिनी नाम विद्या नः सिद्धिमाययौ॥२६५
आमूलात्साहसगतेर्वधं रामेण निर्मितम् । शशंस हनुमांस्तासां लंकायां चात्मनो गतिम् ॥ २६६ ॥
मुदितास्ताः पितुर्गत्वा शशंसुस्तदशेषतः । सोऽपि ताभिः समं सद्यः ससैन्योऽगाद्रघूद्वहम् ॥ २६७ ॥
उत्पपाताथ हनुमानुपलंकं गतश्च सन् । ददर्शाशालिकां विद्यां घोरां कालनिशामिव ॥ २६८ ॥
अरे कपे क्व यातासि यातोऽसि मम भोज्यताम् । इति ब्रुवाणा साक्षेपं व्याददाति स्म सा मुखम्॥२६९
हनूमांश्च गदापाणिः प्रविवेश तदाननम् । अभ्रमध्यमिवादित्यस्तां विदार्य च निर्ययौ ॥ २७० ॥
तया कृतं च प्राकारं लंकापुर्या मरुत्सुतः । विद्यासामर्थ्यतोऽभांक्षीन्मंक्षु कर्परलीलया ॥ २७१ ॥
तद्रक्षारक्षमप्युच्चैः क्रुद्धं वज्रमुखाभिधम् । सोऽवधीत्सह युध्वानं युद्धाध्वन्यधुरंधरः ॥ २७२ ॥
हते वज्रमुखे लंकासुंदरी तस्य कन्यका । विद्याबलवती कोपाद्युद्धायाह्वास्त मारुतिम् ॥ २७३ ॥
व्योमनीव तडिल्लेखा साचारीच्चतुरं रणे । प्रहरन्ती मुहुः सानुमतीव हि हनूमति ॥ २७४ ॥
तदस्त्राणि निजैरस्त्रैश्छिदानः पावनञ्जयिः । तां निरस्त्रीचकाराशु निष्पत्रामिव वीरुधम् ॥ २७५ ॥
क एष इति साश्चर्यादाञ्जनेयमुदीक्षितुम् । संप्रवृत्ता च कामेन ताडिता च शिलीमुखैः ॥ २७६ ॥
सा हनूमन्तमित्यूचे मया पितृवधोत्थया । अविचार्य क्रुधा वीर योधितोऽसि मुधैव हि ॥ २७७ ॥

१ गमनम् । २ गच्छसि । ३ कर्परो मृण्मयं जीर्णपात्रम् । ४ लताम् । ५ बाणैः ।

आख्यातं साधुना पूर्वं यस्ते जनकघातकः । भावी भर्तेति तन्नाथ मामुद्वह वशंवदाम् ॥ १७८ ॥
सकलेऽपि जगत्यस्मिन् कोऽन्यस्तव समो भटः । ततः स्थास्यामि नारीषु त्वया पत्यातिगर्विता ॥ १७९ ॥
एवं विनीतां तां कन्यां मुदितो हनुमानपि । गान्धर्वेण विवाहेन सानुरागमुपायत ॥ १८० ॥
स्नातुकाम इव व्योमाटवीपर्यटनश्रमात् । तदा त्विषामधिपतिर्ममज्जापरवारिधौ ॥ १८१ ॥
प्रतीचीमुपभुज्याशां गच्छता भानुमालिना । संध्याभ्रच्छद्मना तस्या वासांसीवापनिन्यिरे ॥ १८२ ॥
चकाशे दिशि वारुण्यामरुणाभ्रपरंपरा । अस्तकाले रविं त्यक्त्वा तेजः पृथगिव स्थितम् ॥ १८३ ॥
नवरागो नवरागां सिषेवे वारुणीमसौ । मां हित्वेत्यपमानेन म्लानास्या प्राच्यभूद्ध्रुवम् ॥ १८४ ॥
क्रीडास्थानभुवां तासां परित्यागभुवा रुजा । खगैः कोलाहलमिषादाक्रन्दस्तत्र निर्ममे ॥ १८५ ॥
म्लानिमासादयामास चक्रवाकी वराकिका । दूरीभूतप्रियतमा ललनेव रजस्वला ॥ १८६ ॥
पद्मिनी कलयामास मुखसंकोचमुच्चकैः । पतिव्रताव्रतेवास्तंगते पत्यावहर्पतौ ॥ १८७ ॥
तर्णकोत्कंठितास्तूर्णं गावो व्यावृतुर्वनात् । वायव्यस्नानसंप्राप्तिमुदितैर्वन्दिता द्विजैः ॥ १८८ ॥
अस्तकाले त्विषामीशो निजं तेजो हविर्भुजे । राजेव युवराजाय राज्यसंपदमार्पयत् ॥ १८९ ॥
नागरीभिः प्रतिपदमदीप्यंत प्रदीपकाः । दिवोऽवतीर्णनक्षत्रश्रेणिश्रीपरिमोषिणः ॥ १९० ॥
अस्तमीयुषि चंडांशौ शशिन्यनुदिते सति । तमो जृंभितुमारेभे छलच्छेकाः खलाः खलु ॥ १९१ ॥

१ परिणीतवान् । २ आकाशाटव्यां यच्चंक्रमणं तस्य श्रमात् । ३ प्रतीच्या वस्त्राणि सूर्योऽपजह्रे । ४ प्रतीच्याम् । ५ पतिव्रताया व्रतं यस्या सेव । ६ सूर्ये । ७ वत्सेषूत्कंठिताः । ८ प्रतिनिववृतिरे ।

किमंजनाद्रेश्चूर्णेन पूर्णमेतदथाञ्जनैः । रोदसी भांडमन्वितस्तमःपूर्णमलक्ष्यत ॥ २९२ ॥
न हि स्थलं न हि जलं न दिशो न नभो न भूः । तदानीं किं बहूक्तेन स्वहस्तोऽपि न लक्ष्यते॥२९३॥
तारा व्योमन्यसिश्यामे तमोलिप्ते विशेषतः । चिरं व्यडंबयन् धूतकरिन्नस्थवराटिकाः ॥ २९४ ॥
व्यक्तोडु कलयामास कज्जलश्यामलं नभः । उत्पुंडरीककालिंदीह्रदसब्रह्मचारिताम् ॥ २९५ ॥
एकाकारकरे विष्वक् तमःपूरे प्रसर्पति । विंभ्वं विश्वमनालोकमभूत्पातालसन्निभम् ॥ २९६ ॥
स्फीतेऽन्धकारे निःशंकाः कामिसंघट्टनोत्सुकाः । स्वैरं जजृंभिरे दूत्यो ह्रदे शफरिका इव ॥ २९७ ॥
आजानूत्क्षिप्तमञ्जीरास्तमालश्यामलांशुकाः । मृगनाभिविलिप्ताङ्ग्योऽभिसस्रुरभिसारिकाः ॥ २९८ ॥
अथोदयाद्रिप्रासादे सुवर्णकलशोपमः । करांकुरमहाकन्द उदियाय निशाकरः ॥ २९९ ॥
नैसर्गिकेण वैरेण लक्ष्मव्याजात्सहेन्दुना । नियुद्धमिव तन्वानमन्धकारमलक्ष्यत ॥ ३०० ॥
विपुले गोकुल इव क्रीडन्ति स्म नभस्तले । स्वैरं गोष्विव तारासु गवेन्द्र इव चन्द्रमाः ॥ ३०१ ॥
व्यक्तमन्तःस्फुरल्लक्ष्मा मृगलक्ष्मा व्यराजत । मृगनाभिद्रवाधाररौप्यभाजनसन्निभः ॥ ३०२ ॥
स्खल्यमाना विरहिभिरन्तरा दत्तपाणिभिः । प्रसस्रुः शीतगुकराः शरा इव मनोभुवः ॥ ३०३ ॥
चिरभुक्तामपि प्रोज्झ्य पद्मिनीं प्राप्तदुर्दशाम् । भृंगाः कुमुद्वतीं भेजुर्धिगहो नीचसौहृदम् ॥ ३०४ ॥

---

१ खङ्गवच्छ्यामे । २ धूतपट्टस्थितकपर्दिकाः । ३ स्पष्टनक्षत्रम् । ४ अधिकानि पुंडरीकाणि यस्मिंस्तस्य कालिंदीह्रदस्य समानताम् । ५ समग्रम् । ६ जानुपर्यंतं धारितानि मजीराणि याभिस्ताः । ७ कलंकमिषात् । ८ बाहुयुद्धम् । ९ मृगमदस्य श्यामत्वात्कलंकसादृश्यं रौप्यपात्रस्य च श्वैत्याच्चद्रसादृश्यम् । १० शीता गावः किरणा यस्य तस्य चंद्रस्य कराः किरणाः ।

शेफाल्याः कुसुमानीन्दुः करपातैरपातयत् । प्रियमित्रस्य पुंष्पेषोः सज्जीकर्तुमिषूनिव ॥ ३०५ ॥
प्रवर्षयन्निन्दुकान्तान् कुर्वाणः सरसीर्नवाः । स्वानि शीतरुचिः पूर्त्तकीर्तनानीव निर्ममे ॥ ३०६ ॥
कुलटानामटन्तीनां पद्मिनीनामिवोच्चकैः । विततान मुखम्लानिं सा ज्योत्स्ना धौतदिङ्मुखा ॥ ३०७ ॥
समं च लंकासुंदर्या पवनञ्जयनन्दनः । रममाणो निराशंकस्तामतीयाय यामिनीम् ॥ ३०८ ॥
अथोदियाय किरणैः स्वर्णसूत्रसहोदरैः । मार्तण्डो मण्डयन्नाशा प्रियां प्राचीनबर्हिषः ॥ ३०९ ॥
अव्याहतं निष्पतन्त्यो रुचयश्चण्डरोचिषः । कुमुद्वतीषु स्मेरासु ययुः प्रस्वापनास्त्रताम् ॥ ३१० ॥
त्यक्तानि मौलिमाल्यानि प्रबुद्धाभिः पुरंध्रिभिः । केशपाशवियोगेनालिनादैररुदन्निव ॥ ३११ ॥
रात्रिजागरणायासकषायितविलोचनाः । निवर्तन्ते स्म गणिकाः कामुकानां निकेतनात् ॥ ३१२ ॥
स्मेरपंकजकोशेभ्यो निर्ययुर्भृंगराजयः । खंडिता मुखपद्मेभ्य इव निःश्वासवल्लयः ॥ ३१३ ॥
उदितादित्यतेजोभिर्लुठितद्युतिवैभवः । अभवद्रजनीजानिर्लूतातन्तुपुटोपमः ॥ ३१४ ॥
यद्ब्रह्मांडेऽपि मातं न तत्तमश्चंडरोचिषा । मेघश्रंमानिलेनेव निर्धूय क्वाप्यनीयत ॥ ३१५ ॥
रात्रेरिवानुबद्धाया निद्राया अपसर्पणात् । स्वस्वकर्माणि निर्मातुं प्रावर्तत पुरीजनः ॥ ३१६ ॥
तदा च हनुमाँल्लंकासुंदरीं सुन्दरोक्तिभिः । आपृच्छ्य प्राविशल्लंकानगरीं गुरुविक्रमः ॥ ३१७ ॥

---

१ कामस्य । २ पीतत्वात् सुवर्णरज्जुसदृशैः । ३ इन्द्रस्य प्रियां दिश पूर्वाम् । ४ कुटुंबिनीभिः स्त्रीभिः । ५ या स्वपतिमन्यया सह रममाणं दृष्ट्वेर्ष्यां करोति सा खडितेत्युच्यते । ६ लूता ऊर्णनाभः तस्य मुखान्निर्गतानां तंतूना पुटः पात्रं तत्सदृशः ।

बिन्नीषणस्य सदनं द्विषद्भटबिन्नीषणः । जगाम स्थामधामाथ पवनंजयनंदनः ॥ ३१८ ॥
बिन्नीषणेन सत्कृत्य पृष्टश्चागमकारणम् । अवोचदञ्जनासूनुः सारगंन्नीरगीरदः ॥ ३१९ ॥
यज्ज्ञाता रावणस्यासि शुन्नोदर्कं विचिंत्य तत् । रामपत्नीं हृतां सीतां सतीं मोचय रावणात् ॥ ३२० ॥
दुःखाकृदिहलोकेऽपि परलोके न केवलम् । काकुत्स्थपत्नीहरणं त्वद्भ्रातुर्बलिनोऽपि हि ॥ ३२१ ॥
बिन्नीषणोऽप्यन्नाषिष्ट साधूक्तं हनुमंस्त्वया । सीतां मोचयितुं पूर्वमप्युक्तः स्वाग्रजो मया ॥ ३२२ ॥
न्नूयोऽपि हि सनिर्बन्धं प्रार्थयिष्ये स्वबान्धवम् । सीतां यदि पुनर्मुञ्चत्येष संप्रति मद्गिरा ॥ ३२३ ॥
एवं बिन्नीषणेनोक्ते समुत्पत्यांजनासुतः । जगाम देवरमणोद्याने वैदेह्यधिष्ठिते ॥ ३२४ ॥
तत्राशोकतरोर्मूले कपोललुलितालकाम् । संतताश्रुपयोधारापल्वलीकृतन्नूतलाम् ॥ ३२५ ॥
प्रम्लानवदनांन्नोजां हिमार्तां पद्मिनीमिव । अत्यंतक्षामवपुषं प्रथमेन्दुकलामिव ॥ ३२६ ॥
उष्णनिश्वाससंतापविधुराधरपल्लवाम् । ध्यायंतीं राम रामेति निःस्पन्दां योगिनीमिव ॥ ३२७ ॥
मलिनीन्नूतवसनां निरपेक्षां वपुष्यपि । ददर्श देवीं वैदेहीं पवनंजयनन्दनः ॥ ३२८ ॥
॥ चतुर्निः कलापकम् ॥
एवं च दध्यौ हनुमानहो सीता महासती । अस्या दर्शनमात्रेण पवित्रीन्नूयते जनैः ॥ ३२९ ॥
अस्याश्च विरहे रामः स्थाने स खलु खिद्यते । रूपवच्छीलवच्चेदृक्कलत्रं यस्य पावनम् ॥ ३३० ॥

---

१ शत्रुभटभयंकरः । २ शुभपरिणामम् । ३ निश्चलाम् । ४ स्थान इति युक्तार्थेऽव्ययम् ।

द्विधापि हि वराकोऽयं पतिष्यत्येव रावणः। रघूद्वहप्रतापेन स्वपापेन च भूयसा ॥ ३३१ ॥
ततो विद्यातिरोभूतः सीतोत्संगेऽङ्गुलीयकम्। हनुमान् पातयामास तद्दृष्ट्वा मुमुदे च सा ॥ ३३२ ॥
तदैव गत्वा त्रिजटा दशकंठं व्यजिज्ञपत्। इयत्कालं विषण्णासीत् सानंदा त्वद्य जानकी ॥ ३३३ ॥
मन्ये विस्मृतरामेयं रिरंसुर्मयि संप्रति। तज्ज्ञात्वा बोध्यतामेवमूचे मन्दोदरीं स तु ॥ ३३४ ॥
ततश्च पत्युर्दौत्येन पुनर्मन्दोदरी ययौ। प्रलोभनकृते सीतां विनीता सेत्यवोचत ॥ ३३५ ॥
अद्वैतैश्वर्यसौन्दर्यवर्यस्तावद्दशाननः। त्वमप्यप्रतिरूपैव रूपलावण्यसंपदा ॥ ३३६ ॥
यद्यप्यज्ञेन दैवेन युवयोरुभयोरपि। न व्यधाय्युचितो योगस्तथापि ह्यस्तु संप्रति ॥ ३३७ ॥
उपेत्य भजनीयं तं भजन्तं भज जानकि। अहमन्याश्च तत्पत्न्यस्त्वदाज्ञां सुभ्रु बिभ्रतु ॥ ३३८ ॥
सीताप्यवोचदाः पापे पतिदौत्यविधायिनि। त्वद्भर्तुरिव वीक्षेत मुखं दुर्मुखि कस्तव ॥ ३३९ ॥
रामस्य पार्श्वे मां विद्धि सौमित्रिमिह चागतम्। खरादीनिव हन्तुं द्राग्धवं तव सबान्धवम् ॥ ३४० ॥
उत्तिष्ठोत्तिष्ठ पापिष्ठे वच्मि नातः परं त्वया। सीतया तर्जितैवं सा सकोपा प्रययौ ततः ॥ ३४१ ॥
अथाविर्भूय हनुमान् सीतां नत्वा कृताञ्जलिः। इत्यूचे देवि जयति दिष्ट्या रामः सलक्ष्मणः ॥ ३४२ ॥
त्वत्प्रवृत्तिकृते रामेणादिष्टोऽहमिहागमम्। मयि तत्र गते राम इहैष्यति रिपुच्छिदे ॥ ३४३ ॥
बाष्पायितेक्षणा सीतापृच्छत्त्वमसि को ननु। दुर्लंघ्यमर्णवं चैतं कथं लंघितवानसि ॥ ३४४ ॥
कच्चित्प्राणिति मे प्राणनाथः सौमित्रिणा सह। क्व वा स्थाने त्वया दृष्टः कालं नयति वा कथम्॥३४५॥

१ विस्मृतो रामो यया सा। २ पतिम्। ३ त्वया सह। ४ समुद्रम्।

आख्यच्च हनुमानस्मि पवनाञ्जनयोः सुतः । विद्यया व्योमयानेन लंघितो जलधिर्मया ॥ ३४६ ॥
समस्तवानराधीशं सुग्रीवं विद्विषद्धात् । पत्तीकृत्याधिकिष्किन्धमस्ति रामः सलक्ष्मणः ॥ ३४७ ॥
रामोऽस्ति त्वद्वियोगेन तप्यमानो दिवानिशम् । गिरिर्दवानलेनेव तापयन्नपरानपि ॥ ३४८ ॥
गवेव वत्सो रहितस्त्वया स्वामिनि लक्ष्मणः । न जातु लभते सौख्यं शून्याः पश्यन्दिशोऽनिशम् ३४९
क्षणं सशोकौ सक्रोधौ क्षणं ते पतिदेवरौ । सुग्रीवेणाश्वास्यमानावपि न प्राप्नुतः सुखम् ॥ ३५० ॥
भामंडलो विराधश्च महेन्द्राद्याश्च खेचराः । पत्तीभूयोपासते तौ शक्रेशानाविवामराः ॥ ३५१ ॥
तव प्रवृत्तिमानेतुमहं सुग्रीवदर्शितः । रामेण प्रेषितो देवि समर्प्य स्वांगुलीयकम् ॥ ३५२ ॥
चूडामणिरभिज्ञानं त्वत्त आनायितो मया । तद्दर्शनेन मामत्रायातं प्रत्येष्यति प्रभुः ॥ ३५३ ॥
हनुमदुपरोधेन रामोदन्तमुदा च सा । एकविंशत्यहोरात्रप्रांते व्यधित भोजनम् ॥ ३५४ ॥
प्रोवाचैवमभिज्ञानं चूडामणिमिमं मम । गृहीत्वा वत्स गच्छाशु तिष्ठतः स्यादुपद्रवः ॥ ३५५ ॥
अत्र त्वामागतं ज्ञात्वा क्रूरकर्मैष राक्षसः । हन्तुमन्तकवन्नूनं समुपस्थास्यते बली ॥ ३५६ ॥
स्मित्वा सप्रश्रयं सोऽपि जगादेति कृताञ्जलिः । त्वं मातर्मयि वात्सल्यादेवं वदसि कातरा ॥ ३५७ ॥
रामलक्ष्मणयोः पत्तिस्त्रिजगज्जैत्रयोरहम् । तपस्वी रावणः कोऽयं ससैन्योऽपि ममाग्रतः ॥ ३५८ ॥
त्वामपि स्कंधमारोप्य स्वामिनि स्वामिनोऽन्तिके । नयामि परिभूयैनं ससैन्यमपि रावणम् ॥ ३५९ ॥
स्मित्वा सीताप्युवाचैवं न हि ह्रेपयसि स्वकम् । रामभद्रं प्रभुं भद्र वदन्नेवं ससौष्ठवम् ॥ ३६० ॥

१ तव तिष्ठतः सतः ।

त्वयि संज्ञाप्यते सर्वं पदातौ रामशार्ङ्गिणोः । परन्तु परपुंस्पर्शो न मेऽर्हति मनागपि ॥ ३६१ ॥
तज्जह शीघ्रमेवैवं सति सर्वं कृतं त्वया । गते त्वयि यदुद्योगमार्यपुत्रः करिष्यति ॥ ३६२ ॥
अथेत्थं स्माह हनुमानेष गच्छाम्यहं परम् । रक्षसां दर्शयिष्यामि किंचिद्विक्रमचापलम् ॥ ३६३ ॥
जिंतकाशी[1] दशास्योऽयं परवीर्यं न मन्यते । जानातु रामपत्तीयपत्तेरपि पराक्रमम् ॥ ३६४ ॥
आमेत्युक्त्वार्पयत्तस्य सीता चूडामणिं निजम् । नत्वा सोऽपि चचालोच्चैः पादन्यासैर्धुवन् धराम् ३६५
तदेव देवरमणोद्यानं भंक्तुं प्रचक्रमे । स वनं वनद्विपवत् प्रसरत्करविक्रमः ॥ ३६६ ॥
रक्ताशोकेषु निःशूको बकुलद्रुष्वनाकुलः । सहकारेष्वकारुण्यो निष्कंपश्चंपकेष्वपि ॥ ३६७ ॥
अमन्दरोषो मन्दारेष्वदयः कदलीष्वपि । अन्यद्रुष्वपि रम्येषु भंगलीलां चकार सः ॥ ३६८ ॥
तदुद्याने चतुर्द्वारि द्वारपालाः क्षपाचराः[2] । अधावंत निहंतुं तं तदा मुद्गरपाणयः ॥ ३६९ ॥
हनूमति स्खलंति स्म तेषां प्रहरणानि तु । महांभोनिधिकल्लोला इव तीरमहीधरे ॥ ३७० ॥
पावनिः[3] कुपितस्तेभ्यस्तैरेवोद्यानपादपैः । प्रजहार निरायासः सर्वमस्त्रं बलीयसाम् ॥ ३७१ ॥
मंक्षु वृक्षानिवाभांक्षीत्तानारक्षक्षपाचरान् । क्षुद्रानैक्ष्वाकुपत्तिः स समीरण इवास्खलन् ॥ ३७२ ॥
हनूमता क्रियमाणमुद्यानारक्षसंक्षयम् । गत्वाचचक्षिरे केचित्क्षपाचरपतेस्तदा ॥ ३७३ ॥
ततः सह बलैरक्षकुमारं राक्षसेश्वरः । समादिक्षद्धनुमतो घातनायारिघातनम् ॥ ३७४ ॥
आक्षिपन्तं रणायाक्षं बभाषे पावनंजयिः । भोजनादौ फलमिव रणादौ मे त्वमापतः ॥ ३७५ ॥

१ जितेन जयेन काशते शोभत इति जीतकाशी । २ निशाचराः । ३ हनुमान् ।

मुधा कपे गर्जसीति तर्जयन् रावणात्मजः । ववर्ष विशिखै[1]स्तीक्ष्णैरक्षणोः प्रसररोधिभिः ॥ २७६ ॥

[2]श्रीशैलोऽपीषुवर्षेण सप्रकर्षेण रावणिम् । विदधे वारिभिर्दीपमुद्वेल इव वारिधिः ॥ २७७ ॥

शस्त्राशस्त्रि चिरं कृत्वा कौतुकादञ्जनासुतः । [3]रणपारंपरिप्रेप्सुरक्षं पशुमिवावधीत् ॥ २७८ ॥

ततो भ्रातृवधामर्षादाययौ द्रुतमिन्द्रजित् । मारुते तिष्ठ तिष्ठेति ससौष्ठवमुदीरयन् ॥ २७९ ॥

द्वयोरपि महाबाह्वोः कल्पान्त इव दारुणः । विश्वविक्षोभकरणश्चिरं प्रववृते रणः ॥ २८० ॥

वर्षन्तौ वारिधारा[4]वन्नीरंध्राः शस्त्र[5]धोरणीः । व्योमस्थौ तावलक्ष्येतां पुष्करावर्तकाविव ॥ २८१ ॥

अन्तरीक्षं तयोरस्त्रैरास्फलद्भिर्निरंतरैः । क्षणादजनि दुःप्रेक्ष्यं यादोभिरिव वारिधिः ॥ २८२ ॥

मुमोच यावन्त्यस्त्राणि दुर्वारो रावणात्मजः । तदनेकगुणैरस्त्रैस्तानि चिच्छेद मारुतिः ॥ २८३ ॥

हनूमदस्त्रक्षुण्णाङ्गाः सर्वेऽपीन्द्रजितो भटाः । अनश्यन् [6]रक्तह्रदिनीपर्वता इव जंगमाः ॥ २८४ ॥

दृष्ट्वा नष्टं निजं सैन्यं स्वं च मोघी[7]कृतायुधम् । अमुंचन्नागपाशास्त्रं श्रीशैलाय दशास्यसूः ॥ २८५ ॥

नागपाशैर्दृढीयोभिस्तदैवापादमस्तकम् । अबन्धि चन्दन इवाभितः पवननन्दनः ॥ २८६ ॥

स नागपाशबन्धोऽपि [8]समसाहि हनूमता । कौतुकाद्धि क्षणं दत्ते [9]शक्तो जयमपि द्विषाम् ॥ २८७ ॥

हृष्टेनेन्द्रजिता निन्ये हनूमानुपरावणम् । निरीक्ष्यमाणः फुल्लाक्षै राक्षसैर्जयसाक्षिभिः ॥ २८८ ॥

---

१ बाणैः । २ हनुमान् । ३ युद्धस्य पारं प्राप्तुमिच्छुः । ४ अन्तररहिताः । ५ शस्त्रपरंपराः शस्त्रसमूहानिति यावत् । ६ शोणितनदीनां पर्वताः । ७ विफलीकृतान्यायुधानि यस्य तम् । ८ असह्यत । ९ समर्थः पुरुषः कौतुकात् क्षणं यावत् शत्रूणां जयमपि दत्ते पराजयं तु दत्त एव ।

मारुतिं रावणः स्माह दुर्मते किं कृतं त्वया । आजन्म मामकीनेनाश्रितौ यत्तौ तपस्विनौ ॥ ३८९ ॥
वनेवासौ फलाहारौ मलिनौ मलिनांशुकौ । किराताविव तौ तुष्टौ तुभ्यं कां दास्यतः श्रियम् ॥ ३९० ॥
तत्रापि मंदबुद्धे त्वं तद्वाचा किमिहागमः । येनेहायातमात्रोऽपि प्राप्तोऽसि प्राणसंशयम् ॥ ३९१ ॥
दक्षौ भूचारिणौ तौ तु यत्ताभ्यां कारितोऽस्यदः । अंगारान् परहस्तेन कर्षयंति हि धूर्तकाः ॥ ३९२ ॥
यत्सेवकवरो मे त्वमद्य दूतः परस्य च । तदवध्योऽसि रे शिक्षामात्राय तु विडंब्यसे ॥ ३९३ ॥
हनुमानप्युवाचैवं कदाहं तव सेवकः । कदा ममाभूस्त्वं स्वामी वदन्नेवं न लज्जसे ॥ ३९४ ॥
एकदा युधि सामन्तो बहुंमन्यः खरः स ते । त्वन्मैत्र्या वरुणबंधान्मत्पित्रा मोचितः पुरा ॥ ३९५ ॥
साहाय्यार्थं त्वयाहूतोऽहमप्यभ्यागमं पुरा । रणे वरुणपुत्रेभ्यस्त्वामरक्षं च संकटे ॥ ३९६ ॥
साहाय्यस्य न योग्योऽसि सांप्रतं पापतत्परः । संभाषोऽपि हि पापाय परस्त्रीहारिणस्तव ॥ ३९७ ॥
त्वदीये तं न पश्यामि यो हि त्वां त्रास्यतेऽधुना । एकस्मादपि सौमित्रेर्दूरे रामस्तदग्रजः ॥ ३९८ ॥
तद्गिरा कुपितो भालाहितभ्रूकुटिभीषणः । दशाननो दशन्नोष्ठं दशनैरिदमभ्यधात् ॥ ३९९ ॥
मदरी यच्छ्रितोऽसि त्वं मां चारीकृतवानसि । तन्नूनं मर्तुकामोऽसि वैराग्यं तत्र किं तव ॥ ४०० ॥
यथा कुष्टविशीर्णाङ्गं मुमूर्षुमपि कोऽपि न । हत्याभयान्निहंत्येवं हन्यात् को दूतमप्यरे ॥ ४०१ ॥
आरोप्य रासभे पंचशिखीकृत्य च संप्रति । अन्तर्लंकं प्रतिपथं भ्राम्यसे लोकवेष्टितः ॥ ४०२ ॥
इत्युक्तो मारुतिः क्रुद्धोऽत्रोटयत् पाशपन्नगान् । बद्धो हि नलिनीनालैः कियत्तिष्ठति कुंजरः ॥ ४०३ ॥
तस्हिंदरू इवोत्पत्य किरीटं राक्षसप्रभोः । कणशश्चूर्णयामास पादघातेन मारुतिः ॥ ४०४ ॥

१ वने वासो ययोस्तावलुक्समासः । २ आलापोऽपि । ३ तव परिवारे । ४ मामशत्रु शत्रु कृतवान् च्विः ।

हन्यतां गृह्यतां चैष इति जल्पति रावणे । अनाथामिव सोऽत्रांक्षीत्तत्पुरीं पाददर्दरैः ॥ ४०५ ॥
क्रीडां कृत्वैवमुत्पत्य सुपर्ण इव पावनिः । राममेत्यानमत्सीताचूडारत्नं समर्पयन् ॥ ४०६ ॥
सीताचूडामणिं तं तु साक्षात्सीतामिवागताम् । आरोपयामास हृदि स्पृशन् रामो मुहुर्मुहुः ॥ ४०७ ॥
आलिंग्य दाशरथिना सुतवत्प्रसादात् पृष्टः शशंस दशवक्त्रविमाननां ताम् ।
सीताप्रवृत्तिमखिलां हनुमान् यथावदाकर्ण्यमानभुजविक्रमसंपदन्यैः ॥ ४०८ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि
सीताप्रवृत्त्यानयनो नाम षष्ठः सर्गः ।



१ पादावेव दर्दराः पर्वतास्तैः । २ गरुडः । ३ रावणस्यापमानपर्यन्ताम् ।

## ॥ अथ सप्तमः सर्गः ॥

अथ रामः ससौमित्रिः सुग्रीवाद्यैर्वृतो भटैः । लंकाविजययात्रायै प्रतस्थे गगनाध्वना ॥ १ ॥
भामंडलो नलो नीलो महेन्द्रः पावनंजयिः । विराधश्च सुषेणश्च जांबवानंगदोऽपि च ॥ २ ॥
महाविद्याधराधीशाः कोटिशोऽन्येऽपि तत्क्षणम् । चेलू रामं समावृत्य स्वसैन्यैश्छन्नदिङ्मुखाः ॥ ३ ॥
॥ युग्मम् ॥

विद्याधरैराहतानि यात्रातूर्याण्यनेकशः । नादैरत्यंतगंभीरैर्बिभरांचक्रुरंबरम् ॥ ४ ॥
विमानैः स्यन्दनैरश्वैर्गजैरन्यैश्च वाहनैः । खे जग्मुः खेचराः स्वामिकार्यसिद्धावहंयवः ॥ ५ ॥
उपर्युदन्वतो गच्छन् ससैन्यो राघवः क्षणात् । वेलंधरपुरं प्राप वेलन्धरमहीधरे ॥ ६ ॥
समुद्रसेतू राजानौ समुद्राविव दुर्धरौ । तत्र रामाग्रसैन्येनारेभाते योद्धुमुद्धतौ ॥ ७ ॥
नलः समुद्रं सेतुं च नीलोऽबध्नान्महाभुजः । उपराममनैषीच्च मेनीषी स्वामिकर्मणि ॥ ८ ॥
काकुत्स्थः स्थापयामास तथैव पुनरेव तौ । रिपावपि पराभूते महांतो हि कृपालवः ॥ ९ ॥
समुद्रोऽपि हि रूपाभिरामा रामानुजन्मने । रामामतल्लिकास्तिस्रः प्रददौ निजकन्यकाः ॥ १० ॥
उषित्वा तां निशां सेतुसमुद्रानुगतः प्रगे । क्षणादासादयामास सुवेलाद्रिं रघूद्वहः ॥ ११ ॥
सुवेलं नाम राजानं जित्वा तत्रापि दुर्जयम् । उवासैकां निशां रामः प्रातर्भूयश्चचाल च ॥ १२ ॥

---

१ गर्विष्ठाः । २ मनीषा बुद्धिरस्यास्तीति तथा । ३ रामासु स्त्रीषु मतल्लिकाः श्रेष्ठाः ।

उपलंकमथो हंसद्वीपे हंसरथं नृपम् । जित्वा तस्थौ कृतावासस्तत्रैव रघुपुंगवः ॥ १३ ॥
आसन्नस्थेऽथ काकुत्स्थे मीनस्थित इवार्कजे[1] । लंका क्षोभमुपेयाय विष्वक् प्रलयशंकिनी ॥ १४ ॥
संनह्यंति स्म युद्धाय सामंता रावणस्य ते । हस्तप्रहस्तमारीचसारणाद्याः सहस्रशः ॥ १५ ॥
रावणो रणतूर्याणि दारुणान्यथ कोटिशः । किंकरैस्ताडयामास द्विषत्ताडनपंडितः ॥ १६ ॥
तदा दशास्यमभ्येत्य नत्वावोचद्विभीषणः । क्षणं प्रसीद विमृश शुभोदर्कं वचो मम ॥ १७ ॥
अविमृश्य पुरा चक्रे लोकद्वितयघातकम् । परदारापहरणं लज्जितं तेन ते कुलम् ॥ १८ ॥
निजभार्यां समानेतुं काकुत्स्थोऽयमुपस्थितः । आतिथ्यमिदमेवास्मै तत्कलत्रार्पणं कुरु ॥ १९ ॥
सीतां त्वत्तोऽन्यथाकारमपि रामो ग्रहीष्यति । निग्रहीष्यति चाशेषं त्वया सह कुलं तव ॥ २० ॥
दूरे स्तां रामसौमित्री तौ साहसखरांतकौ । तत्पत्तिरेको हनुमान् दृष्टो देवेन किं न हि ॥ २१ ॥
इन्द्रश्रियोऽधिका श्रीस्ते तां सीताकारणेन मा । परिहार्षीर्भवेदेवमुभयभ्रष्टता तव ॥ २२ ॥
अथेन्द्रजिदुवाचैवं त्वया ह्याजन्मभीरुणा । दूषितं नः कुलं सर्वं नासि तातस्य सोदरः ॥ २३ ॥
इन्द्रस्यापि विजेतारं नेतारं सर्वसंपदाम् । तातं संभावयन्नेवं नूनं मूर्ख मुमूर्षसि ॥ २४ ॥
पुरापि छलितस्तातस्त्वया ह्यनृतभाषिणा । प्रतिज्ञाय दशरथवधं यदकृथा न हि ॥ २५ ॥
इहायातं दाशरथिं तातादक्षितुमिच्छसि । दर्शयन् भयमुत्पाद्य भूचरेभ्योऽपि निस्त्रप ॥ २६ ॥
तन्मन्ये रामगृह्योऽसि[2] मंत्रेऽप्यधिकरोषि न । आप्तेन मंत्रिणा मंत्रः शुभोदर्को हि भूभुजाम् ॥ २७ ॥

---

१ शनौ मीनराशिस्थिते । २ रामपक्षपाती ।

बिभीषणोऽप्युवाचैवं शत्रुगृह्यो न खल्वहम् । पुत्ररूपस्तु शत्रुस्त्वमुत्पन्नः कुलनाशकृत् ॥ २८ ॥
अयमैश्वर्यकामान्ध्यामन्धस्तावत् पिता तव । जन्मान्ध इव रे मुग्ध दुग्धास्य त्वं तु वेत्सि किम् ॥ २९ ॥
राजन्ननेन पुत्रेण चरित्रेण निजेन च । पतिष्यस्यचिरादेव ताम्यामि त्वत्कृते मुधा ॥ ३० ॥
रावणोऽप्यधिकं क्रुद्धः खड्गमाकृष्य भीषणम् । बिभीषणवधायोच्चैरुदस्थाद्दैवदूषितः ॥ ३१ ॥
बिभीषणोऽपि भ्रकुटीभीषणः स्तंभमायतम् । उत्पाट्य गजवद्योद्धुमुत्तस्थावभिरावणम् ॥ ३२ ॥
कुंभकर्णेन्द्रजिद्भ्यां तौ पतित्वा द्रुतमंतरा । युद्धान्निषिध्य नीतौ स्वं स्थानं शालामिव द्विपौ ॥ ३३ ॥
अरे निर्याहि मत्पुर्या आश्रयाशोऽसि वह्निवत् । इत्युक्तो रावणेनागाद्रामान्तिके बिभीषणः ॥ ३४ ॥
रक्षोविद्याधराणां चाक्षौहिण्यस्त्रिंशदुत्कटाः । हित्वा लंकाधिपं सद्योऽप्यनुजग्मुर्बिभीषणम् ॥ ३५ ॥
आपतंतं च तं प्रेक्ष्य सुग्रीवाद्याः प्रचुक्षुभुः । यथा तथा हि विश्वासः शाकिन्यामिव न द्विषि ॥ ३६ ॥
आदौ स पुरुषं प्रेष्य रामाय स्वमजिज्ञपत् । विश्वासपात्रसुग्रीवमुखं रामोऽप्युदैक्षत ॥ ३७ ॥
सुग्रीवोऽप्यब्रवीदेते यद्यप्याजन्ममायिनः । प्रकृत्या राक्षसाः क्षुद्रास्तथाप्यायात्वसाविह ॥ ३८ ॥
ज्ञास्यामः प्रेषणैरेव भावमस्य शुभाशुभम् । दृष्टभावानुरूपं च करिष्याम इह प्रभो ॥ ३९ ॥
तदभिज्ञोऽभ्यधादेवं विशालो नाम खेचरः । महात्मा धार्मिकश्चैष रक्षःस्वेको बिभीषणः ॥ ४० ॥
सीतामोक्षाय जल्पंश्चानल्परोषेण बन्धुना । निर्वासितः शरण्यं त्वामागान्नैवैतदन्यथा ॥ ४१ ॥
श्रुत्वेति रामो द्वाःस्थेन बिभीषणमवीविशत् । पादयोः क्षिप्तमूर्धानं परिरेभे च संभ्रमात् ॥ ४२ ॥

१ क्षीरकंठ । २ आश्रयमश्नाति भक्षयतीति तथा । ३ गूढपुरुषैः ।

बिभीषणोऽप्युवाचैवं हित्वा दुर्नयमग्रजम् । त्वामागतोऽसि भक्तं मां तत्सुग्रीववदादिश ॥ ४३ ॥
लंकाराज्यं तदा तस्मै प्रत्यपद्यत राघवः । न मुधा भवति क्वापि प्रणिपातो महात्मसु ॥ ४४ ॥
हंसद्वीपे दिनान्यष्टावतिवाह्य रघूद्वहः । कल्पांतवातवल्लंकां प्रत्यचालीच्चमूवृतः ॥ ४५ ॥
भम्बा रुद्ध्वा पृथुत्वेन पृथ्व्या विंशतियोजनीम् । रणाय सज्जो काकुत्स्थोऽवतस्थे स्थेमपर्वतः ॥ ४६ ॥
रामसेनाकलकलो वेलाध्वनिरिवोदधेः । लंकां बधिरयामास स्फुटद्ब्रह्मांडभूरिव ॥ ४७ ॥
दशकन्धरसेनान्योऽनन्यसाधारणौजसः । सद्यः संवर्मयामासुः प्रहस्ताद्या उदायुधाः ॥ ४८ ॥
केचिन्मतंगजोद्ग्राह्यैरपरे वाहवाहनैः । शार्दूलवाह्यैरन्ये तु खरवाह्यै रथैः परे ॥ ४९ ॥
कुबेरवन्नरैः केचिन्मेषैः केचित्तु वह्निवत् । यमवन्महिषैः केचित्केचिद्रेवन्तवद्धयैः ॥ ५० ॥
विमानैर्देववत्केचित्प्रौढाः समरकर्मणे । उत्पत्य युगपद्वीराः परिवव्रुर्दशाननम् ॥ ५१ ॥
॥ त्रिभिर्विशेषकम् ॥
रोषारुणाक्षः सन्नह्य विविधायुधपूरितम् । अध्यास्त स्यन्दनं रत्नश्रवःप्रथमनंदनः ॥ ५२ ॥
भानुकर्णः शूलपाणिर्दंडपाणिरिवापरः । उपेत्य दशकंठस्य समभूत्पारिपार्श्वकः ॥ ५३ ॥
कुमाराविन्द्रजिन्मेघवाहनावपराविव । दोर्दंडौ दशकंठस्य पार्श्वयोरेत्य तस्थतुः ॥ ५४ ॥
सूनवोऽन्येऽपि दोष्मन्तः सामंताः कोटिशोऽपि च । शुकसारणमारीचमयसुंदादयोऽभ्ययुः ॥ ५५ ॥
अक्षौहिणीनां सहस्रैरसंख्यैः संख्यकर्मठैः । दिशः प्रच्छादयन् पुर्याः प्रचचाल दशाननः ॥ ५६ ॥

१ बलपर्वतः । २ उष्ट्रवाहनैः । ३ अश्वैः । ४ शक्ताः । ५ युद्धचतुरैः ।

शार्दूलकेतवः केचित्केचिच्छरजकेतवः । चेमूरुकेतवः केचित्केचित्करटिकेतवः ॥ ५७ ॥
मयूरकेतवः केचित्केचित्पन्नगकेतवः । मार्जारकेतवः केचित्केचित्कुकुटकेतवः ॥ ५८ ॥
कोदंडपाणयः केचित्केचिन्निस्त्रिंशपाणयः । भुशुंडीपाणयः केचित्केचिन्मुद्गरपाणयः ॥ ५९ ॥
त्रिशूलपाणयः केचित्केचित्परिघपाणयः । कुठारपाणयः केचित्केचिच्च पाशपाणयः ॥ ६० ॥
विपक्षवीरान् पृच्छन्तो नामग्राहं मुहुर्मुहुः । दशास्यवीराश्चतुरं विचेरू रणकर्मणि ॥ ६१ ॥
॥ पंचभिः कुलकम् ॥

वैताढ्यस्येव सैन्यस्य प्रथिम्नाच्छाद्य मेदिनीम् । पंचाशद्योजनान्यस्थाद्रावणो रणकर्मणे ॥ ६२ ॥
स्वनायकान् प्रशंसंतो निन्दन्तः परनायकान् । परस्परं चाक्षिपन्तः कथयन्तो मिथोऽभिधाः ॥ ६३ ॥
अस्त्राण्यस्त्रैर्वादयन्तः करास्फोटपुरःसरम् । रामरावणयोः सैन्या मिमिलुः कांस्यतालवत् ॥ ६४ ॥
॥ युग्मम् ॥

गच्छ गच्छ तिष्ठ तिष्ठ मा भैषीरुत्सृजायुधम् । कुरुष्वायुधमित्याजौ भटानां तत्र वागभूत् ॥ ६५ ॥
शल्यानि शंकवो बाणाश्चक्राणि परिघा गदाः । समुत्पेतुर्द्वयोश्चम्वोर्वनान्तर्विहगा इव ॥ ६६ ॥
खड्गैर्मिथो घातभग्नैर्वेगात् कृत्तैश्च मौलिभिः । उच्छलद्भिरभूर्न्नानाकेतुराङ्हिव खं तदा ॥ ६७ ॥
सुभटा मुद्गराघातैर्लोठयन्तो द्विपान् मुहुः । दंडकन्दुकिनीं क्रीडां तन्वाना इव रेजिरे ॥ ६८ ॥

---

१ शरभोऽष्टापदमृगः स केतौ येषां ते तथा । २ चमूरुर्मृगविशेषः । ३ करटी गजः । ४ नाना केतवो राहवश्च यस्मिंस्तत् ।

कुठारघातैराछिन्ना जटानामपरैर्जटैः । पं[1]चशाखाः पतति स्म शाखाः शाखावतामिव ॥ ६९ ॥
वीराः शिरांसि वीराणां छित्वा भूमौ प्रचिक्षिपुः । बुभुक्षिताय कीनाशा[2]योचितान् कवलानिव ॥ ७० ॥
रक्षसां वानराणां च युद्धे तस्मिन्महौजसाम् । दायादानां धनमिव जयः साध्योऽभवच्चिरम् ॥ ७१ ॥
चिरं प्रवर्तमाने च समरे तत्र वानरैः । बभंजि राक्षसबलं काननवन्महाबलैः ॥ ७२ ॥
भग्ने रक्षोबले हस्तप्रहस्तौ योद्धुमुद्यतौ । वानरैः सह लंकेशजयप्रति[3]भुवौ सदा ॥ ७३ ॥
द्वयोरपि तयोर्युद्धाध्वरदीक्षितयोरथ । संमुखीनावुदस्थातां नलनीलौ महाकपी ॥ ७४ ॥
हस्तो नलश्चादितोऽपि संमुखीनौ महाभुजौ । रथारूढावमिलतां वक्रावक्रग्रहाविव ॥ ७५ ॥
आस्फालयामासतुस्तावधिज्यीकृत्य धन्व[4]नी । ज्यानादेन मिथो युद्धनिमंत्रणपराविव ॥ ७६ ॥
तथा ववृषतुर्बाणांस्तौ द्वावपि परस्परम् । शरशूलैर्यथाभूतां रथौ श्वा[5]विच्छिन्नौ तयोः ॥ ७७ ॥
क्षणं नले क्षणं हस्तेऽभूतां जयपराजयौ । तद्बलांतरमज्ञायि न तत्र निपुणैरपि ॥ ७८ ॥
सभ्यीभूतस्ववीराणामग्रे ह्रीणो नलो बली । अ[6]विह्वलो हस्तशिरः क्षुरप्रेणाच्छिदत्क्रुधा ॥ ७९ ॥
सद्यः प्रहस्तं नीलोऽपि हस्तं नल इवावधीत् । दिवोऽभूत् पुष्पवृष्टिश्चोपरिष्टान्नलनीलयोः ॥ ८० ॥
हस्तप्रहस्तनिधनाद्दशाननबले क्रुधा । मारीचः सिंहजघनः स्वयंभूः सारणः शुकः ॥ ८१ ॥

---

१ हस्तौ पादौ मस्तकं चेति पंचशाखाः । २ यमाय । ३ प्रतिभूः साक्षी । ४ धनुषी । ५ श्वाविच्छल्यकः भाषायां "शाहुडी" इति ख्यातम् । ६ अव्याकुलः ।

चंद्राकोंद्दामबीभत्साः कामाक्षो मकरो ज्वरः । गंभीरः सिंहरथाश्वरथा अन्येऽप्युपासरन् ॥ ७२ ॥
॥ युग्मम् ॥
मेदनांकुरसंतापप्रथिताक्रोशनंदनाः । दुरितानघपुष्पास्त्रविघ्नप्रीतिकरादयः ॥ ७३ ॥
कपयो राक्षसैः सार्धमयुध्यंत पृथक् पृथक् । उत्पतंतः पतंतश्च कुक्कुटैरिव कुक्कुटाः ॥ ७४ ॥
॥ युग्मम् ॥
मारीचरक्षः संतापं नंदनो ज्वरराक्षसम् । उद्दामराक्षसो विघ्नं शुकं दुरितवानरः ॥ ७५ ॥
राक्षसः सिंहजघनः प्रथितं नाम वानरम् । योधयित्वा दृढं जघ्नुर्ययावस्तं च भास्करः ॥ ७६ ॥
॥ युग्मम् ॥
द्वयोरपि हि सैन्यानि रामरावणयोस्ततः । निवृत्त्यास्थुः शोधयंतः स्वान् हतानहतानपि ॥ ७७ ॥
विभातायां[2] विभावर्यां[3] प्रत्यर्कं दानवा इव । प्रति रामबलं रक्षोयोधा योद्धुं ढुढौकिरे ॥ ७८ ॥
मध्येसैन्यं दशास्यो भूमध्ये मेरुरिवाचलः । [4]गजरथ्यरथारूढश्चचाल रणकर्मणे ॥ ७९ ॥
बिभ्राणो विविधान्यस्त्राण्यंतकादपि भीषणः । तत्कालारुणया शत्रून् दृशापि हि दहन्निव ॥ ८० ॥
पश्यन् प्रत्येकमप्यात्मसेनान्यं शतमन्युवत्[5] । मन्यमानस्तृणायारीन् रावणोऽगाद्रणावनिम् ॥ ८१ ॥
॥ युग्मम् ॥

१ रामपक्षीयाणां नामानि । २ प्रभाते । ३ प्रातः सूर्योदयात्प्राक् सूर्यं प्रति दानवा असुरा योद्धुमायांतीति लौकिकशास्त्रे प्रसिद्धम्। ४ गजा रथवोढारो यस्यैतादृश रथमारुढः । ५ इंद्रवत् ।

तेऽपि राघवसेनान्यः सैन्यैः सह महौजसः । वीक्ष्यमाणा दिव्यमरैः समरायोपतस्थिरे ॥ ९२ ॥

सनदीकमिव क्वापि रक्तवारिभिरुच्छ्रितैः । उत्पर्वन्तमिव क्वापि पतितैः कपिकुंजरैः ॥ ९३ ॥

क्वचिच्चोन्मकरमिव मकरास्यै रथच्युतैः । उद्दंतमिव च क्वापि सामिभग्नैर्महारथैः ॥ ९४ ॥

उत्तांकवैः कवंधैश्च नृत्तस्थानमिव क्वचित् । अजायत क्षणेनापि समराजिरभूतलम् ॥ ९५ ॥

॥ त्रिभिर्विशेषकम् ॥

अथ रावणहुंकारप्रेरितै रजनीचरैः । सर्वैः सर्वाभिसारेण कपिसैन्या बभंजिरे ॥ ९६ ॥

क्रुद्धः स्वसैन्यभंगेन सुग्रीवोऽधिज्यकार्मुकः । स्वयं चचाल चलयन्नचलां प्रबलैर्बलैः ॥ ९७ ॥

राजन्निहैव तिष्ठ त्वं ममैवेक्षस्व विक्रमम् । एवं निषिध्य सुग्रीवं हनुमानचलद्युधि ॥ ९८ ॥

हनुमान् राक्षसानीकमनेकानीकदुर्मदम् । दुर्ग्राहमप्यगाहिष्ट महाब्धिमिव मंदरः ॥ ९९ ॥

अथ पर्जन्यवद्गर्जन्नूर्जितं युधि दुर्जयः । अढौकत धनुस्तूणमाली माली हनूमते ॥ १०० ॥

हनुमन्मालिनौ वीरौ धनुष्टंकारकारिणौ । भुजास्फोटकरौ सिंहाविवोद्दामौ विरेजतुः ॥ १०१ ॥

अस्त्रैर्मालिहनूमंतौ प्रजह्लाते परस्परम् । चिच्छेदाते मिथोऽस्त्राणि मिथोऽतर्जयतां च तौ ॥ १०२ ॥

चिरं च युद्ध्वा हनुमान्मालिनं वीर्यशालिनम् । चक्रे निरस्त्रं निस्तोयं ग्रीष्मार्क इव पल्वलम् ॥ १०३ ॥

गच्छ गच्छ जरद्ग्रस्तः किं हतेन त्वया ननु । इति ब्रुवाणं श्रीशैलमेत्य वज्रोदरोऽवदत् ॥ १०४ ॥

अरे रे म्रियसे पाप वदन्नेवं हि कैद्वद । एह्येहि युध्यस्व मया न भवस्येव मा स्म गाः ॥ १०५ ॥

---

१ मकरमुखैः काष्ठमयमकराकृतयो रथे निक्षिप्यंते । २ अर्धभग्नैः । ३ कुत्सितं वदतीति कद्वदस्तत्संबुद्धौ ।

मारुतिस्तद्वचः श्रुत्वा हक्कामिव मृगाधिपः । बूत्कुर्वन्नुर्वहंकार[1]श्छादयामास तं शरैः ॥ १०६ ॥
तद्बाणवृष्टिं निर्धूय शरैर्वज्रोदरोऽपि तम् । तिरयामास मार्तंडं प्रावृट्काल इवांबुदैः ॥ १०७ ॥
अहो वज्रोदरो वीरो योऽलमस्मै हनूमते । अहो वीरः पावनिर्योऽलं वज्रोदररक्षसे ॥ १०८ ॥
एवं गिरो रणक्रीडासदस्यानां दिवौकसाम् । असहिष्णुर्द्विषज्जिष्णुर्हनुमान् मानपर्वतः ॥ १०९ ॥
वर्षन् युगपदस्त्राणि चित्राण्युत्पातमेघवत् । वज्रोदरं तमवधीत्पश्यतामपि रक्षसाम् ॥ ११० ॥
॥ त्रिभिर्विशेषकम् ॥

वज्रोदरवधक्रुद्धो रावणिर्जंबुमाल्यथ । तर्जन्मारुतिमाह्वास्त प्रतिकार[2] इव द्विपम् ॥ १११ ॥
उग्रावपि महामल्लावन्योऽन्यवधकांक्षिणौ । युयुधाते चिरं बाणैः पन्नगैर्वार्तिकौ[3]विव ॥ ११२ ॥
इषुभ्यः प्रतियच्छंतौ द्विगुणद्विगुणानिषून् । परस्परं प्रापतुस्तावधमर्णोत्तमर्णताम् ॥ ११३ ॥
क्रुद्धोऽथ कृत्वा हनुमानरथ्यरथसारथिम् । तं द्विषं ताडयामास मुद्गरेण गरीयसा ॥ ११४ ॥
मूर्छितो जंबुमाल्युर्व्यां निपपातोत्पपात[4] च । रुषा महोदरो रक्षोवीरो वर्षञ्छिलीमुखान् ॥ ११५ ॥
अन्येऽपि राक्षसभटा हनूमंतं जिघांसवः । जात्यश्वान इव क्रोडं[5] वेष्टयामासुरुच्चकैः ॥ ११६ ॥
दोष्णोः केऽपि मुखे केऽपि केऽप्यंघ्र्योर्हृदि केऽपि च । कुक्षौ केऽपि शरैस्तीक्ष्णैर्जघ्निरे ते हनूमता ११७
अन्तर्वणं दव इव मध्येऽम्भोधीव वाडवः । मध्येरक्षोबलं वीरश्चकासामास मारुतिः ॥ ११८ ॥

१ महागर्ववान् । २ हस्तिपकः । ३ गारुडिनौ । ४ जंबुमाली पपात महोदरश्चोत्पपाताभिजगामेति संबंधः । ५ वराहम् ।


॥ ९३ ॥

क्षणादभांक्षीद्रक्षांसि तमांसीव दिवाकरः । महौजसां शिरोरत्नं पवनंजयनंदनः ॥ ११९ ॥
रक्षोभंगेन संक्रुद्धः कुंभकर्णोऽथ शूलभृत् । ईशान इव भूमिष्ठः स्वयं योद्धुमधावत ॥ १२० ॥
कानप्यंघ्रिप्रहारेण मुष्टिघातेन कानपि । कांश्चित्कूर्परघातेन तलघातेन कांश्चन ॥ १२१ ॥
कांश्चिन्मुद्गरघातेन शूलघातेन कांश्चन । कानप्यन्योऽन्यघातेन कुंभकर्णोऽवधीत्कपीन् ॥ १२२ ॥
॥ युग्मम् ॥
कल्पान्तार्णवकल्पं तमापतंतं तरस्विनम् । रावणानुजमालोक्य सुग्रीवः समधावत ॥ १२३ ॥
भामंडलो दधिमुखो महेन्द्रः कुमुदोऽङ्गदः । अपरेऽप्यन्वधावंत प्रदीपन इवोद्यतः ॥ १२४ ॥
दशाननानुजं पंचाननं[3] व्याधा इवारुधन् । वर्षन्तोऽस्त्राणि चित्राणि युगपद्वानरोत्तमाः ॥ १२५ ॥
प्रस्वापनास्त्रं तेपूच्चैः कालरात्रिमिवापराम् । रात्रिंचरवरोऽमुंचदमोघं मुनिवाक्यवत् ॥ १२६ ॥
निद्रायमाणं स्वं सैन्यं दिवा कुमुदखंडवत् । दृष्ट्वा सस्मार सुग्रीवो महाविद्यां प्रबोधिनीम् ॥ १२७ ॥
अरे क्व कुंभकर्णोऽस्तीत्युच्चैस्तुमुलकारिणः । उत्तस्थुर्वानरभटाः खगा इव निशात्यये ॥ १२८ ॥
उपाद्रवन् कुंभकर्णमाकर्णाकृष्टकार्मुकाः । सुग्रीवाधिष्ठिताः सुष्ठुयोधिनः कपिकुंजराः ॥ १२९ ॥
सुग्रीवो दलयामास कुंभकर्णस्य सारथिम् । रथं रथ्यांश्च गदयाऽगदंकारो[4] गदानिव ॥ १३० ॥
भूमिष्ठः कुंभकर्णोऽथ हस्तेनोदस्तमुद्गरः[5] । एकशृंगो गिरिरिव सुग्रीवायाभ्यधावत ॥ १३१ ॥
युद्धार्थं धावतस्तस्यांगवातेन गरीयसा । भूयांसः कपयः पेतुः करिस्पर्शेन वृक्षवत् ॥ १३२ ॥

१ हनुमद्विशेषणम् । २ वलिनम् । ३ सिंहम् । ४ वैद्यो रोगानिव । ५ उदस्त ऊर्ध्वीकृतो मुद्गरो येन सः ।

प्लवंगमैरस्खलितः स्थलैरिव नदीरयः । सुग्रीवरथमाहत्याचूर्णयन्मुद्गरेण सः ॥ १३३ ॥
खे समुत्पत्य सुग्रीवः शिलामेकां महीयसीम् । मुमोच कुंभकर्णाय वज्री[1] वज्रमिवाद्रये ॥ १३४ ॥
कुंभकर्णो मुद्गरेण तां शिलां कणशोऽकरोत् । उत्पातिकीं रजोवृष्टिं कपीनां दर्शयन्निव ॥ १३५ ॥
तडत्तडिति कुर्वाणं तडिद्दंडास्त्रमुत्कटम् । रावणावरजायाथ वालिनोऽवरजोऽमुचत् ॥ १३६ ॥
तडिद्दंडाय चंडाय तस्मै शस्त्राण्यनेकशः । कुंभकर्णः प्रचिक्षेप मोघीभूतानि तानि तु ॥ १३७ ॥
कुंभकर्णः पपातोर्व्यां तडिद्दंडेन ताडितः । जगद्भयंकराकारः कल्पांत इव पर्वतः ॥ १३८ ॥
मूर्छिते भ्रातरि क्रुद्धः स्वयमेव दशाननः । साक्षादिवांतकोऽचालीद्भ्रुकुटीभीषणाननः ॥ १३९ ॥
नत्वेन्द्रजित्तमित्यूचे स्वामिंस्तव पुरो रणे । न यमो वरुणो नापि न कुबेरो न वा हरिः ॥ १४० ॥
तिष्ठंति किं नु प्लवगा एवैते देव तिष्ठ तत् । गत्वैष तान् हनिष्यामि रुष्टो मशकमुष्टिवत् ॥ १४१ ॥
निषिध्यैवं दशग्रीवं मानोद्ग्रीवः[2] स शक्रजित् । आघ्नानः प्रविवेशांतःकपिसैन्यं महाभुजः ॥ १४२ ॥
कासारः [3]कासरस्येव भेकैरापततः सतः । कपिभिर्मुमुचे तस्य समरोर्वी महौजसः ॥ १४३ ॥
स त्रस्यतः कपीनूचे रे रे तिष्ठत वानराः । अयुध्यमानान्नो हन्मि रावणस्यास्मि नंदनः ॥ १४४ ॥
क्व मारुतिः क्व सुग्रीवस्ताभ्यामप्यथवा कृतम् । क्व नु तौ रामसौमित्री [4]अन्यमित्रीयमानिनौ ॥ १४५ ॥
इति ब्रुवाणं दोर्दर्पादमर्षारुणितेक्षणः । रणायाह्वत सुग्रीवस्तं दशग्रीवनंदनम् ॥ १४६ ॥
भामंडलोऽपीन्द्रजितोऽवरजं मेघवाहनम् । आयोधयितुमारेभे शरभं शरभो यथा ॥ १४७ ॥

१ इन्द्रः । २ मानेनोर्ध्वग्रीवः । ३ महिषस्य । ४ वीरमानिनौ ।

दिग्गजा इव चत्वारश्चत्वारः सागरा इव । आस्फालंतः शुशुभिरे ते त्रिलोकीभयंकराः ॥ १४८ ॥
गतागतैस्तद्रथानामकंपत वसुन्धरा । चकंपिरे सानुमंतश्चुक्षोभ च महोदधिः ॥ १४९ ॥
बुबुधे नान्तरं तेषां बाणाकर्षणमोक्षयोः । अत्यंतलघुहस्तानामविहस्तत्वशालिनाम् ॥ १५० ॥
आयसैर्दैवतैरस्त्रैरयुध्यंत चिराय ते । परं न कोऽपि केनापि तेषां मध्यादजीयत ॥ १५१ ॥
अथो मुमुचतुः क्रुद्धाविन्द्रजिन्मेघवाहनौ । सुग्रीवभामंडलयोर्नागपाशास्त्रमुद्धतम् ॥ १५२ ॥
नागपाशैस्तथा बद्धौ भामंडलकपीश्वरौ । अनीश्वरौ निश्वसितुमप्यभूतां यथा हि तौ ॥ १५३ ॥
इतश्च लब्धसंज्ञेन कुंभकर्णेन रोषतः । गदया ताडितः पृथ्व्यां मारुतिर्मूर्छितोऽपतत् ॥ १५४ ॥
दोष्णा तक्षककल्पेन तं करीव करेण सः । समुद्दध्रे वलयितेनान्तःकक्षं न्यधत्त च ॥ १५५ ॥
ऊचे बिभीषणो रामं स्वामिन्नेतौ हि ते बले । बलीयसौ सारभूतावानने नयने इव ॥ १५६ ॥
बद्धौ वैदेहिसुग्रीवौ रावणिभ्यां महोरगैः । यावल्लंकां न नीयेते तावत्तौ मोचयाम्यहम् ॥ १५७ ॥
हनुमान् कुंभकर्णेन बद्धो दोष्णा महीयसा । लंकामप्राप्त एवायं मोचनीयो रघूद्वह ॥ १५८ ॥
स्वामिन् विना हि सुग्रीवभामंडलहनूमतः । अवीरमिव नः सैन्यमनुजानीहि यामि तत् ॥ १५९ ॥
एवं तत्र ब्रुवत्येव वेगाद्गत्वांगदो भटः । आक्षिप्य कुंभकर्णेन युयुधे युद्धकोविदः ॥ १६० ॥
क्रोधान्ध्यात् कुंभकर्णेन प्रोत्क्षिप्तभुजपाशतः । ययौ मारुतिरुत्पत्य विहंग इव पंजरात् ॥ १६१ ॥

---

१ अतिशीघ्रहस्तवतामनाकुलितत्वेन च शालिनां तेषां चतुर्णां बाणानां कर्षणे मोक्षणे च कियत्कालांतरमस्तीति केनापि न बुबुधे इति भावः । २ कक्षायामित्यन्तःकक्षम् । ३ ऊर्ध्वीकृतो भुज एव पाशस्तस्मात् ।

बिभीषणो मोचयितुं भामंडलकपीश्वरौ । रावणिभ्यां समं योद्धुमधावत रथस्थितः ॥ १६२ ॥
दध्यतुश्चेन्द्रजिन्मेघवाहनावेष नः पितुः । अनुजः स्वयमभ्येति कर्तुमस्माभिराहवम् ॥ १६३ ॥
अनेन तातकल्पेन योद्धव्यं कथमद्य हा । इतोऽपसरणं युक्तं न ह्रीः पूज्याद्धि बिभ्यताम् ॥ १६४ ॥
पाशबद्धाविमौ चारी निश्चितं हि मरिष्यतः । इहैव हि तदासातां तातो नान्वेति नौ यथा ॥ १६५ ॥
विचिंत्यैवं नेशतुस्तौ धीमन्तौ रावणी रणात् । पश्यन् बिभीषणश्चास्थाद्भामंडलकपीश्वरौ ॥ १६६ ॥
चिन्ताम्लानाननौ तत्र तस्थतू रामलक्ष्मणौ । हिमानीछन्नवपुषौ सूर्याचन्द्रमसाविव ॥ १६७ ॥
रामभद्रस्ततः पूर्वप्रतिपन्नवरं सुरम् । महालोचनमस्मार्षीत् सुपर्णामरपुंगवम् ॥ १६८ ॥
ज्ञात्वा चावधिनाभ्येत्य ददौ पद्माय सोऽमरः । विद्यां सिंहनिनादाख्यां मुशलं स्यंदनं हलम् ॥ १६९ ॥
लक्ष्मणाय ददौ विद्यां गारुडीं स्यंदनं तथा । गदां च विद्युद्वदनां समरे रिपुनाशिनीम् ॥ १७० ॥
वरुणाग्नेयवायव्यप्रमुखाण्यपराण्यपि । दिव्यान्यस्त्राणि भ्रत्रे च स ददावुभयोरपि ॥ १७१ ॥
सौमित्रेर्वाहनीभूतं गरुडं प्रेक्ष्य तत्क्षणम् । सुग्रीवभामंडलयोः प्रणेशुः पाशपन्नगाः ॥ १७२ ॥
जज्ञे जयजयारावो रामसैन्ये समंततः । रक्षोबलमिवास्तं च ययौ देवोऽब्जिनीपतिः ॥ १७३ ॥
प्रातर्भूयोऽपि सैन्यानि रघूद्वहदशास्ययोः । सर्वाभिसारसाराणि रणांगणमुपासरन् ॥ १७४ ॥
तेषां कृतांतदंताभस्फुरदस्त्रभयंकरः । अकांडारब्धसंवर्तः प्रावर्तत महारणः ॥ १७५ ॥
क्रुद्धैरक्षोभि रक्षोभिर्वानराणां वरूथिनी । मध्याह्नतापसंतप्तैः सरसी सूकरैरिव ॥ १७६ ॥

१ महद्भिम हिमानी तथा छन्न वपुर्ययोरतौ । २ रामाय । ३ क्षुब्धम् ।

भग्नप्रायां चमूं प्रेक्ष्य सुग्रीवाद्या महौजसः । रक्षोऽनीकेषु विविशुर्योगिनोऽन्यवपुःष्विव ॥ १७७ ॥
विदुद्रुवू राक्षसास्तेऽप्याक्रांतास्तैः कपीश्वरैः । नागा इव गरुत्मद्भिरद्भिरामघटा इव ॥ १७८ ॥
रक्षोभंगेन संक्रुद्धो दधावे रावणः स्वयम् । महारथप्रचारेण दारयन्निव मेदिनीम् ॥ १७९ ॥
तस्य प्रसरतो दाववह्नेरिव तरस्विनः । मुहूर्तमपि नाग्रेऽस्थात् कपिवीरेषु कश्चन ॥ १८० ॥
तद्युद्धे चलितं रामं निषिध्य प्रश्रयादथ । बिभीषणः क्षणादेत्य रुरोध दशकंधरम् ॥ १८१ ॥
तं रावणोऽवदद्रे रे कं श्रितोऽसि बिभीषण । क्रुद्धस्य मम येनाजौ क्षिप्तः कवलवन्मुखे ॥ १८२ ॥
व्याधेनेव किरौ श्वानं मयि त्वां रे प्रहिण्वता । रामेण मंत्रितं साधु साध्विदं ह्यात्मरक्षणम् ॥ १८३ ॥
अद्यापि मम वात्सल्यं त्वयि वत्सास्ति गच्छ तत् । एतौ ह्यद्य हनिष्यामि ससैन्यौ रामलक्ष्मणौ ॥ १८४॥
अमीषां वध्यमानानां मा संख्यापूरणः स्म भूः । एहि स्वस्थानमेव त्वं पृष्ठे हस्तोऽयमद्य ते ॥ १८५ ॥
बिभीषणोऽप्युवाचैवं रामोऽन्तक इव स्वयम् । अचालीत्त्वां प्रति क्रुद्धो निषिद्धश्च मया छलात्॥१८६॥
त्वां बोधयितुकामोऽहं युद्धव्याजादिहागतः । अद्यापि मुच्यतां सीता प्रसीद कुरु मद्वचः ॥ १८७ ॥
हन्त मृत्युभयान्नाहं राज्यलोभेन नापि वा । गतोऽस्मि रामं निर्वादभयात् किं तु दशानन ॥ १८८ ॥
सीतार्पणेन निर्वादं प्रणाशय यथा ह्यहम् । पुनरेव श्रयामि त्वां विहाय रघुपुंगवम् ॥ १८९ ॥
क्रुद्धोऽथ रावणः प्रोचे किमद्यापि बिभीषिकाम् । रे बिभीषण दुर्बुद्धे प्रदर्शयसि कातर ॥ १९० ॥
भ्रातृहत्याभयाद्युक्तोऽस्येवं नान्येन हेतुना । इत्युक्त्वास्फालयामास कार्मुकं दशकन्धरः ॥ १९१ ॥

---

१ जलैः । २ अपक्वघटा इव । ३ अपवादभयात् । ४ भीतिम् ।

भ्रातृहत्याभयात्क्रोऽस्येवं नान्येन हेतुना । इत्युक्त्वास्फालयामास धनुः सोऽपि बिभीषणः ॥ १९२ ॥
ततः प्रववृताते तौ भ्रातरौ योद्धुमुद्यतौ । चित्राण्यस्त्राणि कर्षन्तौ वर्षतौ च निरंतरम् ॥ १९३ ॥
अथेन्द्रजित्कुंभकर्णौ राक्षसा अपरेऽपि हि । स्वामिभक्त्यान्यधावन्त कृतांतस्येव किंकराः ॥ १९४ ॥
रामोऽरौत्सीत् कुंभकर्णं लक्ष्मणो रावणिं पुनः । नीलस्तु सिंहजघनं दुर्मर्षश्च घटोदरम् ॥ १९५ ॥
स्वयंभूर्दुर्मतिं शंभुं नलवीरोऽङ्गदो मयम् । स्कन्दः पुनश्चन्द्रणखं विघ्नं चन्द्रोदरात्मजः ॥ १९६ ॥
केतुं भामंडलनृपः श्रीदत्तो जंबुमालिनम् । कुंभकर्णसुतं कुंभं पवनञ्जयनन्दनः ॥ १९७ ॥
किष्किन्धेशः सुमालाख्यं कुन्दो धूम्राक्षराक्षसम् । वालिसूश्चन्द्ररश्मिश्च भटं सारणराक्षसम् ॥ १९८ ॥
राक्षसानेवमन्योऽन्यमरोत्सुः कपयोऽपरे । अयुध्यंत च तैः सार्धं नक्रैर्नक्रा इवार्णवे ॥ १९९ ॥
एवं युद्धे वर्तमाने भीषणेभ्योऽपि भीषणे । लक्ष्मणायामुचत्क्रोधादस्त्रं तामसमिन्द्रजित् ॥ २०० ॥
तदस्त्रं तपनास्त्रेण सौमित्रिः शत्रुतापनः । सद्यो विद्रावयामासाग्निना मंदनपिंरूवत्[1] ॥ २०१ ॥
सौमित्रिर्नागपाशास्त्रं मुमोचेन्द्रजिते क्रुधा । तन्तुनांभसि हस्तीव स तेन द्रागबध्यत ॥ २०२ ॥
आक्रम्यमाणसर्वांगो नागास्त्रेण दशास्यसूः । निपपाताशनिरिव दारयन् सागरांबराम् ॥ २०३ ॥
चिक्षेप स्वरथांके[2] तं विराधो लक्ष्मणाज्ञया । कारापाल[3] इवानैषीन्निजे च शिबिरे द्रुतम् ॥ २०४ ॥
नागपाशैः कुंभकर्णं त्वबध्नाल्लक्ष्मणाग्रजः । भामंडलस्तं शिबिरेऽनैषीद्रामाज्ञया ततः ॥ २०५ ॥
अन्येऽपि प्रतियोद्धारो बद्धा रामस्य सैनिकैः । मेघवाहनमुख्यास्ते निन्यिरे शिबिरे निजे ॥ २०६ ॥

१ मदनो भाषाया "मीण" इति ख्यातः । २ स्वरथमध्ये । ३ कारागृहरक्षकः ।

दृष्ट्वा दशमुखस्तत्तु क्रोधशोकसमाकुलः । विभीषणाय चिक्षेप शूलं मूलं जयश्रियः ॥ २०७ ॥
तच्छूलमंतरालेऽपि कदलीकांडलीलया । चकार खण्डशो रामावरजः पत्रिभिः शितैः ॥ २०८ ॥
धरणेन्द्रप्रदत्तांताममोघविजयाह्वयाम् । विजयार्थी दशग्रीवो महाशक्तिं समुदधे ॥ २०९ ॥
धगद्धगिति ज्वलंतीं तडत्तडिति नादिनीम् । संहाराब्दतडिल्लेखामिव खेऽभ्रमयत्स ताम् ॥ २१० ॥
अपसस्रुर्दिवि सुरा दृशं सैन्यान्यमीलयन् । तां विलोक्य न केऽप्यस्थुः सुस्थितं सुस्थिता अपि ॥२११॥
रामः सौमित्रिमित्यूचेऽस्माकमेष विभीषणः । आगंतुर्हन्यते हंत धिग्न आश्रितघातिनः ॥ २१२ ॥
इति रामवचः श्रुत्वा सौमित्रिर्मित्रवत्सलः । विभीषणाग्रे गत्वास्थादाक्षिपन् दशकन्धरम् ॥ २१३ ॥
पुरःस्थं गरुडस्थं तं प्रेक्ष्योवाच दशाननः । न तुभ्यं शक्तिरुत्क्षिप्ता मा मृथाः परमृत्युना ॥ २१४ ॥
म्रियस्व यदि वा मार्यस्त्वमेवासि यतो मम । वराकस्त्वत्पदे ह्येष ममाग्रेऽस्थाद्विभीषणः ॥ २१५ ॥
इत्युक्त्वा भ्रमयित्वा तां शक्तिं रामानुजन्मने । मुमोच पतदुत्पाताशनिकल्पां दशाननः ॥ २१६ ॥
तामापतंतीं सौमित्रिः सुग्रीवो हनुमान्नलः । भामंडलो विराधोऽन्येऽप्यस्त्रैः स्वैः स्वैरताडयन् ॥ २१७ ॥
सावज्ञाय तदस्त्रौघं व्यालद्विप इवांकुशम् । उर्वानल इवांभोधौ लक्ष्मणोरःस्थलेऽपतत् ॥ २१८ ॥
तया भिन्नो महीपृष्ठे निपपात च लक्ष्मणः । उत्पपात च तत्सैन्ये विष्वग्घा हा रवो महान् ॥ २१९ ॥
क्रुद्धोऽथ ज्येष्ठकाकुत्स्थो जिघत्सुरिव रावणम् । आयोधयितुमारेभे पंचाननरथस्थितः ॥ २२० ॥
क्षणाच्चकार विरथं पंचाननरथो द्विषम् । दशाननोऽपि वेगेनाध्यारुरोह रथांतरम् ॥ २२१ ॥

---

१ पतत् यत् उत्पातवज्रं तत्सदृशीम् । २ वाडवाग्निरिव । ३ हंतुमिच्छुः ।

भंक्त्वा भंक्त्वा रथानेवं पंचवारान् दशाननम् । काकुत्स्थो विरथीचक्रे जगदद्वैतपौरुषः[1] ॥ २२२ ॥
दशास्योऽचिन्तयच्चैवं भ्रातृस्नेहादयं स्वयम् । मरिष्यत्येव तत्किं मे योधितेनाधुनामुना ॥ २२३ ॥
दशग्रीवो विमृश्यैवं ययौ लंकापुरीं द्रुतम् । अस्तं जगाम च रवी रामशोकादिवातुरः ॥ २२४ ॥
भग्नेऽथ रावणे रामो निवृत्त्येयाय लक्ष्मणम् । तं च दृष्ट्वा निपतितं पपात भुवि मूर्छितः ॥ २२५ ॥
सुग्रीवादिभिरासिक्तो रामश्चंदनवारिणा । लब्धसंज्ञो निपद्योपसौमित्री[2]त्यगदद्गदन् ॥ २२६ ॥
तव किं बाधते वत्स ब्रूहि तूष्णीं स्थितोऽसि किम् । संज्ञयापि समाख्याहि प्रीणयाग्रजमात्मनः ॥२२७॥
एते त्वन्मुखमीक्षन्ते सुग्रीवाद्यास्तवानुगाः । नानुगृह्णासि किं वाचा दृशा वा प्रियदर्शन ॥ २२८ ॥
जीवन्रणाद्रावणोऽगादिति लज्जावशाद्ध्रुवम् । न भाषसे तद्भाषस्व पूरयिष्ये तवेप्सितम् ॥ २२९ ॥
रे रे रावण दुष्टात्मंस्तिष्ठ तिष्ठ क्व यास्यसि । एष प्रस्थापयामि त्वां नचिराय महापथे ॥ २३० ॥
इत्युक्त्वा धनुरास्फाल्योदस्थाद्यावद्रघूद्वहः । तावत् कपीश्वरेणैवमूचे विनयपूर्वकम् ॥ २३१ ॥
स्वामिन्निशेयमगमल्लंकां च स निशाचरः । शक्तिप्रहारविधुरः स्वामी नश्चैष वर्तते ॥ २३२ ॥
धैर्यमाधेहि जानीहि हतमेव दशाननम् । प्रतिजागरणोपायं सौमित्रेरेव चिंतय ॥ २३३ ॥
भूयो रामो जगादैवं हृता भार्या हतोऽनुजः । तिष्ठत्यद्यापि रामोऽयं शतधा न विदीर्यते ॥ २३४ ॥
सखे सुग्रीव हनुमन् भामंडल नलाङ्गद । विराधाद्याश्च सर्वेऽपि यात स्वौकसि संप्रति ॥ २३५ ॥
सीतापहारात् सौमित्रिवधादप्यधिकं शुचे । सखे बिभीषणाभूस्त्वं यत्कृतार्थीकृतोऽसि न ॥ २३६ ॥

१ जगत्यद्वितीयपराक्रमः । २ सौमित्रेः समीपमुपसौमित्रि ।

प्रातः पश्य परं बंधो निजबांधववर्त्मना[1] । नीयमानं स्वबंधुं[2] तं बंधुरूपेण वैरिणम् ॥ २३७ ॥
प्रातः कृतार्थीकृत्य त्वामनुयास्यामि लक्ष्मणम् । लक्ष्मणं हि विना किं मे सीतया जीवितेन च ॥ २३८ ॥
बिभीषणो बभाषेऽथ किमधैर्यमिदं प्रभो । शक्त्या हतोऽपि ह्यनया पुमान् जीवति यामिनीम् ॥ २३९ ॥
मंत्रतंत्रादिना घातप्रतीकाराय सर्वथा । प्रयत्यतां प्रभो यावन्न विभाति विभावरी[3] ॥ २४० ॥
आमेति राघवेणोक्ते सुग्रीवाद्यास्तु विद्यया । सप्तवप्रांश्चतुर्द्वारान् राघवौ परितो व्यधुः ॥ २४१ ॥
प्राच्यां द्वारेषु तत्रास्थुः सुग्रीवः पावनंजयिः । तारः कुंदो दधिमुखो गवाक्षो गवयः क्रमात् ॥ २४२ ॥
उदीच्यामंगदः कूर्मोऽङ्गो महेन्द्रो विहंगमः । सुषेणश्चंद्ररश्मिश्च द्वारेष्वस्थुः क्रमादमी ॥ २४३ ॥
प्रतीच्यां नीलसमरशीलदुर्धरमन्मथाः । जयश्च विजयश्चैव संभवश्चावतस्थिरे ॥ २४४ ॥
भामंडलो विराधश्च गजो भुवनजिन्नलः । मैन्दो बिभीषणश्चास्थुर्दक्षिणस्यां क्रमादमी ॥ २४५ ॥
मध्ये कृत्वेति काकुत्स्थौ सुग्रीवाद्या महाभुजाः । प्रजागरपरास्तस्थुरात्मारामा[4] इवोद्यताः ॥ २४६ ॥
सीतायाः कश्चिदाचख्यौ यच्छक्त्या लक्ष्मणो हतः । प्रातर्विपत्स्यते रामभद्रोऽपि भ्रातृसौहृदात् ॥ २४७ ॥
वज्रनिर्घोषवद्घोरं तच्छ्रुत्वा जनकात्मजा । पपात मूर्छया पृथ्व्यां लतेव पवनाहता ॥ २४८ ॥
विद्याधरीभिरंभोभिः संसिक्ता लब्धचेतना । उत्थाय विललापैवं जानकी करुणस्वरम् ॥ २४९ ॥
हा वत्स लक्ष्मण क्वागास्त्यक्त्वैकाकिनमग्रजम् । मुहूर्तमपि हि स्थातुं विना त्वामेष न क्षमः ॥ २५० ॥
धिगहं मंदभाग्यास्मि यतो मम कृतेऽधुना । स्वामिदेवरयोर्दैवतुल्ययोरीदृगागतम् ॥ २५१ ॥

१ लक्ष्मणवर्त्मना मृत्युरूपेणेत्यर्थः । २ स्वस्य तव बंधु त रावणम् । ३ रात्रिः । ४ योगिनः ।

प्रसीद मत्प्रवेशाय द्विधा भव वसुंधरे । प्राणनिर्वाणहेतोस्त्वं भव वा हृदय द्विधा ॥ २५२ ॥
एवं रुदंतीं करुणं सीता कापि कृपावती । अवलोक्यावलोकिन्या विद्याधर्यब्रवीदिति ॥ २५३ ॥
भविष्यत्यक्षतांगस्ते प्रभाते देवि देवरः । समं च रामभद्रेण त्वामेत्यानंदयिष्यति ॥ २५४ ॥
स्वस्थावस्था तन्निरास्थात् काकुत्स्थगृहिणी तदा । सूर्योदयं चिंतयंती चक्रवाकीव जाग्रती ॥ २५५ ॥
सौमित्रिर्मारितोऽद्येति क्षणं जहर्ष रावणः । क्षणं स्मृत्वा भ्रातृपुत्रमित्रबंधं रुरोद च ॥ २५६ ॥
हा वत्स कुंभकर्ण त्वं ममात्मैवापरः परः । द्वितीयाविव मे बाहू हेन्द्रजिन्मेघवाहनौ ॥ २५७ ॥
हा वत्सा जंबुमाल्याद्या मम रूपान्तरोपमाः । अप्राप्तपूर्वं प्राप्तास्थ कथं बंधं गजा इव ॥ २५८ ॥
स्मारं स्मारं स्वबंधूनामित्थं बंधादि नूतनम् । भूयो भूयो दशग्रीवो मुमूर्छ च रुरोद च ॥ २५९ ॥
इतश्च पद्मसैन्ये प्राक्प्राकारद्वाररक्षकम् । भामंडलमुपेत्यैवं कोऽपि विद्याधरोऽवदत् ॥ २६० ॥
पद्मपादान् दर्शय मे तदासौ ननु यद्यसि । अलं लक्ष्मणजीवातुमाख्यास्यामि हितोऽस्मि वः ॥ २६१ ॥
विधृत्य पाणिना दोष्णि नीतो भामंडलेन सः । पद्मस्य पादपद्मांते प्रणम्यैवं व्यजिज्ञपत् ॥ २६२ ॥
संगीतपुरनाथस्य शशिमंडलभूपतेः । तनयः प्रतिचंद्रोऽहं सुप्रभाकुक्षिसंभवः ॥ २६३ ॥
क्रीडार्थं सकलत्रोऽहं चलितोऽन्येद्युरंबरे । दृष्टः सहस्रविजयनाम्ना विद्याधरेण च ॥ २६४ ॥
तेन मैथुनिकावैराद्योधितोऽहं चिरं तदा । पातितश्चंडरवया शक्त्या चाहत्य भूतले ॥ २६५ ॥
साकेतपुर्यां माहेन्द्रोदयोद्याने लुठन् भुवि । दृष्टश्च भरतेनाहं त्वद्भ्रात्रातिकृपालुना ॥ २६६ ॥

सद्यो गंधांबुभिस्तेन सिक्तोऽहं पृथिवीभुजा । भक्तश्च निरगाच्छक्तिर्दस्युः परगृहादिव ॥ २६७ ॥
सद्यो रूढप्रहारेण मया विस्मितचेतसा । पृष्टो गंधांबुमाहात्म्यमित्यशंसत्तवानुजः ॥ २६८ ॥
सार्थवाहो विंध्यनामाभ्यागाद्गजपुरादिह । एकस्तन्महिषो मार्गेऽतिभारत्रुटितोऽपतत् ॥ २६९ ॥
तन्मूर्ध्नि पादं विन्यस्य संचचार पुरीजनः । उपद्रवेण महता विपन्नः सोऽथ सैरिभः ॥ २७० ॥
सोऽकामनिर्जरायोगाच्छ्वेतंकरपुरेश्वरः । सुरो वायुकुमारोऽभून्नाम्ना पवनपुत्रकः ॥ २७१ ॥
ज्ञात्वा चावधिना पूर्वं मृत्युं प्रकुपितोऽथ सः । पुरे जनपदे चास्मिन् व्याधीन्नानाविधान् व्यधात् २७२
देशे गृहे च न व्याधिरभून्मन्मातुलस्य तु । द्रोणमेघनरेन्द्रस्य मन्महीवर्तिनोऽपि हि ॥ २७३ ॥
अव्याधिकारणं पृष्टो मया द्रोणघनोऽवदत् । भार्या प्रियंकरा मेऽभूत्पुरातिव्याधिबाधिता ॥ २७४ ॥
जाते गर्भे तत्प्रभावाद्व्याधिनामुच्यताथ सा । सुषुवे च क्रमात्पुत्रीं विशल्यामभिधानतः ॥ २७५ ॥
त्वद्देश इव मद्देशेऽप्युद्भूते व्याध्युपद्रवे । विशल्यास्नानतोयेन सिक्तो लोकोऽभवन्नीरुक् ॥ २७६ ॥
पृष्टो मया सत्यभूतशरणो मुनिरन्यदा । वदति स्म विशल्यायाः प्राग्जन्मतपसः फलम् ॥ २७७ ॥
व्रणसंरोहणं शल्यापहारो व्याधिसंक्षयः । नृणां स्नानांभसाप्यस्या भावी भर्ता च लक्ष्मणः ॥ २७८ ॥
तया मुनिगिरा सम्यग्ज्ञानादनुभवादपि । विशल्यास्नानपयसः प्रभावो निश्चितो मया ॥ २७९ ॥
इत्युदित्वा द्रोणमेघो विशल्यास्नपनोदकम् । ममापि ह्यर्पयत्तेनाभवद्भूमिर्ममाप्यरुक् ॥ २८० ॥
तस्याः स्नानांभसानेन मया सिक्तस्त्वमप्यहो । निःशक्तिशल्यः संरूढव्रणश्च त्वमभूः क्षणात् ॥ २८१ ॥

---

१ चौरः । २ महिषः । ३ रोगरहितः ।

भरतस्य ममाप्येवमुत्पन्नः प्रत्ययः प्रभो । आ प्रत्यूषादानयत विशल्यास्नानवारि तत् ॥ २८२ ॥
त्वर्यतां त्वर्यतां तस्मात्प्रत्यूषे किं करिष्यथ । पर्यस्ते शकटे हन्त किं कुर्वीत गणाधिपः ॥ २८३ ॥
भामंडलं हनूमंतमंगदं च रघूद्वहः । आदिशत्प्रतिभरतं विशल्यास्नानवारिणे ॥ २८४ ॥
प्रययुस्ते विमानेनायोध्यां पवनरंहसा । प्रासादांके च दद्दृशुः शयानं भरतं नृपम् ॥ २८५ ॥
भरतस्य प्रबोधाय ते गीतं चक्रुरंबरे । राजकार्येऽपि राजान उत्थाप्यंते ह्युपायतः ॥ २८६ ॥
विबुध्य भरतेनापि दृष्टः पृष्टः पुरो नमन् । ऊचे भामंडलः कार्यं नास्त्यास्ते प्ररोचना ॥ २८७ ॥
सेत्स्यत्येतन्मया तत्रेयुपेति भरतस्ततः । तद्विमानाधिरूढोऽगात् पुरं कौतुकमंगलम् ॥ २८८ ॥
भरतेन द्रोणघनो विशल्यामथ याचितः । सहोद्वाह्य स्त्रीसहस्रसहितां तामदत्त च ॥ २८९ ॥
भामंडलोऽप्ययोध्यायां मुक्त्वा भरतमुत्सुकः । आययौ सपरीवारो विशल्यासंयुतस्ततः ॥ २९० ॥
ज्वलद्दीपविमानस्थो भीतैः सूर्योदयभ्रमात् । क्षणं दृष्टो निजैः सोऽधाद्विशल्यामुपलक्ष्मणम् ॥ २९१ ॥
तया च पाणिना स्पृष्टाल्लक्ष्मणात्तत्क्षणादपि । निर्जगाम महाशक्तिर्यष्टिनेव महोरगी ॥ २९२ ॥
समुत्पतंती सा शक्तिः समुत्पत्य हनूमता । प्रसभं जगृहे श्येनविहगेनेव वर्तिका ॥ २९३ ॥
साप्यूचे देवतारूपा न मे दोषोऽस्ति कश्चन । प्रदत्ता धरणेनास्मै प्रज्ञप्तिभगिनी ह्यहम् ॥ २९४ ॥
विशल्याप्राग्भवतपस्तेजः सोढुमनीश्वरी । एषा यास्यामि मां मुंच प्रैष्यभावादनागसम् ॥ २९५ ॥

१ प्रस्तावना रोचकवाक्य वा । २ सह लक्ष्मणेनेत्यध्याहारः "स" "ह" इति पृथक् पद वा तत्र हेति स्फुटार्थेऽव्ययम् । ३ किंकरभावात् ।

इत्युक्तो मुक्तवान् शक्तिं मारुतिस्तां महाभुजः । मुक्तमात्रा च सा शक्तिर्लज्जितेव तिरोदधे ॥ २९६ ॥
विशल्यापि हि सौमित्रिं भूयः पस्पर्श पाणिना । विलिलेप च गोशीर्षचन्दनेन शनैः शनैः ॥ २९७ ॥
रूढव्रणोऽथ सौमित्रिर्द्राक् प्रसुप्त इवोत्थितः । सस्वजे रामभद्रेण वर्षताश्रुजलं मुदा ॥ २९८ ॥
सर्वं विशल्यावृत्तांतं रामस्तस्मै शशंस च । तत्स्नानपयसा चाशु स्वान् परांश्चाभ्यषेचयत् ॥ २९९ ॥
कन्यासहस्रसहितां विशल्यां रामशासनात् । तदानीमेव सौमित्रिरुपयेमे यथाविधि ॥ ३०० ॥
सौमित्रेर्जीवनोद्वाहोत्साहजन्मा महोत्सवः । विद्याधरनृपैश्चक्रे जगदाश्चर्यकारणम् ॥ ३०१ ॥
सौमित्रिर्जीवित इति चरैर्नक्तंचराधिपः । विज्ञाय मंत्रयांचक्रे समं मंत्रिवरैरिति ॥ ३०२ ॥
अभवन्मम भावोऽयं सौमित्रिः शक्तिताडितः । प्रातर्मरिष्यति ततो रामोऽपि स्नेहपीडितः ॥ ३०३ ॥
यास्यंति कपयो नंष्ट्वा ते च मद्बंधुसूनवः । कुंभकर्णेन्द्रजिन्मुख्याः स्वयमेष्यंति मामिह ॥ ३०४ ॥
अधुना दैववैगुण्याल्लक्ष्मणः सोऽपि जीवितः । मया मोचयितव्यास्ते कुंभकर्णादयः कथम् ॥ ३०५ ॥
मंत्रिणोऽप्येवमूचुस्तं जानकीमोक्षणं विना । न मोक्षः कुंभकर्णादिवीराणां प्रत्युताशिवम् ॥ ३०६ ॥
इयत्यपि गते स्वामिन् रक्ष रक्ष निजं कुलम् । उपायश्चात्र नान्योऽस्ति रामानुनयनं विना ॥ ३०७ ॥
रावणस्तानवज्ञाय दूतं सामंतमादिशत् । सामदानदंडपूर्वमनुशिष्योपराघवम् ॥ ३०८ ॥
स गत्वा द्वाःस्थविज्ञप्तः सुग्रीवादिसमावृतम् । पद्मनाभं नमस्कृत्य व्याजहारेति धीरगीः ॥ ३०९ ॥
दशास्यस्त्वां वदत्येवं बंधुवर्गं विमुंच मे । जानकीमनुमन्यस्व राज्यार्धं च गृहाण मे ॥ ३१० ॥

१ निशाचराधिपः रावणः ।

त्रीणि कन्यासहस्राणि तुभ्यं दास्यामि तेन च । संतुष्य[1] नो चेत्ते सर्वं न ह्येतन्न च जीवितम् ॥ २११ ॥
वत्साषे पद्मनाभोऽथ नार्थो मे राज्यसंपदा । न चान्यप्रमदावर्गभोगेन महतापि हि ॥ २१२ ॥
प्रेषयिष्यत्यर्चयित्वा जानकीं रावणो यदि । तदा मोक्ष्यामि तद्बन्धुतनयानन्यथा न हि ॥ २१३ ॥
सामन्तः पुनरप्यूचे राम नैतत्तवोचितम् । स्त्रीमात्रकस्यास्य कृते स्वं क्षेप्तुं प्राणसंशये ॥ २१४ ॥
सौमित्रिरेकवारं चेज्जीवितो रावणाहतः । जीविष्यति कथं सोऽद्य त्वं चामी च प्लवंगमाः ॥ २१५ ॥
एकोऽपि रावणो हन्तुमिदं विश्वमपीश्वरः । सर्वथा तद्वचो मान्यमुदर्कं विमृश स्वयम् ॥ २१६ ॥
लक्ष्मणस्तद्गिरा क्रुद्धोऽभ्यधाद्रे दूतपांशन । स्वशक्तिं परशक्तिं वा वेत्त्यद्यापि न रावणः ॥ २१७ ॥
हतबंधुपरीवारो भार्याशेषीकृतोऽपि सन् । पौरुषं नाटयत्येष एषा का तस्य धृष्टता ॥ २१८ ॥
शेषैकमूलमुशलछिन्नाशेषजटस्तरुः[2] । यथा सोऽपि तथैकांगः कियत्स्थास्यति रावणः ॥ २१९ ॥
तगच्छ संवाहय तं युद्धाय दशकंधरम् । कृतांत इव सज्जो मे तं व्यापादयितुं भुजः ॥ २२० ॥
लक्ष्मणेनैवमाक्षिप्तो विज्ञापितुमना स तु । उत्थाय धृत्वा ग्रीवायां वानरैर्निरवास्यत ॥ २२१ ॥
रावणाय स गत्वाख्यत् सर्वं राघववाचिकम् । सचिवान् रावणोऽप्यूचे किं कार्यं ब्रूत संप्रति ॥ २२२ ॥
अब्रुवन्मंत्रिणोऽप्येवं सीतार्पणमिहोचितम् । व्यतिरेकफलं[3] दृष्टं पश्यान्वयफलं प्रभो ॥ २२३ ॥
अन्वयव्यतिरेकाभ्यां सर्वं कार्यं परीक्ष्यते । एकेन व्यतिरेकेण किं स्थितोऽसि दशानन ॥ २२४ ॥
अद्यता बहवोऽद्यापि बंधवः सूनवश्च ते । सीतार्पणाद्विमुक्तैस्तैः सममेधस्व संपदा ॥ २२५ ॥

१ सतुष्टो भव । २ जटाः शाखाः । ३ सीतार्पणाभावेऽनर्थरूपं फल दृष्टमिति व्यतिरेकः सीतार्पणरूपस्यान्वयस्य फलं पश्येति संबंधः।

॥१००॥

तेषां सीतार्पणगिरा मर्मणीव हतोऽधिकम् । अंतर्दूनो दशमुखश्चिरं स्वयमचिन्तयत् ॥ ३२६ ॥
विद्याया बहुरूपाया हृदि निर्णीय साधनम् । शांतिचैत्यं ययौ शांतकषायीभूय रावणः ॥ ३२७ ॥
स्नात्रं श्रीशांतिनाथस्य पयस्कुम्भैर्दशाननः । स्वयमिंद्र इवाकार्षीद्भक्त्या विकसिताननः ॥ ३२८ ॥
गोशीर्षचंदनेनांगरागं पुष्पैश्च दैवतैः । पूजां विधाय श्रीशांतेः स्तुतिमेवं विनिर्ममे ॥ ३२९ ॥
देवाधिदेवाय जगत्तायिने परमात्मने । श्रीमते शांतिनाथाय षोडशायार्हते नमः ॥ ३३० ॥
श्रीशांतिनाथ भगवन् भवाम्भोनिधितारण । सर्वार्थसिद्धमंत्राय त्वन्नाम्नेऽपि नमो नमः ॥ ३३१ ॥
ये तवाष्टविधां पूजां कुर्वंति परमेश्वर । अष्टापि सिद्धयस्तेषां करस्था अणिमादयः ॥ ३३२ ॥
धन्यान्यक्षीणि यानि त्वां पश्यंति प्रतिवासरम् । तेभ्योऽपि धन्यं हृदयं तैर्दृष्टो[3] येन धार्यसे ॥ ३३३ ॥
देव त्वत्पादसंस्पर्शादपि स्यान्निर्मलो जनः । अयोऽपि हेमीभवति स्पर्शवेधिरसान्न किम् ॥ ३३४ ॥
त्वत्पादाब्जप्रणामेन नित्यं भूलुठनैः प्रभो । शृंगारतिलकीभूयान्मम भाले किणावलिः ॥ ३३५ ॥
पदार्थैः पुष्पगंधाद्यैरुपहारीकृतैस्तव । प्रभो भवतु मद्राज्यसंपद्वल्लेः सदा फलम् ॥ ३३६ ॥
भूयो भूयः प्रार्थये त्वामिदमेव जगद्विभो । भगवन् भूयसी भूयात्त्वयि भक्तिर्भवे भवे ॥ ३३७ ॥
स्तुत्वेति शांतिं लंकेशः पुरो रत्नशिलास्थितः । तां साधयितुमारेभे विद्यामक्षस्रजं दधत् ॥ ३३८ ॥
अथ मंदोदरी द्वाःस्थं यमदंडमदोऽवदत् । जिनधर्मरतोऽष्टाहान्यस्तु सर्वोऽपि पूर्जनः ॥ ३३९ ॥
न करिष्यति यस्त्वेवं तस्य दंडो वधात्मकः । भविष्यतीति लंकायामाघोषय हैतानकः ॥ ३४० ॥

---

१ निश्चित्य । २ जगद्रक्षित्रे । ३ तैरक्षिभिर्दृष्टः । ४ क्षतावलिः । ५ हत आनको वाद्यविशेषो येन सः ।

तदादेशेन स द्वाःस्थः पुर्यामाघोषयत्तथा । तच्च चारनरैरेत्य सुग्रीवाय न्यवेद्यत ॥ ३४१ ॥
सुग्रीवोऽप्यब्रवीदेवं न यावद्बहुरूपिणीम् । विद्यां साधयति स्वामिंस्तावत्साध्यो दशाननः ॥ ३४२ ॥
स्मित्वा पद्मोऽप्युवाचैवं शान्तं ध्यानपरायणम् । कथं दशास्यं गृह्णामि न ह्यहं स इव छली ॥ ३४३ ॥
इति रामवचः श्रुत्वा छन्नमेवांगदादयः । विद्याभ्रंशाय लंकेशं शांतिचैत्यस्थितं ययुः ॥ ३४४ ॥
विदधुर्विविधांस्तत्रोपसर्गांस्ते निरर्गलाः । मनागपि न तु ध्यानादचालीद्दशकंधरः ॥ ३४५ ॥
अथांगदो जगादेवं रामाद्भीतेन किं त्वया । इदं पाखंडमारब्धमप्राप्तशरणेन भोः ॥ ३४६ ॥
त्वया परोक्षे मद्भर्तुर्हृता भार्या महासती । मंदोदरीं तु ते पत्नीं पश्यतोऽपि हराम्यहम् ॥ ३४७ ॥
इत्युदीर्यामंदरोषोऽकर्षन्मन्दोदरीं कचैः । सोऽनाथामिव रुदंतीं कुररीकरुणस्वराम् ॥ ३४८ ॥
रावणो ध्यानसंलीनः प्रेक्षांचक्रेऽपि तां न हि । प्रादुरासीच्च सा विद्या द्योतयंती नभस्तलम् ॥ ३४९ ॥
सेत्यूचे तव सिद्धास्मि ब्रूहि किं करवाणि भोः । करोमि ते वशे विश्वं कियन्मात्रौ हि राघवौ ॥ ३५० ॥
रावणः प्रत्युवाचैवं सर्वं निष्पद्यते त्वया । स्मृता समापतेः काले स्वस्थानं गच्छ संप्रति ॥ ३५१ ॥
तद्विसृष्टा तिरोऽधत्त सा विद्या तेऽपि वानराः । स्कंधावारं निजं जग्मुरुत्पत्य पवमानवत् ॥ ३५२ ॥
मंदोदर्यंगदोदंतं शुश्राव च दशाननः । चक्रे च सद्योऽहंकारगर्भं हुंकारमुच्चकैः ॥ ३५३ ॥
स्नात्वा भुक्त्वा च लंकेशोऽगाद्देवरमणे वने । ऊचे सीतां च सुचिरं मया तेऽनुनयः कृतः ॥ ३५४ ॥
उज्झित्वा नियमभंगभीरुत्वमधुना पुनः । रमयिष्ये प्रसह्य त्वां हत्वा त्वत्पतिदेवरौ ॥ ३५५ ॥

१ केशैः ।

तद्वाचा विषसध्रीच्या मूर्छिता जनकात्मजा । निपपात दशास्यस्य तैस्यामाशेव तत्क्षणम् ॥ ३५६ ॥
कथंचिल्लब्धसंज्ञा सा जग्राहैवमभिग्रहम् । मृत्युश्चेद्रामसौमित्र्योस्तदास्त्वनशनं मम ॥ ३५७ ॥
तच्छ्रुत्वा रावणो दध्यौ रामे स्नेहो निसर्गजः । अस्यास्तदस्यां मे रागः स्थले कमलरोपणम् ॥ ३५८ ॥
कृतं युक्तं मया तन्नावज्ञातो यद्विभीषणः । नामात्या मानिताः स्वं च कुलमेतत्कलंकितम् ॥ ३५९ ॥
मुंचाम्येतामद्य चेत्तन्न विवेकपदे पैतेत् । रामाक्रांतेन मुक्तेयमिति स्यात्प्रत्युतायशः ॥ ३६० ॥
बद्ध्वेह रामसौमित्री समानेष्ये ततस्तयोः । अर्पयिष्याम्यमूं धर्म्यं यशस्यं च हि तद्भवेत् ॥ ३६१ ॥
इति निश्चित्य लंकेशस्तामस्तीत्य विद्यावरीम् । युद्धे चचालाशकुनैर्वार्यमाणोऽपि दुर्मदः ॥ ३६२ ॥
भूयः प्रववृते युद्धं रामरावणसैन्ययोः । अत्युद्भटभटभुजास्फोटत्रासितदिग्गजम् ॥ ३६३ ॥
विधूयाशेषरक्षांसि तूलानीव महाबॅलः । लक्ष्मणस्ताडयामास विशिखैर्दशकंधरम् ॥ ३६४ ॥
सौमित्रेर्विक्रमं दृष्ट्वा साशंको दशकन्धरः । सस्मार बहुरूपां तां विद्यां विश्वभयंकराम् ॥ ३६५ ॥
स्मृतिमात्रोपस्थितायां विद्यायां तत्र रावणः । विचक्रे भैरवाण्याशु स्वानि रूपाण्यनेकशः ॥ ३६६ ॥
भूमौ नभसि पृष्ठेऽग्रे पार्श्वयोरपि लक्ष्मणः । अपश्यद्रावणानेव विविधायुधवर्षिणः ॥ ३६७ ॥
तावद्रूप इवैकोऽपि तार्क्ष्यस्थो लक्ष्मणोऽपि तान् । जघान रावणान् बाणैश्चिंतितोपनतैः शरैः ॥ ३६८ ॥
नारायणस्य तैर्बाणैर्विधुरो दशकंधरः । सस्मार जाज्वलच्चक्रमर्धचक्रित्वलांछनम् ॥ ३६९ ॥
रोषारुणाक्षस्तच्चक्रं भ्रमयित्वा नभस्तले । मुमोच रावणः शस्त्रमंत्यं रामानुजन्मने ॥ ३७० ॥

१ विषतुल्यया । २ सीतायां विषये रावणस्याशेव । ३ भवेत् । ४ वायुः ।

कृत्वा प्रदक्षिणां तत्तु सौमित्रेर्दक्षिणे करे। अवतस्थे रविरिवोदयपर्वतमूर्धनि ॥ ३७१ ॥
विषण्णो रावणो दध्यौ सत्यं जातं मुनेर्वचः। तेषां बिभीषणादीनां सत्यश्चालोचेनिर्णयः ॥ ३७२ ॥
विषण्णं भ्रातरं प्रेक्ष्य भूयोऽप्यूचे बिभीषणः। भ्रातरद्यापि वैदेहीं मुंच त्वं चेज्जिजीविषुः ॥ ३७३ ॥
क्रुद्धस्तं रावणोऽवोचत् किं मेऽस्त्रं चक्रमेव रे। द्विषं सचक्रमप्येनं हनिष्यामि मुष्टिना ॥ ३७४ ॥
इति दर्पाद्ब्रुवतो रक्षोनाथस्य लक्ष्मणः। वक्षस्तेनैव चक्रेण कूष्मांडवदपाटयत् ॥ ३७५ ॥
तदा च ज्येष्ठकृष्णैकादश्यामह्नश्च पश्चिमे। यामे मृतो दशग्रीवश्चतुर्थं नरकं ययौ ॥ ३७६ ॥

सपदि जय जयेति व्याहरद्भिर्द्युसद्भिर्व्यरचि कुसुमवृष्टिर्लक्ष्मणस्योपरिष्टात्।
समजनि च कपीनां तांडवं चंद्रहर्षोत्थितकिलकिलनादापूर्णरोदोनिकुंजम् ॥ ३७७ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि रावणवधो नाम सप्तमः सर्गः समाप्तः ॥

---

१ मन्त्रनिर्णयः।

## ॥ अथाष्टमः सर्गः प्रारभ्यते ॥

अथो बिभीषणस्तत्र कांदिशीकान्निशाचरान् । एवमाश्वासयामास ज्ञातिस्नेहवशीकृतः ॥ १ ॥
पद्मनारायणावेतावष्टमौ बलशार्ङ्गिणौ । शरण्यौ शरणायाशु श्रयध्वमविशंकिताः ॥ २ ॥
ते सर्वे शिश्रियुः पद्मसौमित्री तौ च चक्रतुः । तेषां प्रसादं वीरा हि प्रजासु समदृष्टयः ॥ ३ ॥
हतं च भ्रातरं दृष्ट्वा शोकावेशाद्बिभीषणः । मर्तुकामः स्वयमपि चकर्ष छुरिकां निजाम् ॥ ४ ॥
तया स्वकुक्षिमाघ्रातं दध्रे रामो बिभीषणम् । हा भ्रातर्भ्रातरित्युच्चैः क्रंदन्तं करुणाक्षरम् ॥ ५ ॥
मंदोदर्यादिभिः सार्धं रुदन्तमुपरावणम् । इति तं बोधयामास पद्मनाभः सलक्ष्मणः ॥ ६ ॥
ईदृक्पराक्रमः सोऽयं न हि शोच्यो दशाननः । यस्याशशंकिरे दूरे समरेष्वमरा अपि ॥ ७ ॥
वीरवृत्त्यानया मृत्युं गतोऽसौ कीर्तिभाजनम् । तदस्योत्तरकार्याणि कुरुध्वं रुदितैरलम् ॥ ८ ॥
इत्युदित्वा पद्मनाभो महात्मा प्राप्तबंधनान् । कुंभकर्णेन्द्रजिन्मेघवाहनादीनमोचयत् ॥ ९ ॥
बिभीषणः कुंभकर्णः शक्रजिन्मेघवाहनः । मन्दोदर्यपि संभूयापरेऽपि पतदश्रवः ॥ १० ॥
दशग्रीवांगसंस्कारं सद्यो गोशीर्षचन्दनैः । कर्पूरागरुसंमिश्रैर्विदधुर्ज्वालितानलैः ॥ ११ ॥
॥ युग्मम् ॥
पद्मः पद्मसरस्येत्य [1]ते च स्नात्वा जलांजलिम् । सममश्रुजलैः कोष्णैः[2] प्रददुर्दशमौलये ॥ १२ ॥
गिराभिरामया रामः किरन्निव सुधारसम् । सलक्ष्मणः कुंभकर्णप्रभृतीनित्यभाषत ॥ १३ ॥

---

१ बिभीषणादयः । २ ईषदुष्णैः ।

वः ॥ १४ ॥
पूर्ववत् स्वस्वराज्यानि कुरुध्वमधुनापि हि । युष्मल्लक्ष्म्या न नः कृत्यं हे वीराः क्षेममस्तु वः ॥ १४ ॥
इत्युक्ताः पद्मनाभेन युगपच्छोकविस्मयौ । बिभ्राणाः कुंभकर्णाद्या जगदुर्गद्गदाक्षरम् ॥ १५ ॥
नार्थो राज्येन नः कश्चित्प्राज्येनापि महाभुज । ग्रहीष्यामः परिव्रज्यां मोक्षसाम्राज्यसाधनीम् ॥ १६ ॥
अत्रांतरे च कुसुमायुधोद्याने महामुनिः । अप्रमेयबलो नाम चतुर्ज्ञानी समाययौ ॥ १७ ॥
तत्रैव निशि तस्याभूत् केवलज्ञानमुज्ज्वलम् । चक्रुश्च केवलज्ञानमहिमानं दिवौकसः ॥ १८ ॥
प्रातश्च रामसौमित्री कुंभकर्णादयश्च ते । उपेत्य तमवन्दन्त ततो धर्मं च शुश्रुवुः ॥ १९ ॥
पप्रच्छतुर्देशनांते शक्रजिन्मेघवाहनौ । परं वैराग्यमापन्नौ पुरातनभवान्निजान् ॥ २० ॥
मुनिः सोऽथाब्रवीत्पुर्यां कौशांब्यामिह भारते । निःस्वौ बन्धू युवां जातौ नाम्ना प्रथमपश्चिमौ ॥ २१ ॥
तावन्यदा भवदत्ताद्धर्मं श्रुत्वा महामुनेः । व्रतं जगृहतुः शांतकषायौ च विजहतुः ॥ २२ ॥
अन्येद्युस्तौ तु कौशांब्यां गतौ ददृशतुर्नृपम् । पत्न्येन्दुमुख्या क्रीडन्तं नन्दिघोषं मधूत्सवे[1] ॥ २३ ॥
तं दृष्ट्वा पश्चिमोऽकार्षीन्निदानं तपसामुना । ईदृक्क्रीडापरः पुत्रो भूयासमनयोरहम् ॥ २४ ॥
साधुभिर्वार्यमाणोऽपि निदानान्न न्यवर्तत । मृत्वा च पश्चिमो जज्ञे तयोस्तुग्रतिवर्धनः[2] ॥ २५ ॥
क्रमेणोद्यौवनः प्राप्तराज्यः स रतिवर्धनः । पितेव रेमे विविधं रमणीभिः समावृतः ॥ २६ ॥
मृत्वा प्रथमसाधुस्तु निर्निदानतपोवशात् । बभूव पंचमे कल्पे त्रिदशः परमर्द्धिकः ॥ २७ ॥

१ वसंतोत्सवे । २ तुक् पुत्रः ।

सोऽवधेर्भ्रातरं ज्ञात्वा तत्रोत्पन्नं महीपतिम् । तं बोधयितुमभ्यागान्मुनिरूपधरः सुरः ॥ २८ ॥
रतिवर्धनराजेनार्पिते पट्टे[1] निपद्य सः । शशंस प्राग्भवं तस्य स्वस्य च भ्रातृसौहृदात् ॥ २९ ॥
संजातजातिस्मरणाद्विरक्तो रतिवर्धनः । प्राव्राजीदथ मृत्वा च ब्रह्मलोके सुरोऽभवत् ॥ ३० ॥
च्युत्वा ततो विदेहेषु विबुद्धनगरे युवाम् । अभूतं भ्रातरौ भूपौ प्रव्रज्याच्युतमीयथुः ॥ ३१ ॥
च्युत्वाच्युताद्दशास्यस्य प्रतिविष्णोस्तु संप्रति । पुत्रौ युवामजायेथामिन्द्रजिन्मेघवाहनौ ॥ ३२ ॥
रतिवर्धनमाता तु भवं भ्रांत्वेन्दुमुख्यपि । मन्दोदरी समभवज्जननी युवयोरियम् ॥ ३३ ॥
कुंभकर्णेन्द्रजिन्मेघवाहनाद्या निशम्य तत् । मन्दोदर्यादयश्चापि तदैवाददिरे व्रतम् ॥ ३४ ॥
मुनिं नत्वा तु तं रामः ससौमित्रिकपीश्वरः । बिभीषणेन प्रह्वेण[2] वेत्रिणेवाग्रगामिना ॥ ३५ ॥
दर्श्यमानपथो विद्याधरीभिः कृतमंगलः । ऋद्ध्या महत्येन्द्र इव लंकायां प्राविशत्पुरि ॥ ३६ ॥
॥ युग्मम् ॥
गिरेः पुष्पगिरेर्मूर्धन्युद्याने तत्र मैथिलीम् । गत्वा ददर्श काकुत्स्थो यथाख्यातां हनूमता ॥ ३७ ॥
तामुत्क्षिप्य निजोत्संगे द्वितीयमिव जीवितम् । तदैव जीवितंमन्यो धारयामास राघवः ॥ ३८ ॥
इयं महासती सीता जयत्विति मरुत्पथे[3] । तदानीं जुघुषुः सिद्धगंधर्वाद्याः प्रमोदिनः ॥ ३९ ॥
सीतादेव्या नमश्चक्रे पादौ प्रक्षालयन्निव । निरंतरैरश्रुजलैः सुमित्रानन्दनो मुदा ॥ ४० ॥
चिरं जीव चिरं नंद चिरं जय मदाशिषा । इति ब्रुवाणा वैदेही जघ्रौ शिरसि लक्ष्मणम् ॥ ४१ ॥

---

१ आसने । २ नम्रेण । ३ आकाशे ।

भामंडलो नमश्चक्रे सीतां सीतापि तं मुदा । आशिषानंदयामास मुनिवाक्यसमानया ॥ ४२ ॥
स्वनामाख्यानपूर्वं च कपिराजो बिभीषणः । हनुमानंगदोऽन्येऽपि प्रणेमुर्जनकात्मजाम् ॥ ४३ ॥
पार्वणेन शशांकेन चिरात् कुमुदिनीव सा । रामेण शुशुभे सीता विकाशं समुपेयुषी ॥ ४४ ॥
ससीतोऽध्यास्य भुवनालंकारं राघवो गजम् । जगाम रावणावासं सुग्रीवाद्यैः समावृतः ॥ ४५ ॥
तदन्तश्च मणिस्तंभसहस्रांकं जिनेशितुः । चैत्यं श्रीशांतिनाथस्य प्रविवेश विवंदिषुः ॥ ४६ ॥
शांतिमानर्च काकुत्स्थः सीतासौमित्रिसंयुतः ॥ ४७ ॥
बिभीषणार्पितैस्तत्र कुसुमाद्यैरुपस्करैः । रामः ससीतासौमित्रिः सुग्रीवादिभिरन्वितः ॥ ४८ ॥
बिभीषणाभ्यर्थितोऽथ बिभीषणगृहं ययौ । चक्रे सपरिवारोऽपि मानयन् रावणानुजम् ॥ ४९ ॥
तत्र देवार्चनं स्नानभोजनादि च राघवः । वाससी परिधायोभे बभाषेऽथ कृतांजलिः ॥ ५० ॥
रामं सिंहासनासीनमग्रासीनो बिभीषणः । अयं च राक्षसद्वीपो गृह्यतां पत्तिरस्मि ते ॥ ५१ ॥
रत्नस्वर्णादिकोशोऽयमिदं हस्तिहयादि च । पवित्रय पुरीं लंकां प्रसीदानुगृहाण माम् ॥ ५२ ॥
राज्याभिषेकमधुना कुर्महे ते त्वदाज्ञया । महात्मन् भक्तिमोहितः ॥ ५३ ॥
रामोऽप्युवाच दत्तं ते लंकाराज्यं मया पुरा । व्यस्मार्षीस्तदिदानीं किं प्रतिज्ञातार्थपालकः ॥ ५४ ॥
एवं निषिध्य तं पद्मो लंकाराज्ये तदैव हि । अभ्यषिंचत् स्वयं प्रीतः सुधर्मायामिवाद्रिभित् ॥ ५५ ॥
सीतासौमित्रिसुग्रीवप्रमुखैरावृतो ययौ । रामोऽथ रावणगृहे विद्याधरोत्तमाः ॥ ५६ ॥
तत्र सिंहोदरादीनामुद्वोढुं प्राक् प्रतिश्रुताः[3] । कन्या रामाज्ञयानैषुस्तत्र

१ पूर्णिमासंबंधिना । २ इंद्रः । ३ अंगीकृताः ।

॥१०४॥

अथ स्वस्वप्रतिपन्नास्ताः कुमारीर्यथाविधि । राघवावुपयेमाते खेचरीगीतमंगलौ ॥ ५७ ॥
भोगांस्तत्रोपभुंजानौ निर्विघ्नं रामलक्ष्मणौ । सुग्रीवाद्यैः सेव्यमानौ पक्षान्दीमतिनिन्यतुः ॥ ५८ ॥
अत्रांतरे विन्ध्यस्थल्यामिन्द्रजिन्मेघवाहनौ । तौ सिद्धिमीयतुर्जज्ञे तीर्थं मेघरथं च तत् ॥ ५९ ॥
नर्मदायां कुम्भकर्णो नद्यां सिद्धिमियाय च । पृष्टरक्षितमित्यासीत्तत्तीर्थं चाभिधानतः ॥ ६० ॥
इतश्च साकेतपुरे रामलक्ष्मणमातरौ । तद्वार्तामप्यजानंत्यौ तस्थतुर्भृशदुःखिते ॥ ६१ ॥
तदा च धातकीखंडादागतस्तत्र नारदः । पप्रच्छ भक्तिनम्रे ते विमनस्के कुतो युवाम् ॥ ६२ ॥
अथापराजितोवाच पुत्रौ मे रामलक्ष्मणौ । पित्राज्ञया वनं यातौ स्नुषया सीतया सह ॥ ६३ ॥
सीतापहाराल्लंकायां जग्मतुस्तौ महाभुजौ । रावणेन रणे शक्त्या लक्ष्मणस्ताडितः किल ॥ ६४ ॥
शक्तिशल्योद्धरणाय विशल्यानायि तत्र च । न विद्मो यदभूत्किंचिद्वत्सो जीवति वा न वा ॥ ६५ ॥
अभिधायेति हा वत्स वत्सेति करुणस्वरम् । रुरोद सा रोदयंती सुमित्रामपि निर्भरम् ॥ ६६ ॥
ततस्ते नारदोऽवोचद्भवतं सुस्थिते युवाम् । युष्मत्पुत्रावुपेष्यामि तथानेष्यामि ताविह ॥ ६७ ॥
तयोरेवं प्रतिश्रुत्य नारदो गगनाध्वना । जनश्रुत्या ज्ञातवृत्तो लंकायां राममन्यगात् ॥ ६८ ॥
सत्कृत्य पृष्टो रामेण किमत्रागा इति स्वयम् । तन्मातृदुःखवृत्तान्तमाचख्यौ नारदोऽखिलम् ॥ ६९ ॥
सद्यः सरणरणकः पद्मोऽवादीद्विभीषणम् । विस्मृत्य दुःखं मातॄणां त्वद्भक्त्यास्थामिहाधिकम् ॥ ७० ॥
अस्मद्दुःखाद्विपद्यंते न यावन्मातरो हि नः । तावत्तत्राद्य यास्यामोऽनुमन्यस्व महाशय ॥ ७१ ॥

१ रणरणकेनोद्वेगेन सहितः ।

नत्वा विभीषणोऽप्यूचे तिष्ठात्राहानि षोडश । यावत् स्वैः शिल्पिभी रम्यां तामयोध्यां करोम्यहम् ७२
एवमस्त्विति रामोक्तः स विद्याधरशिल्पिभिः । दिनैः षोडशभिश्चक्रेऽयोध्यां स्वर्गपुरीनिभाम् ॥ ७३ ॥
तदा रामेण सत्कृत्य विसृष्टो नारदो ययौ । आख्यच्च राममातॄणां पुत्रागममहोत्सवम् ॥ ७४ ॥
अथाह्नि षोडशे सांतःपुरावारुह्य पुष्पकम् । शक्रेशानाविवैकस्थौ प्रतस्थाते रघूद्वहौ ॥ ७५ ॥
रावणानुजसुग्रीवभामंडलनृपादिभिः । अन्वीयमानौ नगरीमयोध्यां चेयतुः क्षणात् ॥ ७६ ॥
आयांतौ पुष्पकारूढौ दूरादपि निरीक्ष्य तौ । अन्यगात्कुंजरारूढो भरतः सानुजोऽपि हि ॥ ७७ ॥
आयाति भरते रामाज्ञयोपक्ष्मिति पुष्पकम् । जगाम पालकमिव पाकशासनशासनात् ॥ ७८ ॥
आदावप्युत्ततारेभाद्भरतो भ्रातृसंयुतः । उत्तेरतुः पुष्पकाच्च सोत्कंठौ रामलक्ष्मणौ ॥ ७९ ॥
पादयोः पतितं रामो भरतं साश्रुलोचनम् । परिरेभे समुत्थाप्य मूर्ध्नि चुंबन् मुहुर्मुहुः ॥ ८० ॥
शत्रुघ्नमपि पादांते लुठंतं रघुपुंगवः । उत्थाप्य परिमृज्य स्वांशुकेन परिषस्वजे ॥ ८१ ॥
ततो भरतशत्रुघ्नौ नमंतौ लक्ष्मणोऽपि हि । प्रसारितभुजो बाढमालिलिंग ससंभ्रमः ॥ ८२ ॥
आरोहदनुजैः सार्धं त्रिभी रामोऽथ पुष्पकम् । समादिदेश चायोध्याप्रवेशाय कृतत्वरः ॥ ८३ ॥
तूर्येषु व्योम्नि भूमौ च वाद्यमानेष्वथोन्मुदौ । अयोध्यां रामसौमित्री निजां प्राविशतां पुरीम् ॥ ८४ ॥
सोत्कंठैरुन्मुखैः पौरैर्मयूरैरिव वारिदौ । निर्निमेषैः प्रेक्ष्यमाणौ स्तूयमानौ च निर्भरम् ॥ ८५ ॥
अर्कवद्दीयमानार्घौ स्थाने स्थाने पुरीजनैः । स्वं प्रासादं प्रसन्नास्यौ जग्मतू रामलक्ष्मणौ ॥ ८६ ॥

१ इन्द्रशासनात् । २ स्ववस्त्रेण । ३ सूर्यवद्दीयमानोऽर्घः पूजोपचारविशेषो याभ्यां तौ ।

उत्तीर्य पुष्पकात्तत्र रामः सौमित्रिणा सह । जगाम मातृसदनं सुहृद्हृदयनंदनः ॥ ८७ ॥
रामोऽपराजितां देवीं मातृवर्गमथापरम् । नमश्चक्रे ससौमित्रिस्ताभिश्चाशीर्भिरैध्यत ॥ ८८ ॥
अथ सीताविशल्याद्याः प्रणेमुरपराजिताम् । श्वश्रूरन्याश्च तत्पादपद्मेषु निहिताळकाः[1] ॥ ८९ ॥
अस्मद्वद्वीरै[2]प्रकांडप्रसविन्योऽस्मदाशिषा । भूयास्त यूयमिति ताः श्वश्वोऽप्याशासतोच्चकैः ॥ ९० ॥
अथापराजिता देवी भूयो भूयोऽपि लक्ष्मणम् । स्पृशंती पाणिना मूर्ध्नि चुंबंती चैवमब्रवीत् ॥ ९१ ॥
दिष्ट्या दृष्टोऽसि हे वत्स पुनर्जातोऽसि चाधुना । कृत्वा विदेशगमनं विजयीह यदागमः ॥ ९२ ॥
तानि तानि च कष्टानि वनवासभवान्यसौ । रामः सीता चातिनिन्ये तवैव परिचर्यया ॥ ९३ ॥
लक्ष्मणोऽप्यवदत्तातेनेवार्येणातिलालितः । त्वयेव सीतादेव्या च वनेऽप्यस्थामहं सुखम् ॥ ९४ ॥
स्वेच्छाद्दुर्ललितैर्मे चार्यस्य वैराणि जज्ञिरे । सीतापहारो यन्मूलः किमन्यद्देवि गद्यते ॥ ९५ ॥
परं तु युष्मदाशीर्भिर्लंघित्वा वैरिसागरम् । मातः सपरिवारोऽपि क्षेमेणार्य इहाययौ ॥ ९६ ॥
अथोत्सवमयोध्यायां भरतोऽकारयन्मुदा । पुरतो रामपादानां पत्तिमात्रत्वमाचरन् ॥ ९७ ॥
अन्यदा रामभद्रं तु प्रणम्य भरतोऽभ्यधात् । आर्य त्वदाज्ञया राज्यमियत्कालं मया धृतम् ॥ ९८ ॥
प्राव्रजिष्यं तदैवाहं तातपादैः सह प्रभो । अर्गला नाभविष्यच्चेदार्याज्ञा राज्यपालने ॥ ९९ ॥
मां व्रतायानुमन्यस्व स्वयं राज्यं प्रतीच्छ[3] च । भवोद्विग्नस्त्वयि प्राप्ते न ह्यतः स्थातुमुत्सहे ॥ १०० ॥
रामोऽप्युदश्रुस्तं स्माह किमेवं वत्स भाषसे । कुरु राज्यं त्वमेवेह त्वय्युत्का[4] वयमागताः ॥ १०१ ॥

१ स्थापितकेशाः । २ वीरपुत्रप्रसविन्यः । ३ गृहाण । ४ त्वयि उत्का उत्कंठिताः ।

त्यजन्नः सह राज्येन भूयस्त्वद्विरहव्यथाम् । किं दत्से वत्स तत्तिष्ठ कुर्वाज्ञां मम पूर्ववत् ॥ १०२ ॥
इत्याग्रहपरं रामं ज्ञात्वा नत्वा च सोऽचलत् । यावत्सौमित्रिणा तावदुत्थायाधारि पाणिना ॥ १०३ ॥
भरतं च तथा यांतं व्रताय कृतनिश्चयम् । ज्ञात्वा सीताविशल्याद्यास्तत्राजग्मुः ससंभ्रमाः ॥ १०४ ॥
विस्मारयितुकामास्ता भरतस्य व्रताग्रहम् । जलक्रीडाविनोदार्थमर्थनां चक्रिरेतराम् ॥ १०५ ॥
उपरोधेन तासां च ययौ सांतःपुरोऽपि सः । क्रीडासरसि चिक्रीड विरक्तोऽपि मुहूर्तकम् ॥ १०६ ॥
जलान्निर्गत्य भरतस्तीरेऽस्थाद्राजहंसवत् । स्तंभमुन्मूल्य भुवनालंकारस्तत्र चाययौ ॥ १०७ ॥
मदांधोऽप्यमदः सोऽभूत् सद्यो भरतदर्शनात् । तद्दर्शनेन भरतोऽप्यवाप परमां मुदम् ॥ १०८ ॥
संभ्रमाद्रामसौमित्री तस्योपद्रवकारिणः । करिणो बंधनायाशु ससामंतावुपेयतुः ॥ १०९ ॥
रामाज्ञया हस्तिपकैः स स्तंभे हस्त्यनीयत । आगतौ च मुनी देशभूषणः कुलभूषणः ॥ ११० ॥
उद्याने समवसृतौ वंदितुं तौ महामुनी । प्रययुः पद्मसौमित्रिभरताः सपरिच्छदाः ॥ १११ ॥
वंदित्वा तौ च पप्रच्छ रामो मम करी कथम् । अमदोऽजनि भुवनालंकारो भरतेक्षणात् ॥ ११२ ॥
अथाख्यत्केवली देशभूषणो नाभिसूनुना । समं सहस्राश्चत्वारो राजानः प्राव्रजन् पुरा ॥ ११३ ॥
ते तु स्वामिन्यनाहारे कृतमौने विहारिणि । निर्विण्णा जज्ञिरे सर्वे तापसा वनवासिनः ॥ ११४ ॥
प्रह्लादनसुप्रभराट्तनयौ तेषु तापसौ । चिरं चंद्रोदयसूरोदयाख्यौ भ्रेमतुर्भवम् ॥ ११५ ॥
चंद्रोदयो गजपुरे राज्ञो हरिमतेरभूत् । भार्यायां चंद्रलेखायां सूनुर्नाम्ना कुलंकरः ॥ ११६ ॥

१ प्रार्थनाम् । २ तापसा जाता इति संबधः ।

सूरोदयोऽपि तत्रैव विश्वभूतेर्द्विजन्मनः । भार्यायामग्निकुंभाया नाम्ना श्रुतिरतिः सुतः ॥ ११७ ॥
अभूत् कुलंकरो राजा स गच्छंस्तापसाश्रमम् । अवधिज्ञानिनेत्यूचे चाभिनंदनसाधुना ॥ ११८ ॥
तप्यमानेन पंचाग्नितपस्तत्र तपस्विना । दग्धुमानीतकाष्ठस्य मध्ये तिष्ठति पन्नगः ॥ ११९ ॥
सोऽहिः पुरा भवे क्षेमंकराख्यस्ते पितामहः । तद्दारु दारयित्वा तं यत्नादाकृष्य रक्ष भोः ॥ १२० ॥
आकुलस्तद्वचः श्रुत्वा गत्वा तद्दार्वदारयत् । ददर्शान्तःस्थितं चाहिं राजा विस्मयते स्म च ॥ १२१ ॥
आदित्सते स्म प्रव्रज्यां यावद्राजा कुलंकरः । द्विजः श्रुतिरतिः सोऽथ तावदेवमवोचत ॥ १२२ ॥
धर्मो नाम्नायिको वोऽयं[1] निर्बंधश्चेत्तवान्तिमे । दीक्षा वयस्युपादेया किं संप्रत्यपि खिद्यते ॥ १२३ ॥
राजापि तद्गिरा भग्नदीक्षोत्साहो मनागपि । मया किमत्र कर्तव्यमिति ध्यायन्नवास्थितः ॥ १२४ ॥
श्रीदामाख्याथ तद्राज्ञी सदा सक्ता पुरोधसा । नूनं मां ज्ञातवानेष इत्याशंकत दुर्मतिः ॥ १२५ ॥
आवां यावन्न हंत्येष तावद्धन्मीति सा विषम् । पुरोधोऽनुमता दत्वा कुलंकरममारयत् ॥ १२६ ॥
क्रमाच्छ्रुतिरतिः सोऽपि मृतो भूयोऽप्युभावपि । चिरं भवं भ्रेमतुस्तौ नानायोनिनिपातिनौ ॥ १२७ ॥
पुरेऽन्यदा राजगृहे कपिलब्रह्मणः सुतौ । सावित्र्यां युग्मतोऽभूतां विनोदरमणाभिधौ ॥ १२८ ॥
रमणो वेदमध्येतुं ययौ देशांतरं ततः । कालेनाधीतवेदः सन्नागाद्राजगृहं निशि ॥ १२९ ॥
अकालोऽसाविति धिया तदास्थाद्बहिरेव सः । सर्वसाधारणेऽस्वाप्सीदेकस्मिन् यक्षमंदिरे ॥ १३० ॥
विनोदभार्या शाखाख्या दत्तेन ब्रह्मणा समम् । तत्रागात्कृतसंकेता विनोदोऽपि हि तामनु ॥ १३१ ॥

१ अयं धर्म आम्नायिको वैदिको नास्तीति संबंधः ।

सा दत्तबुद्ध्या रमणमुत्थाप्यारमयत्तदा । विनोदोऽप्यसिमाकृष्य तं जघानाविशंकितः ॥ १३२ ॥
शाखया रमणश्चुर्या विनोदोऽपि हतस्तदा । चिरं भ्रांत्वा भवं चाभूदिभ्यपुत्रो धनाभिधः ॥ १३३ ॥
रमणोऽपि भवं भ्रांत्वा धनस्यैवाभवत्सुतः । लक्ष्मीकुक्षिसमुद्भूतो भूषणो नामधेयतः ॥ १३४ ॥
द्वात्रिंशदिभ्यकन्याः स धनोक्तः परिणीतवान् । ताभिः क्रीडन्नन्यदास्थान्निशि स्वगृहमूर्धनि ॥ १३५ ॥
तत्र यामे निशस्तुर्ये श्रीधरस्य महामुनेः । उत्पन्ने केवलेऽद्राक्षीद्देवैरारब्धमुत्सवम् ॥ १३६ ॥
जातधर्मपरीणामः सद्योऽप्युत्तीर्य वेश्मतः । तं वंदितुमचालीच्च मार्गे दष्टश्च सोऽहिना ॥ १३७ ॥
शुभेन परिणामेन भ्रांत्वा शुभगतीश्चिरम् । जंबूद्वीपेऽत्र विदेहे पुरे रत्नपुरे पुरे ॥ १३८ ॥
महिष्यां हरिणीनाम्न्यामचलाख्यस्य चक्रिणः । प्रियदर्शननामाभूत् स सूनुर्धर्मतत्परः ॥ १३९ ॥
स प्रविव्रजिषुः पित्रनुरोधात्परिणीतवान् । त्रीणि कन्यासहस्राणि संविग्नोऽस्थात्तथापि हि ॥ १४० ॥
चतुःषष्टिसहस्राणि वर्षाणां स तपः परम् । चरित्वा गृहवासेऽपि ब्रह्मलोके सुरोऽभवत् ॥ १४१ ॥
भ्रांत्वा धनोऽपि संसारं स पोतनपुरेऽभवत् । शकुनाभिमुखब्राह्मपत्न्यां मृदुमतिः सुतः ॥ १४२ ॥
स पित्रा दुर्विनीतत्वाद्गृहान्निर्वासितोऽभ्रमत् । धूर्तः सर्वकलाकल्पो भूत्वा भूयोऽप्यगाद्गृहम् ॥ १४३ ॥
सदा दिदेवं द्यूतेन न त्वजीयत केनचित् । दिने दिने देवकेभ्यो भूयिष्ठमजयद्धनम् ॥ १४४ ॥
वसन्तसेनया सार्धं भुक्त्वा भोगान् स वेश्यया । अन्ते गृहीतश्रामण्यो ब्रह्मलोके सुरोऽभवत् ॥१४५॥
च्युत्वा पूर्वभवमायादोषाद्वैताढ्यपर्वते । अयं बभूव भुवनालंकारो नाम कुंजरः ॥ १४६ ॥

१ शकुना नाम्नो अभिमुखब्राह्मणः पत्नी चेति समासः तस्याम् । २ सर्वकलासु योग्यः । ३ विवेन निर्भीत ।

प्रियदर्शनजीवोऽपि ब्रह्मलोकात् परिच्युतः । बभूव भरतो भ्राता भवतोऽयं महाभुजः ॥ १४७ ॥
भरतालोकनाजातजातिस्मृतिरसौ गजः । सद्यो गतमदो जज्ञे विवेके हि न रौद्रता ॥ १४८ ॥
इति पूर्वभवाच्छ्रुत्वा विरक्तो भरतोऽधिकम् । व्रतं राजसहस्रेणाग्रहीन्मोक्षमियाय च ॥ १४९ ॥
सहस्रं तेऽपि राजानः पालयित्वा चिरं व्रतम् । नानालब्धिजुषो भूत्वानुरूपं पदमासदन् ॥ १५० ॥
कुंजरः सोऽपि वैराग्याद्विधाय विविधं तपः । प्रपन्नानशनो मृत्वा ब्रह्मलोके सुरोऽभवत् ॥ १५१ ॥
व्रतं भरतमातापि कैकेयी समुपाददे । पालयित्वा निष्कलंकं प्रपेदे पदमव्ययम् ॥ १५२ ॥
भरते च प्रव्रजिते भूपा भूचरखेचराः । अर्थयांचक्रिरे राममभिषेकाय भक्तितः ॥ १५३ ॥
लक्ष्मणो वासुदेवोऽयं भवद्भिरभिषिच्यताम् । तानेवमादिशद्रामस्ते तथैवाशु चक्रिरे ॥ १५४ ॥
बलदेवत्वाभिषेकं रामभद्रस्य च व्यधुः । राज्यं द्वावप्यपातां चाष्टमौ तौ बलशार्ङ्गिणौ ॥ १५५ ॥
पद्मो बिभीषणायादाद्रक्षोद्वीपं क्रमागतम् । सुग्रीवाय कपिद्वीपं श्रीपुरं च हनूमते ॥ १५६ ॥
विराधाय तु पातालंकामृक्षपुरं पुनः । नीलाय प्रतिसूर्याय पुरं हनुपुरं पुनः ॥ १५७ ॥
देवोपगीतनगरं तद्रत्नजटिने पुनः । भामंडलाय वैताढ्ये नगरं रथनूपुरम् ॥ १५८ ॥
अन्येभ्योऽपि प्रदायैवं रामः शत्रुघ्नमभ्यधात् । यस्तुभ्यं रोचते वत्स तं देशमुररीकुरु ॥ १५९ ॥
मथुरां मे प्रयच्छेति शत्रुघ्नेनार्थितः पुनः । रामो जगाद दुःसाध्या सा वत्स मथुरा पुरी ॥ १६० ॥
तत्र राज्ञो मधोः शूलं चमरेण पुरार्पितम् । दूरात् परबलं सर्वं निहत्याभ्येति तत्करे ॥ १६१ ॥
शत्रुघ्नोऽप्येवमवदद्देव रक्षःकुलान्तक । तवास्मि नन्वहं भ्राता त्राता कस्तस्य मद्युधि ॥ १६२ ॥

प्रतीकारं करिष्यामि व्याधेरिव भिषग्वरः ॥ १६३ ॥
प्रयच्छ मथुरां मह्यं स्वयमेव मधोरहम् । शत्रुघ्नमत्याग्रहिणं ज्ञात्वा रामोऽन्वशादिति । अपशूलः[1] प्रमत्तश्च योधनीयो मधुस्त्वया ॥ १६४ ॥
कृतांतवदनं नाम सेनान्यं च सहादिशत् ॥ १६५ ॥
अनुशिष्येत्यदाद्रामस्तूणावक्षय्यसायकौ[2] । लक्ष्मणोऽपि ददौ तस्मायाशंसन् विजयं परम् ॥ १६६ ॥
शिलीमुखानग्निमुखानर्णवावर्तधन्व च । ययावुपमधूपघ्नमवात्सीच्च[3] नदीतटे ॥ १६७ ॥
ततः प्रतस्थे शत्रुघ्नः प्रयाणैश्च निरंतरैः । गतः कुबेरोद्यानेऽस्ति मथुरापूर्वदिक्स्थिते ॥ १६८ ॥
तत्रादौ प्रेषिताश्चारास्तस्याख्यन्नेत्य यन्मधुः । अस्त्रागारे च तच्छूलं कालोऽयं तस्य योधने ॥ १६९ ॥
पत्न्या जयंत्या सार्धं स तत्र क्रीडापरोऽधुना । प्रविशंतं मधुं तत्र रुरोध च बलैः स्वयम् ॥ १७० ॥
ततश्छलज्ञः शत्रुघ्नः प्राविशन्मथुरां निशि । रामायणरणारंभे खरं नारायणो यथा ॥ १७१ ॥
जघान समरे चादौ लवणं मधुनंदनम् । युयुधे दाशरथिना रथिना रथिनां वरः ॥ १७२ ॥
मधुः सुतवधक्रुद्धो धावित्वा स्फालयन् धनुः । शस्त्राशस्त्रि प्रचक्राते चिरं देवासुराविव ॥ १७३ ॥
अन्योऽन्यमस्त्रैरस्त्राणि छिंदानौ तावुभावपि । सौमित्रिदत्तानस्मार्षीत्तुर्यो दशरथात्मजः ॥ १७४ ॥
धनुः समुद्रावर्तं चाग्निमुखांश्च शिलीमुखान् । तैर्जघान मधुं वीरः शार्दूलमिव लुब्धकः ॥ १७५ ॥
तत्स्मृतोपनतं धन्वाधिज्यीकृत्याग्निपत्रिभिः[4] । शूलं पाणौ न मेऽन्यागान्न हतो लक्ष्मणानुजः ॥ १७६ ॥
तद्बाणघातविधुरो मधुरेवमचिंतयत् । कारितानि न चैत्यानि दत्तं पात्रेषु नो मया ॥ १७७ ॥
गतं मम मुधा जन्म जिनेन्द्रो न यदर्चितः ।

१ शूलरहितः । २ अक्षय्याः सायका इषवो ययोस्तौ । ३ मधूपघ्नस्य समीपम् । ४ अग्निशरः ।

इति ध्यायन्नात्तदीक्षो[1] नमस्कारपरायणः । मृत्वा सनत्कुमारेऽभून्मधुर्देवो महर्द्धिकः ॥ १७८ ॥
मधुदेहस्योपरिष्टात्तद्विमानसुरा व्यधुः । पुष्पवृष्टिं जुघुषुश्च मधुर्देवो जयत्विति ॥ १७९ ॥
तच्छूलं देवतारूपमुपेत्य चमरांतिके । शत्रुघ्नान्मधुनिधनं छलोत्पन्नं शशंस च ॥ १८० ॥
ततो मित्रवधामर्षाच्चमरः प्राचलत् स्वयम् । पृष्टः क्व यासीति तार्क्ष्यस्वामिना वेणुदारिणा ॥ १८१ ॥
हंतुं स्वमित्रहन्तारं शत्रुघ्नं मथुरास्थितम् । यास्यामीति तदाख्याते वेणुदार्यवदत्पुनः ॥ १८२ ॥
धरणेन्द्राद्रावणेन या लब्धा सापि निर्जिता । शक्तिः सौमित्रिणा पुण्यप्रकृष्टेनार्धचक्रिणा ॥ १८३ ॥
रावणोऽपि हतस्तेन तत्पत्तिस्तु कियान् मधुः । शत्रुघ्नो लक्ष्मणादेशादवधीत् प्रधने[2] मधुम् ॥ १८४ ॥
उवाच चमरेन्द्रो यच्छक्तिः सौमित्रिणा जिता । कन्यकाया विशल्यायाः प्रभावेण तदा खलु ॥ १८५ ॥
तस्याश्चाब्रह्मचारिण्याः स प्रभावो गतोऽधुना । किं वा तेनेन[3] यास्यामि तं हंतुं मित्रघातकम् ॥ १८६ ॥
इत्युक्त्वा चमरो रोषाच्छत्रुघ्नविषयं ययौ । सौराज्यसुस्थितं तत्र सर्वं लोकं ददर्श च ॥ १८७ ॥
प्राक् प्रजोपद्रवेणोपद्रवाम्येतं मधुद्विषम् । इति बुद्ध्या व्यधाद्व्याधीन् विविधांस्तत्प्रजासु सः ॥ १८८ ॥
कुलदेवतया तच्च ज्ञापितो व्याधिकारणम् । शत्रुघ्नोऽगादयोध्यायां रामलक्ष्मणसंनिधौ ॥ १८९ ॥
तौ देशभूषणकुलभूषणावागतौ तदा । रामलक्ष्मणशत्रुघ्ना उपेत्य च ववंदिरे ॥ १९० ॥
आग्रही हेतुना केन शत्रुघ्नो मथुरां प्रति । इति रामेण पृष्टः सन् बभाषे देशभूषणः ॥ १९१ ॥
शत्रुघ्नजीव उत्पद्य मथुरायामनेकशः । विप्रोऽभूच्छ्रीधरो नाम रूपवान् साधुसेवकः ॥ १९२ ॥

---

१ गृहीतदीक्षो भावचारित्रवानित्यर्थः । २ युद्धे । ३ हे इन स्वामिन् ।

सोऽन्यदाध्वनि यन्राजमहिष्या ललिताख्यया । दृष्टो रागादथानायि स्वांतिके रंतुकाम्यया ॥ १९३ ॥
आगाच्चातर्कितो राजा क्षुभिता ललितापि च । चौरोऽसाविति पूच्चक्रे राज्ञाधारि स तु द्विजः ॥१९४॥
राजादेशाद्वधार्थं स वधस्थानमनीयत । प्रतिज्ञातव्रतोऽमोचि कल्याणमुनिना ततः ॥ १९५ ॥
विमुक्तः प्राव्रजत् सोऽपि तपस्तप्त्वा दिवं ययौ । च्युत्वाजून्मथुरापुर्यां चन्द्रभद्रनृपात्मजः ॥ १९६ ॥
स कांचनप्रभाराज्ञीकुक्षिभूरचलाभिधः । अत्यन्तवल्लभश्चासीच्चन्द्रभद्रस्य भूपतेः ॥ १९७ ॥
भानुप्रभाद्यैः सापत्नैः सोऽचलोऽष्टभिरग्रजैः । व्यापादयितुमारेभे राजायं मा स्म भूदिति ॥ १९८ ॥
तन्मंत्रे मंत्रिणाख्याते नंष्ट्वागादचलोऽन्यतः । भ्रमंश्चाविध्यत वने कंटकेन गरीयसा ॥ १९९ ॥
स क्रन्दन् पथि दृष्टश्च पुंसा श्रावस्तिवासिना । पितृनिर्वासितेनांकनाम्नैधोभारधारिणा ॥ २०० ॥
काष्ठभारं विमुच्यांकोऽपनिन्ये तस्य कंटकम् । हृष्टः स कंटकं दत्वोवाचांकं साधु भोः कृतम् ॥ २०१ ॥
अचलं मथुरापुर्यां त्वं शृणोषि यदा नृपम् । तदा तत्र समागच्छेः परमो ह्युपकार्यसि ॥ २०२ ॥
कौशांब्यामचलोऽथागात्तत्र सिंहगुरोः पुरः । इंद्रदत्तनृपं धन्वाभ्यस्यंतं समुदैक्षत ॥ २०३ ॥
सिंहेन्द्रदत्तयोः सोऽपि धानुष्कत्वमदर्शयत् । तस्मै दत्तामिन्द्रदत्तोऽदत्त पुत्रीं भुवा सह ॥ २०४ ॥
सोऽसाधयज्जातबलो देशानंगादिकांस्ततः । मथुरां चान्यदागच्छद्युयुधे चाग्रजैः सह ॥ २०५ ॥
भानुप्रभादीन् स भ्रातॄन् बद्ध्वाष्टावपि चाग्रहीत् । तन्मुक्त्यै मंत्रिणां प्रैषीच्चन्द्रभद्रोऽचलांतिके ॥२०६॥
आख्यत्तेषां स्ववृत्तांतमचलस्तेऽपि मंत्रिणः । विज्ञाय गत्वा चाचख्युश्चंद्रभद्राय सत्वरम् ॥ २०७ ॥

१ गच्छन् । २ काष्टभारवाहकेन । ३ दत्तानाम्नीम् । ४ पृथ्व्या ।

अचलं चंद्रभद्रोऽपि हृष्टः पुर्यामवीविशत् । क्रमेण निजराज्ये तं लघीयांसमपि न्यधात् ॥ २०८ ॥
पित्रा निर्वास्यमानांस्तान् भ्रातॄन् भानुप्रभादिकान् । कथंचिदचलोऽरक्षच्चक्रे चादृष्टसेवकान्[1] ॥ २०९ ॥
अन्यदा नटरंगस्थेनांको दृष्टोऽचलेन सः । हन्यमानः प्रतीहारैरानायि[2] च निजांतिके ॥ २१० ॥
तस्मै तज्जन्मभूमिं तां श्रावस्तीमचलो ददौ । तौ द्वौ संभूय चक्राते राज्यमद्वैतसौहृदौ ॥ २११ ॥
तावन्यदा प्राव्रजतां समुद्राचार्यसंनिधौ । मृत्वा कालेन चाभूतां ब्रह्मलोके सुरोत्तमौ ॥ २१२ ॥
च्युत्वा ततोऽचलजीवः शत्रुघ्नोऽभूत्तवानुजः । प्राग्जन्ममोहनीयेन ततोऽसौ मथुराग्रही ॥ २१३ ॥
च्युत्वा ततोंकजीवोऽपि सेनापतिरयं तव । कृतांतवदनो नाम समजायत राघव[3] ॥ २१४॥
इतश्च श्रीनंदनस्य प्रभापुरपुरेशितुः । भार्यायां धारणीनाम्न्यां सप्ताभूवन् क्रमात्सुताः ॥ २१५ ॥
सुरनन्दः श्रीनन्दः श्रीतिलकः सर्वसुंदरः । जयन्तश्चामरश्चापि जयमित्रश्च सप्तमः ॥ २१६ ॥
मासजातं सुतं[4] राज्ये न्यस्य श्रीनन्दनोऽन्यदा । गुरोः प्रीतिकरस्यांते प्राव्राजीत्तैः सुतैः सह ॥ २१७ ॥
श्रीनन्दनो ययौ मोक्षं सुरनन्दादयस्तु ते । सप्ताप्यासंस्तपःशक्त्या जंघाचारणलब्धयः ॥ २१८ ॥
विहरंतः पुरीं जग्मुर्मथुरां ते महर्षयः । प्रावृट् चाभूत्तदा तस्थुरधिशैलगुहागृहम् ॥ २१९ ॥
चक्रुः षष्ठाष्टमादीनि ते तपांसि सदापि हि । उत्पत्य दूरदेशेषु पारणं चक्रिरे पुनः ॥ २२० ॥

---

१ गुप्तसेवकान् । २ आनीतः । ३ एतच्छ्लोकानतरं--"इत्युक्त्वा मुनिवर्यौ तौ ततोऽन्यत्र विजह्रतुः । रामचंद्रादयः सर्वे स्वं स्वं स्थानं मुदा ययुः ॥" इति भावार्थकः श्लोकोऽपेक्षित इति प्रतिभाति । ४ अष्टमं सुतमित्यर्थः ।

भूयोऽपि मथुराशैलगुहायां तस्थुरेत्य च । तत्प्रभावाच्चमरभूर्व्याधिस्तत्र क्षयं ययौ ॥ २२१ ॥
पारणायान्यदोपेत्यायोध्यायां ते ययुः पुरि । अर्हद्दत्तश्रेष्ठिनश्च भिक्षार्थं प्राविशन् गृहे ॥ २२२ ॥
सावज्ञं तान् स वंदित्वा दध्यौ श्रेष्ठीति के ह्यमी । नेहेत्याः साधुवेषास्तद्वर्षास्वपि विहारिणः ॥ २२३ ॥
पृच्छामि किममून् यद्वा पाखंडैर्भाषितैरलम् । तस्यैवं ध्यायतस्ते तु तद्वध्वा प्रतिलंभिताः ॥ २२४ ॥
आचार्यस्य द्युतेर्जग्मुर्वसतौ ते महर्षयः । अभ्युत्थाय द्युतिनापि वंदितास्ते सगौरवम् ॥ २२५ ॥
अकालचारिण इति तैस्साधुभिरवन्दिताः । दत्तासनास्ते द्युतिना तत्र पारणकं व्यधुः ॥ २२६ ॥
आयाता मथुरापुर्या यास्यामस्तत्र संप्रति । इत्याख्याय समुत्पत्य स्वं स्थानं ते पुनर्ययुः ॥ २२७ ॥
तेषां जंघाचारणानां गुणस्तोत्रं द्युतिर्व्यधात् । तत्साधवः कृतावज्ञाः पश्चात्तापं प्रचक्रिरे ॥ २२८ ॥
तच्छ्रुत्वा श्रावकः सोऽर्हद्दत्तोऽप्यनुशयं व्यधात् । कार्तिकश्वेतसप्तम्यां ययौ च मथुरां पुरीम् ॥ २२९ ॥
अर्चित्वा तत्र चैत्यानि सप्तर्षींस्तानवन्दत । क्षमयामास चावज्ञादोषं शंसन् स्वयं कृतम् ॥ २३० ॥
सप्तर्षीणां प्रभावेण शांतरोगं स्वमंडलम् । विज्ञायेयाय कार्तिक्यां शत्रुघ्नोऽपि हि तां पुरीम् ॥ २३१ ॥
तान्नत्वोवाच शत्रुघ्नो भिक्षा मे गृह्यतां गृहे । प्रत्यूचुस्तेऽपि साधूनां राजपिंडो न कल्पते ॥ २३२ ॥
भूयोऽप्युवाच शत्रुघ्नो यूयं मय्युपकारिणः । मद्देशे दैविको रोगः शांतो युष्मत्प्रभावतः ॥ २३३ ॥
तल्लोकानुग्रहायेह किंचिदद्यापि तिष्ठत । सर्वा प्रवृत्तिर्भवतां ह्यन्योपकृतिहेतवे ॥ २३४ ॥
तेऽप्यूचिरे गतः प्रावृट्कालोऽयं तीर्थयात्रया । अधुना विहरिष्यामो नैकत्र मुनयः स्थिराः ॥ २३५ ॥

१ चमरेन्द्रकृतः । २ अत्र वास्तव्याः । ३ तस्य द्युतेः साधुभिः । ४ गुणस्तुतिम् । ५ कृताऽवज्ञा यैस्ते । ६ पश्चात्तापम् ।

गृहे गृहे त्वं गृहिणां कारयेर्बिंबमार्हतम् । पुर्यामस्यां ततो जातु व्याधिर्भावी न कस्यचित् ॥ २३६ ॥
इत्युक्त्वा ते समुत्पत्य ययुः सप्तर्षयोऽन्यतः । शत्रुघ्नोऽपि तथा चक्रे लोकश्चाभून्निरामयः ॥ २३७ ॥
तेषां सप्तऋषीणां च प्रतिमा रत्ननिर्मिताः । स चक्रे मथुरापुर्यां ककुप्सु चतसृष्वपि ॥ २३८ ॥
इतश्च वैताढ्यगिरौ दक्षिणश्रेणिभूषणे । पुरे रत्नपुरे रत्नरथो राजा तदाभवत् ॥ २३९ ॥
तस्य चंद्रमुखीकुक्षिजन्मा नाम्ना मनोरमा । उद्यौवना कन्यकाभूद्रूपेणापि मनोरमा ॥ २४० ॥
दातव्या कस्य कन्येयमिति मंत्रपरे नृपे । उपेत्य नारदोऽवोचल्लक्ष्मणस्येयमर्हति ॥ २४१ ॥
पुत्री रत्नरथस्याथ कुपिता गोत्रवैरतः । भृत्यान् भ्रूसंज्ञयादिक्षद्विटोऽयं कुट्यतामिति ॥ २४२ ॥
उत्तिष्ठतो जिघांसूंस्तान्[1] धीमान् विज्ञाय नारदः । समुत्पत्य [2]पतत्रीव प्रययावुपलक्ष्मणम् ॥ २४३ ॥
लिखित्वा तां पटे कन्यां दर्शयामास नारदः । लक्ष्मणाय स्ववृत्तांतं तं चाचख्यावशेषतः ॥ २४४ ॥
तद्रूपदर्शनाज्जातानुरागो लक्ष्मणः क्षणात् । समं रामेण तत्रागाद्रक्षोविद्याधरैर्वृतः ॥ २४५ ॥
जितः सौमित्रिणा चाशु तत्र रत्नरथो ददौ । रामाय कन्यां श्रीदामां लक्ष्मणाय मनोरमाम् ॥ २४६ ॥
वैताढ्यदक्षिणश्रेणिं जित्वा सर्वां च राघवौ । भूयोऽयोध्यामीयतुः क्ष्मां पालयंतौ च तस्थतुः ॥ २४७ ॥
षोडशान्तःपुरवधूसहस्रं लक्ष्मणस्य तु । महिष्योऽष्टावभवंस्तत्र विशल्या रूपवत्यपि ॥ २४८ ॥
वनमाला च कल्याणमालिका रत्नमालिका । जितपद्मा भयवती चाष्टमा तु मनोरमा ॥ २४९ ॥
॥ युग्मम् ॥

१ हन्तुमिच्छून् । २ पक्षीव ।

सूनवो द्वे शते सार्धे तेष्वष्ट महिषीभवाः । श्रीधरोऽभूद्विशल्याभूः पृथिवीतिलकः पुनः ॥ २५० ॥
रूपवत्यंगजो वनमालाजोऽर्जुनसंज्ञकः । श्रीकेशी जितपद्मायाः कल्याणायास्तु मंगलः ॥ २५१ ॥
सुपार्श्वकीर्तिस्तु मनोरमाया विमलः पुनः । रतिमालाभूरभयवतीभूः सत्यकीर्तिकः ॥ २५२ ॥
रामस्यासन्महादेव्यश्चतस्रस्तत्र मैथिली । प्रभावती रतिनिभा श्रीदामा तु चतुर्थिका ॥ २५३ ॥
सीतैकदा ऋतुस्नाता निशांते स्वप्नमैक्षत । च्युतौ विमानाच्छरभौ[1] प्रविशंतौ निजानने ॥ २५४ ॥
व्याख्याद्रामस्तयाख्याते वीरौ ते भाविनौ सुतौ । च्युतौ विमानाच्छरभौ यत्तु तन्न मुदे मम ॥ २५५ ॥
धर्मस्य ते च माहात्म्यात् सर्वं भावि शुभं प्रभो । इत्यूचे जानकी देवी तदा गर्भं दधार च ॥ २५६ ॥
सीता प्राणप्रियाग्रेऽपि प्राप्तगर्भा विशेषतः । बभूव रामचन्द्रस्य लोचनानन्दचंद्रिका ॥ २५७ ॥
ईर्ष्यालवः सपत्न्यस्तां मायाविन्योऽब्रुवन्नदः । कीदृग्रूपो रावणोऽभूत्तं लिखित्वा प्रदर्शय ॥ २५८ ॥
सीताप्यूचे मया दृष्टः सर्वाङ्गं न हि रावणः । दृष्टौ तच्चरणावेव कथं नाम लिखामि तम् ॥ २५९ ॥
तत्पादावप्यालिख त्वं कौतुकं नस्तदीक्षणे । इत्युक्ता प्रकृतिऋज्वी[2] दशास्यांघ्री लिलेख सा ॥ २६० ॥
स्थाने तत्रागमद्रामो बभाषे ताभिरप्यदः । रावणस्य स्मरत्यद्याप्यसौ सीता तव प्रिया ॥ २६१ ॥
सीतास्वहस्तलिखितं रावणस्य क्रमद्वयम्[3] । पश्यैतन्नाथ जानीहि सीता तस्यैव नाथते ॥ २६२ ॥
दृष्ट्वापि तत्तथा रामो गंभीरत्वान्महामनाः । तथैव[4] ववृते सीतादेव्यामनुपलक्षितः ॥ २६३ ॥

१ अष्टापदमृगौ । २ प्रकृत्या स्वभावेन ऋज्वी सरला । ३ क्रमश्चरणः । ४ पूर्ववत् ।

सीतादोपपदं तच्च देव्यो दासीजनैर्निजैः । जने प्राकाशयन् प्रायः प्रवादा लोकनिर्मिताः ॥ २६४ ॥
वसंतेऽथाब्रवीद्रामः सीते त्वां गर्भखेदिताम् । विनोदयितुकामेव मधुलक्ष्मीरिहाययौ ॥ २६५ ॥
पुष्पंति बकुलप्राया वृक्षाः स्त्रीदत्तदोहदैः । रंतुं व्रजामो महेन्द्रोदयोद्यानं ततोऽधुना ॥ २६६ ॥
सीताप्यूचे दोहदो मे देवतार्चनलक्षणः । तं पूरयोद्यानभवैर्नानापुष्पैः सुगंधिभिः ॥ २६७ ॥
रामः सद्योऽपि देवानां पूजाचर्यामकारयत् । ययौ महेन्द्रोदये च ससीतः सपरिच्छदः ॥ २६८ ॥
विचित्रनगरक्रीडं तत्रापश्यन्मधूत्सवम् । अर्हत्पूजोत्सवमयं सुखासीनो रघूद्वहः ॥ २६९ ॥
अत्रान्तरे च सीताया दक्षिणं चक्षुरस्फुरत् । आचचक्षे च सद्योऽपि साशंका राघवाय सा ॥ २७० ॥
नेदं साध्विति रामेणाख्याते सीताब्रवीदिति । किं रक्षोद्वीपवासान्मे संतुष्टोऽद्यापि नो विधिः ॥ २७१ ॥
त्वद्वियोगभवाद्दुःखाद्दुःखमद्यापि मेऽधिकम् । किमसौ दास्यति विधिर्निमित्तं नैतदन्यथा ॥ २७२ ॥
रामोऽपि तामुवाचैवं देवि मा खेदमुद्वह । अवश्यमेव भोक्तव्ये कर्माधीने सुखासुखे ॥ २७३ ॥
तद्गच्छ मन्दिरे स्वस्मिन् देवानामर्चनं कुरु । प्रयच्छ दानं पात्रेभ्यो धर्मः शरणमापदि ॥ २७४ ॥
सीतापि सदनं गत्वा संयमेन महीयसा । अर्हतोऽपूजयद्दानं प्रददे चावदानवत् ॥ २७५ ॥
रघुनाथमथाजग्मू राजधानीमहत्तराः[3] । यथाभूतपुरीवृत्तकीर्तनैकाधिकारिणः[4] ॥ २७६ ॥
विजयः सूरदेवश्च मधुमानथ पिंगलः । शूलधरः काश्यपश्च कालः क्षेमश्च नामतः ॥ २७७ ॥

---

१ प्रायेणापवादा लोकैरेव निर्मिता भवंति न तु तद्वास्तविकाः । २ पूजाचरणम् । ३ राजधान्या महत्तरा ग्रामकूटा ग्रामण्य इति यावत् । ४ यथाभूतं सत्यं यत्पुरीवृत्तांतं तस्य कीर्तनेऽद्वितीयाधिकारिणः ।

नत्वा रामाग्रतस्तस्थुः कंपमाना द्रुपत्रवत् । न तु विज्ञपयामासू राजतेजो हि दुस्सहम् ॥ १९८ ॥
तानूचे रामभद्रोऽपि भो भोः पुरमहत्तराः । अभयं वो ब्रुवाणानामेकान्तहितवादिनाम् ॥ १९९ ॥
तेष्वाद्यः सर्वसंवित्त्या विजयाख्यो महत्तरः । इति विज्ञपयामास सावष्टंभः प्रभोर्गिरा ॥ २०० ॥
स्वामिन्नवश्यविज्ञप्यं यदि विज्ञप्यते न हि । वंचितः स्यात्तदा स्वामी विज्ञसं चातिदुःश्रवम् ॥ २०१ ॥
देव देव्यां प्रवादोऽस्ति घटते दुर्घटोऽपि हि । युक्त्या हि यद्धटामेति श्रद्धेयं तन्मनीषिणा ॥ २०२ ॥
तथाहि जानकी हृत्वा रावणेन रिरंसुना । एकैव निन्ये तद्वेश्मन्यवात्सीच्च चिरं प्रभो ॥ २०३ ॥
सीता रक्ता विरक्ता वा संवित्त्या वा प्रसह्य वा । स्त्रीलोलेन दशास्येन नूनं स्याद्भोगदूषिता ॥ २०४ ॥
लोकोऽपि प्रवदत्येवं प्रवदामो वयं तथा । युक्तियुक्तं प्रवादं तन्मा सहस्व रघूद्वह ॥ २०५ ॥
आजन्मोपार्जितां कीर्तिं निजं कुलमिवामलाम् । प्रवादसहनेन त्वं मा देव मलिनीकृथाः ॥ २०६ ॥
कलंकस्यातिथीभूतां सीतां निश्चित्य राघवः । सद्योऽभूद्दुःखतूष्णीकः प्रायः प्रेमातिदुस्त्यजम् ॥ २०७ ॥
धैर्यमालंब्य काकुत्स्थस्तानुवाच महत्तरान् । साधु व्यज्ञपि युष्माभिर्न भक्ताः क्वाप्युपेक्षकाः ॥ २०८ ॥
न स्त्रीमात्रकृते जातु सहिष्येऽहमिहायशः । इति पद्मः प्रतिज्ञाय विससर्ज महत्तरान् ॥ २०९ ॥
निशायामथ काकुत्स्थः प्रच्छन्नः सदनाद्बहिः । निरगादिति चाश्रौषीज्जनवादं पदे पदे ॥ २१० ॥
रावणेनापनीतेयं तद्गृहे च चिरं स्थिता । सीतानीता च रामेण सतीति च स मन्यते ॥ २११ ॥
सीतारक्तेन तेनेयं नोपभुक्ता कथं भवेत् । नादोऽपि व्यमृशद्रामो न रक्तो दोषमीक्षते ॥ २१२ ॥

१ वृक्षपर्णवत् । २ संवित्तिर्बुद्धिः । ३ बलात्कारेण । ४ अद एतद् ।

इत्यादिसीतानिर्वादं शृण्वन्रामो गृहे ययौ । भूयोऽपि तच्छ्रवणार्थमादिदेश चरान् वरान् ॥ २९३ ॥
एवं च दध्यौ काकुत्स्थो मया यस्याः कृते कृतः । रक्षःकुलक्षयो रौद्रस्तस्याः किमिदमागतम् ॥ २९४ ॥
जाने महासती सीता स्त्रीलोलः स च रावणः । कुलं च मे निष्कलंकं हा रामः किं करोत्वसौ ॥२९५॥
द्राक् चरास्ते वहिः श्रुत्वा सीतानिर्वादमब्रुवन् । रामस्य सानुजकपिरक्षोराजस्य सुस्फुटम् ॥ २९६ ॥
क्रुद्धोऽथ लक्ष्मणोऽवोचद्दोषान् संकल्प्य हेतुभिः । ये निंदन्ति सतीं सीतां तेषामेषोऽन्तकोऽस्म्यहम् २९७
रामोऽप्यूचे मम पुरा व्यज्ञपीदं महत्तरैः । स्वयं च शुश्रुवे तस्य संवादोऽयं चरैः कृतः ॥ २९८ ॥
श्रुत्वा चामी समायाताः प्रत्यक्षं चापि भाषिताः । सीतात्यागे मापवादीत् सीतास्वीकारवज्जनः[1] ॥२९९॥
ऊचे च लक्ष्मणो लोकगिरा सीतां स्म मा त्यज । यथा तथापवदिता यदवक्मुखो जनः ॥ ३०० ॥
लोकः सौराज्यसुस्थोऽपि राजदोषपरो भवेत् । शिक्षणीयो न चेत्तत्रोपेक्षणीयः स भूभुजाम् ॥ ३०१ ॥
रामोऽप्यूचे सत्यमेतदीदृग् लोकः सदापि हि । सर्वलोकविरुद्धं तु त्याज्यमेव यशस्विनः ॥ ३०२ ॥
इत्युक्त्वोवाच सेनान्यं कृतांतवदनं वलः । अरण्ये त्यजतां क्वापि सीतेयं गर्भवत्यपि ॥ ३०३ ॥
पतित्वा रामपादेषु बभाषे लक्ष्मणो रुदन् । सीतादेव्या महासत्यास्त्यागोऽयमुचितो न हि ॥ ३०४ ॥
नातः परं त्वया वाच्यमिति रामेण भाषिते । नीरंगीछन्नवक्त्रोऽगात् सौमित्रिः स्वगृहं रुदन् ॥ ३०५॥
कृतांतवदनं रामोऽन्वशात् सीतां वने नय । संमेतयात्राव्याजेन तस्याः खल्वेष दोहदः ॥ ३०६ ॥
सेनानीरपि संमेतयात्रायै रामशासनम् । आख्याय सीतामारोप्य स्यंदने प्राचलद्द्रुतम् ॥ ३०७ ॥

१ यथा सीतास्वीकारे जनोऽपवदति तथा सीतात्यागे मापवदत्वतः सीतात्यागः कर्तव्य इतिभावः ।

दुर्निमित्तेष्वशकुनेष्वपि सीता रथस्थिता । जगाम दूरमध्वानमार्जवादविशंकिता ॥ ३०८ ॥
गंगासागरमुत्तीर्यारण्ये सिंहनिनादके[1] । गत्वा कृतांतवदनस्तस्थौ किंचिद्विचिंतयन् ॥ ३०९ ॥
साश्रुं म्लानमुखं तं च प्रेक्ष्य सीताब्रवीदिति । कथमित्थं स्थितोऽसि त्वं सशोक इव दुर्मनाः ॥ ३१० ॥
कृतान्तः कथमप्यूचे दुर्वचं वच्म्यहं कथम् । दुष्करं कृतवांश्चैतत् प्रेष्यभावेन[2] दूषितः ॥ ३११ ॥
राक्षसावाससंवासापवादाल्लोकजन्मनः । भीतेन देवि रामेण त्याजितासि वनेऽनघे ॥ ३१२ ॥
अपवादे चराख्याते रामं त्वत्त्यजनोद्यतम् । न्यषेधील्लक्ष्मणो लोकं प्रति क्रोधारुणेक्षणः ॥ ३१३ ॥
सिद्धाज्ञया निषिद्धश्च रामेण स रुदन् ययौ । अहं च प्रेषितोऽमुष्मिन् कार्ये पापोऽस्मि देवि हा ॥३१४
अमुष्मिन्नापदाकीर्णे मृत्योरेकनिकेतने । जीविष्यसि मया त्यक्ता स्वप्रभावेण केवलम् ॥ ३१५ ॥
तच्छ्रुत्वा स्यन्दनात् सीता मूर्छिता न्यपतद्भुवि । मृतेति बुद्ध्या सेनानीः पापंमन्यो रुरोद सः ॥ ३१६॥
सीतापि वनवातेन कथंचित् प्राप चेतनाम् । भूयो भूयोऽप्यमूर्छच्च चेतनामाससाद च ॥ ३१७ ॥
महत्यामथ वेलायां सुस्थीभूयेत्युवाच सा । इतोऽयोध्या कियद्दूरे रामस्तिष्ठति कुत्र वा ॥ ३१८ ॥
सेनानीरभ्यधाद्दूरेऽयोध्या किं पृच्छयानया[3] । उग्राज्ञस्य च रामस्य पर्याप्तं देवि वार्तया ॥ ३१९ ॥
इति श्रुत्वापि सा रामभक्ता भूयोऽप्यभाषत । भद्र मद्वाचिकमिदं[4] शंसे रामस्य सर्वथा ॥ ३२० ॥
यदि निर्वादभीतस्त्वं परीक्षां नाकृथाः कथम् । शंकास्थाने हि सर्वोऽपि दिव्यादि[5] लभते जनः ॥ ३२१॥

१ सिंहाना निनादो यस्मिंस्तस्मिन् । २ किंकरत्वेन । ३ प्रश्नेन । ४ मत्सदेशम् । ५ पंचदिव्यानां मध्ये किमपि दिव्यं करोति येन सत्यासत्ये परीक्ष्येते इति भावः ।

अनुज्ञोक्ष्ये स्वकर्माणि मन्दभाग्या वनेऽप्यहम् । नानुरूपं त्वकार्षीस्त्वं विवेकस्य कुलस्य च ॥ २२२ ॥
यथा खलगिरात्याक्षीः स्वामिन्नेकपदेऽपि माम् । तथा मिथ्यादृशां वाचा मा धर्मं जिनभाषितम्॥२२३॥
इत्युक्त्वा मूर्छिता भूमौ पतितोत्थाय चाभ्यधात् । मया विना कथं रामो जीविष्यति हतास्मि हा॥२२४
रामाय स्वस्त्यथाशंसेराशिषं लक्ष्मणस्य च । शिवास्ते संतु पंथानो वत्स गच्छोपराघवम् ॥ २२५ ॥
एवं विधेऽपि दयिते विपरीतवृत्तौ यैवं विधा तदियमेव सतीषु धुर्या ।
संचिन्तयन्निति भृशं प्रणिपत्य मुक्त्वा सीतां कृतांतवदनो ववले कथंचित् ॥ २२६ ॥

इत्याचार्यश्रीहेमचंद्राचार्यविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये
सप्तमपर्वणि सीतापरित्यागो नामाष्टमः सर्गः ।



## ॥ अथ नवमः सर्गः ॥

अथ सीता भयोद्भ्रांता बभ्रामेतस्ततो वने । आत्मानमेव निंदंती पूर्वदुष्कर्मदूषितम् ॥ १ ॥
भूयो भूयश्च रुदती स्खलंती च पदे पदे । गच्छन्ती पुरतोऽपश्यन्महत् सैन्यं समापतत् ॥ २ ॥
मृत्युजीवितयोस्तुल्याशया प्रेक्ष्यापि तद्बलम् । सीता तस्थावभीतैव नमस्कारपरायणा ॥ ३ ॥
तां दृष्ट्वा बिभयांचक्रुः सैनिकाः प्रत्युतापि ते । का नाम दिव्यरूपेयं भूस्थितेत्यभिभाषिणः ॥ ४ ॥
सीताया रुदितं श्रुत्वा स्वरवित्तच्चमूनृपः । इयं महासती कापि गुर्विणी चेत्यवोचत ॥ ५ ॥
कृपालुः स महीपाल उपसीतं जगाम च । सीताप्याशंकिता तस्य स्वं नेपथ्यमढौकयत् ॥ ६ ॥
राजाप्येवमभाषिष्ट मा भैषीस्त्वं मनागपि । तवैव भूषणान्येतान्यंगे तिष्ठंतु हे स्वसः ॥ ७ ॥
का त्वं कस्त्वामिहात्याक्षीन्निर्घृणेभ्योऽपि निर्घृणः । आख्याहि मा स्म शंकिष्ठास्त्वत्कष्टेनास्मि कष्टितः ॥८॥
तन्मंत्री सुमतिर्नाम सीतामेत्याब्रवीदिति । गजवाहनराजस्य बन्धुदेव्याश्च नन्दनः ॥ ९ ॥
नृपतिर्वज्रजंघोऽयं पुंडरीकपुरेश्वरः । महार्हतो महासत्वः परनारीसहोदरः ॥ १० ॥
गजान् ग्रहीतुमत्रैत्य कृतार्थीभूय च व्रजन् । त्वद्दुःखदुःखितोऽत्रागाद्दुःखमाख्याहि तन्निजम् ॥ ११ ॥
विश्वस्य सीताप्याचख्यौ स्ववृत्तांतमशेषतः । रुदती रोदयंती तौ कृपालू राजमंत्रिणौ ॥ १२ ॥
निर्व्याजो व्याजहारैवं राजा धर्मस्वसासि मे । एकं धर्मं प्रपन्ना हि सर्वे स्युर्बन्धवो मिथः ॥ १३ ॥

---

१ आगच्छत् । २ स्वरवेत्तीति स्वरवित् सचासौ तत्सेनानृपः । ३ निर्दयेभ्यः । ४ महार्हद्भक्तः उत्तमश्रावक इति यावत् । ५ विश्वासं कृत्वा । ६ निष्कपटः ।

मम भ्रामंफलस्येव भ्रातुरेहि तदोकसि । स्त्रीणां पतिगृहादन्यत् स्थानं भ्रातृनिकेतनम् ॥ १४ ॥
रामोऽपि लोकवादेन त्वामत्याक्षीन्न तु स्वयम् । पश्चात्तापेन सोऽप्यद्य मन्ये त्वमिव कष्टभाक् ॥ १५ ॥
गवेषयिष्यत्यचिरात्त्वां सोऽपि विरहातुरः । चक्रवाक इवैकाकी ताम्यन् दशरथात्मजः ॥ १६ ॥
इत्युक्ता निर्विकारेण तेनामेत्यभिधायिनी । सीता रुरोह शिबिकां सद्यस्तदुपनायिताम् ॥ १७ ॥
पुंडरीकपुरं चागान्मिथिलामपरामिव । अहर्निशं धर्मशीला चास्थात्तद्दर्शिते गृहे ॥ १८ ॥
इतश्च रामसेनानीर्गत्वा रामाय सोऽवदत् । वने सिंहनिनादाख्ये त्यक्तवानस्मि जानकीम् ॥ १९ ॥
मुहुर्मुहुः सा मूर्छित्वा चेतित्वा च मुहुर्मुहुः । कथंचिद्धैर्यमालंब्य वाचिकं चैवमादिशत् ॥ २० ॥
नीतिशास्त्रे स्मृतौ देशे कस्मिन्नाचार ईदृशः । एकपक्षोक्तदोषेण पक्षस्यान्यस्य शिक्षणम् ॥ २१ ॥
सदा विमृश्य कर्तुस्तेऽप्यविमृश्य विधायिता । मन्ये मद्भाग्यदोषेण निर्दोषस्त्वं सदाप्यसि ॥ २२ ॥
खलोक्त्याहं यथा त्यक्ता निर्दोषापि त्वया प्रभो । तथा मिथ्यादृशां वाचा मा त्याक्षीर्धर्ममार्हतम्॥२३॥
इत्युक्त्वा मूर्छिता सीता पतित्वोत्थाय चाब्रवीत् । मया विना कथं रामो जीविष्यति हतास्मि हा ॥२४॥
इत्याकर्ण्य वचो रामः पपात भुवि मूर्छया । संभ्रमाल्लक्ष्मणेनैत्य सिषिचे चंदनांभसा ॥ २५ ॥
उत्थाय विललापैवं क्व सा सीता महासती । सदा खलानां लोकानां वचसा हं[3]ही मयोज्झिता ॥ २६ ॥
अथोचे लक्ष्मणः स्वामिंस्तस्मिन्नद्यापि सा वने । महासती स्वप्रभावत्राता नूनं भविष्यति ॥ २७ ॥
गत्वा गवेषयित्वा च स्वयमानीयतां प्रभो । सीता देवी त्वद्विरहान्न हि यावद्विपद्यते ॥ २८ ॥

---

१ आमेत्यंगीकारेऽव्ययम् । २ दृशः । ३ हीति खेदेऽव्ययम् ।

श्रुत्वैवं सह तेनैव सेनान्या खेचरैश्च तैः। रामोऽगाद्व्योमयानेन तत्रारण्येऽतिदारुणे ॥ २९ ॥
प्रतिस्थलं प्रतिजलं प्रतिशैलं प्रतिद्रुमम् । रामो गवेषयामास ददर्श न तु जानकीम् ॥ ३० ॥
मन्ये व्याघ्रेण सिंहेन श्वापदेनापरेण वा । सीता जग्धेति सुचिरं दध्यौ रामोऽतिदुःखितः ॥ ३१ ॥
सीताप्राप्तौ विमुक्ताशो निवृत्य स्वपुरीं ययौ । पौरैः सीतागुणग्राहं निंद्यमानो मुहुर्मुहुः ॥ ३२ ॥
प्रेतकार्यं च सीतायाः पद्मोऽकार्षीदुदश्रुदृक् । पश्यन् सीतामयमिव सर्वं शून्यमिवाथ वा ॥ ३३ ॥
सैका हृदि दृशोरग्रे तस्थौ रामस्य वाचि च । क्वापि तिष्ठति सीतेति तथापि न विवेद सः ॥ ३४ ॥
इतश्च तत्र वैदेही सुषुवे युग्मिनौ सुतौ । नामतोऽनंगलवणं मदनांकुशमप्यथ ॥ ३५ ॥
वज्रजंघस्तयोश्चक्रे जन्मनाममहोत्सवौ । स्वपुत्रलाभादधिकं मोदमानो महामनाः ॥ ३६ ॥
धात्रीजनैर्लाल्यमानौ लीलादुर्ललितावुभौ । क्रमेण ववृधाते तावश्विनाविव भूचरौ ॥ ३७ ॥
कलाग्रहणयोग्यौ तावजायेतां महाभुजौ । कलभाविव शिक्षार्हौ नरेन्द्रनयनोत्सवौ ॥ ३८ ॥
तदा च नाम्ना सिद्धार्थोऽणुव्रती सिद्धपुत्रकः । विद्याबलर्द्धिसंपन्नः कलागमविचक्षणः ॥ ३९ ॥
त्रिसंध्यमपि मेर्वद्रौ चैत्ययात्रासु चंक्रमैः । आकाशगामी सिद्धार्थो वैदेहीगृहमाययौ ॥ ४० ॥
॥ युग्मम् ॥

वैदेह्या भक्तपानाद्यैः श्रद्धया स तु भोजितः । तथा सुखविहारं च तया पृष्टस्तदावदत् ॥ ४१ ॥

१ भक्षिता । २ सीताया गुणान् गृहीत्वा । ३ जन्मनो नाम्नश्च महोत्सवौ । ४ लीलया चपलौ । ५ कलास्वागमेषु शास्त्रेषु च विचक्षणः । ६ गमनैः ।

तेनापि पृष्टा वैदेही सुतजन्मावधि स्वकम् । मूलाद्वृत्तांतमाचख्यौ तस्य भ्रातुरिवाग्रतः ॥ ४२ ॥
ऊचेऽष्टांगनिमित्तज्ञः सिद्धार्थः करुणानिधिः । किं ताम्यसि मुधा यस्यास्तनयौ लवणांकुशौ ॥ ४३ ॥
प्रशस्तलक्षणौ साक्षादिव तौ रामलक्ष्मणौ । मनोरथं तव सुतौ नचिरात् पूरयिष्यतः ॥ ४४ ॥
तेनेत्याश्वासिता सीता तमभ्यर्थ्य कृताग्रहा । स्वगृहे धारयामास पुत्राध्यापनहेतवे ॥ ४५ ॥
स जग्याविति तत्पुत्रौ सर्वा अग्राहयत् कलाः । तथा यथा तावभूतां दुर्जयौ द्युसदामपि ॥ ४६ ॥
तावधीताखिलकलौ प्रपेदाते च यौवनम् । नूतनाविव कंदर्पवसन्तौ सहचारिणौ ॥ ४७ ॥
वज्रजंघः शशिचूलां पुत्रीं लक्ष्मीवतीभवाम् । कन्या द्वात्रिंशतं चान्या लवणेनोदवाहयत् ॥ ४८ ॥
सोऽङ्कुशाय ययाचे तु पृथ्वीपुरपतेः पृथोः । कन्यकाममृतवतीजातां कनकमालिकाम् ॥ ४९ ॥
वंशो न ज्ञायते यस्य तस्मै स्वदुहिता कथम् । दीयतामित्यभाषिष्ट पृथुः पृथुपराक्रमः ॥ ५० ॥
वज्रजंघस्तदाकर्ण्य तं क्रोधादभ्यषेणयत् । पृथुगृह्यं व्याघ्ररथं युद्धे बद्ध्वाग्रहीन्नृपम् ॥ ५१ ॥
स्वमित्रं पोतनपतिं साहाय्यायाह्वयत्पृथुः । विधुरेषु हि मित्राणि स्मरणीयानि मंत्रवत् ॥ ५२ ॥
वज्रजंघोऽपि पुत्रान् स्वानैरानाययद्युधि । तैर्वार्यमाणावपि तौ चेयतुर्लवणांकुशौ ॥ ५३ ॥
अन्येद्युर्ववृते युद्धं चम्वोर्मिलितयोर्द्वयोः । परैरतिबलैर्वज्रजंघसैन्यं त्वभज्यत ॥ ५४ ॥
संक्रुद्धौ मातुलचमूभंगेन लवणांकुशौ । निरंकुशाविव गजौ प्रणिघ्नन्तावधावताम् ॥ ५५ ॥
तयोरोजस्विनो रंहो मनागपि न सेहिरे । द्विषन्तः प्रावृडुत्पूरस्रोतसोरंघ्रिपा इव ॥ ५६ ॥
अभज्यत ससैन्योऽपि पृथुर्यावन्नरेश्वरः । ऊचतुस्तावदेवं तौ स्मेरास्यौ रामनंदनौ ॥ ५७ ॥

अपरिज्ञातवंशाभ्यामप्यावाभ्यामिहाहवे । विज्ञातवंशजा यूयं पलायध्वे कथं त्वहो ॥ ५८ ॥
इति तद्वचनं श्रुत्वा वलित्वा पृथुरब्रवीत् । व्यज्ञायि वंशो युष्माकं विक्रमेणामुना मया ॥ ५९ ॥
अंकुशायार्थिता कन्या वज्रजंघेन भूभुजा । नूनं मम हितेनैव वरो हीदृक् क लभ्यते ॥ ६० ॥
इति सानुनयं प्रोच्य सोऽङ्कुशाय तदैव हि । कन्यां कनकमालाख्यां प्रददौ पूर्वयाचिताम् ॥ ६१ ॥
संधानं वज्रजंघेन समक्षं सर्वभूभुजाम् । चक्रे पृथुनृपः पुत्र्याः स्पृहयन्नंकुशं वरम् ॥ ६२ ॥
तत्रास्थाच्छिबिरं न्यस्य वज्रजंघनरेश्वरः । आगाच्च नारदमुनिः सच्चक्रे तेन चोच्चकैः ॥ ६३ ॥
वज्रजंघो निषण्णेषु राजसूवाच नारदम् । अंकुशाय पृथुर्दास्यत्यसौ कन्यां निजां मुने ॥ ६४ ॥
लवणांकुशयोर्वंशमस्मत्संबंधिनोऽस्य तत् । आख्याहि ज्ञातजामातृवंशो येनैष तुष्यति ॥ ६५ ॥
अथोचे नारदः स्मित्वा वंशं को वेत्ति नानयोः । यस्योत्पत्त्यादिकंदः स भगवानृषभध्वजः ॥ ६६ ॥ ॥
चक्रिणो ह्यनयोर्वंशे भरताद्याः कथाश्रुताः । को न वेत्त्यनयोस्तातौ प्रत्यक्षौ रामलक्ष्मणौ ॥ ६७ ॥
गर्भस्थयोरप्यनयोरयोध्यालोकजन्मनः । अपवादाच्चकितेन त्यक्ता रामेण जानकी ॥ ६८ ॥
अथांकुशो हसित्वोचे ब्रह्मन्न खलु साधु तत् । चक्रे रामेण वैदेहीं त्यजता दारुणे वने ॥ ६९ ॥
भूयांसि ह्यपवादस्य कारणानि निराकृतौ । भवंति तत्र किं न्वेवं विद्वानपि चकार सः ॥ ७० ॥
पप्रच्छ लवणोऽथैवं दूरे कियति सा पुरी । यस्यां वसति मे तातः सानुजः सपरिच्छदः ॥ ७१ ॥
मुनिश्चोचे तव पिता यस्यां विश्वैकनिर्मलः । सायोध्या पूरितः षष्टियुग्योजनशतं खलु ॥ ७२ ॥

१ अयोध्यालोकाज्जन्म यस्य तस्मादपवादात् ।

वज्रजंघमथोवाच लवणः प्रश्रयं श्रयन् । इच्छावस्तत्र गत्वावां प्रेक्षितुं रामलक्ष्मणौ ॥ ७३ ॥
प्रतिपद्य स तद्वाचमंकुशं पर्यणाययत् । महोत्सवेन पृथुराट्पुत्र्या कनकमालया ॥ ७४ ॥
वज्रजंघपृथुभ्यां तावन्वितौ लवणांकुशौ । साधयंतौ बहून् देशान् लोकाख्यपुरमीयतुः ॥ ७५ ॥
युद्धभूमौ च तद्भूपं धैर्यशौण्डीर्यशालिनम् । कुबेरकान्तनामानं मानिनं तत्र जिग्यतुः ॥ ७६ ॥
लंपाकेष्वेककर्णाख्यं विजिग्याते नृपं च तौ । ततश्च विजयस्थल्यां भूपं भ्रातृशताभिधम् ॥ ७७ ॥
गंगामुत्तीर्य कैलासस्योत्तरां दिशमीयतुः । तत्र नंदनचारूणां देशानां चक्रतुर्जयम् ॥ ७८ ॥
रुषकुंतलकालांबुनंदिनंदनसिंहलान् । शलभाननलाङ्गूलान् भीमान् भूतरवादिकान् ॥ ७९ ॥
तौ जयंतौ नृपान् सिंधोः परकूलमुपेयतुः । तत्र चार्याननार्यांश्च साधयामासतुर्नृपान् ॥ ८० ॥
बहुदेशेश्वरानेवं साधयित्वा सहैव तैः । निवृत्योपेयतुस्तौ तत्पुंडरीकपुरं पुरम् ॥ ८१ ॥
अहो धन्यो वज्रजंघो यदीयौ यामिनंदनौ । ईदृशाविति जल्पद्भिर्वीक्ष्यमाणौ पुरीजनैः ॥ ८२ ॥
जग्मतुः स्वगृहं वीरौ भूपवीरैः समावृतौ । प्रणेमतुश्च जानक्याश्चरणौ विश्वपावनौ ॥ ८३ ॥
॥ युग्मम् ॥
चुचुंब मूर्ध्नि तौ सीता स्नपयंती मुदश्रुभिः । रामलक्ष्मणयोस्तुल्यौ भूयास्तमिति चावदत् ॥ ८४ ॥
ऊचतुर्वज्रजंघं तौ मातुल प्राक् त्वयावयोः । मेने यानमयोऽध्यायामिदानीमनुतिष्ठ तत् ॥ ८५ ॥
आज्ञाप्यंतां च लंपाकरुषकालांबुकुंतलाः । शतभानलशूलाद्याश्चापरेऽपि महीभुजः ॥ ८६ ॥

---

१ लंपाकदेशेषु । २ देशनामान्येतानि । ३ भगिनीपुत्रौ ।

प्रयाणभंभा वाद्यंतां छाद्यंतां च दिशो बलैः । त्यक्ता येनावयोर्माता वीक्ष्यस्तस्याद्य विक्रमः ॥ ८७ ॥
सीतापि सद्यो रुदती जगादैवं सगद्गदम् । वत्सौ केयमनर्थेच्छा युवयोः कर्मणामुना ॥ ८८ ॥
वीरौ पितृपितृव्यौ वां दुर्जयौ द्युसदामपि । यकाभ्यां निहतो रक्षःपतिस्त्रैलोक्यकंटकः ॥ ८९ ॥
उत्कंठा पितरं द्रष्टुं युवयोर्यदि बालकौ । विनीतीभूय तद्यातं पूज्ये हि विनयोऽर्हति ॥ ९० ॥
ततस्तावेवमूचाते विनयः क्रियते कथम् । तस्मिन् द्विषत्पदप्राप्ते[1] त्वत्त्याजिनि पितर्यपि ॥ ९१ ॥
पुत्रौ तवावामायाताविति तस्य पुरः कथम् । गत्वा स्वयं वदिष्यावस्तस्यापि ह्रीकरं वचः ॥ ९२ ॥
आनंदजनकं तस्य जनकस्यापि दोष्मतः । युद्धाह्वानं युज्यते तु कुलद्वययशस्करम् ॥ ९३ ॥
अभिधायेति सीतायां रुदंत्यामपि चेलतुः । महोत्साहौ महासैन्यौ तौ रामनगरीं प्रति ॥ ९४ ॥
कुठारकुद्दालभृतां सहस्राणि नृणां दश । तयोः पथ्यछिदन् वृक्षादिकं क्ष्मां च समां व्यधुः ॥ ९५ ॥
क्रमेण गत्वा सेनाभी रुन्धानौ सर्वतो दिशः । तावूषतुरुपायोध्यं योद्धुकामौ महाभुजौ ॥ ९६ ॥
विरुद्धं तद्बलं भूरि श्रुत्वायातं पुरो बहिः । उभौ विसिष्मियाते च सिष्मियाते च राघवौ ॥ ९७ ॥
अथेत्थमूचे सौमित्रिः परे केऽमी पतंगवत् । मर्तुकामाः समापेतुरार्यविक्रमपावकम्[2] ॥ ९८ ॥
इत्युक्त्वा सह रामेण सुग्रीवादिभिरावृतः । युद्धे चचाल सौमित्रिरमित्रध्वांतभास्करः ॥ ९९ ॥
इतश्च नारदाच्छ्रुत्वा तन्नामंडलभूपतिः । पुंडरीकपुरे सीतामुपेयाय ससंभ्रमः ॥ १०० ॥
तस्याख्यद्रुदती सीता रामो मां भ्रातरत्यजत् । मत्त्यागमसहिष्णू च त्वद्भामेयौ युधे गतौ ॥ १०१ ॥

१ शत्रुस्थानप्राप्ते । २ आर्यस्य रामस्य विक्रम एव पावकोऽग्निस्तम् ।

भामंडलोऽप्युवाचैवं त्वत्त्यागं रभसावशात्। चक्रे रामो द्वितीयं तु मा कार्षीत्पुत्रयोर्वधम् ॥ १०२ ॥
आत्मजौ तावजानानो न यावद्धंति राघवः। उत्तिष्ठ तावद्गच्छावस्तत्रावामविलंबितम् ॥ १०३ ॥
इत्युक्त्वा जानकीमात्मविमानमधिरोप्य च। लवणांकुशयोः स्कंधावारे भामंडलो ययौ ॥ १०४ ॥
तौ नमश्चक्रतुः सीतां कुमारौ लवणांकुशौ। मातुलोऽयमिति सीताख्यातं भामंडलं तथा ॥ १०५ ॥
स तौ शिरसि चुंबित्वा स्वोत्संगमधिरोप्य च। हर्षरोमांचितवपुरित्यूचे गद्गदाक्षरम् ॥ १०६ ॥
वीरपत्नी पुराप्यासीद्दिष्ट्या संप्रति वीरसूः[1]। अजूभुवाभ्यां मे यामिर्यामिनीजानिनिर्मला[2] ॥ १०७ ॥
वीरपुत्रौ च वीरौ च युवां यद्यपि मानदौ। रणं पितृपितृव्याभ्यां मा कृपाथां तथापि हि ॥ १०८ ॥
न रणे रावणोऽप्यासीद्ययोर्मल्लस्तयोः कथम्। युद्धं युवाभ्यामारेभे दोःकंडूरभसावशात् ॥ १०९ ॥
तावूचतुर्मातुलालं स्नेहभीरुतयानया। त्वत्स्वसाप्यस्मदंबेयमूचेऽदः कातरं वचः ॥ ११० ॥
आवामपि हि विद्मो यन्न मल्लः कोऽपि तातयोः। युद्धं त्यक्त्वा तयोरेवोत्पादयावः कथं ह्रियम् ॥ १११ ॥
तयोर्युवाणयोरेव सैन्यानां रामसैनिकैः। समं प्रववृते युद्धं संवर्तावर्तदर्शकम् ॥ ११२ ॥
सुग्रीवाद्यैः खेचरैर्मानयोः सैन्यं महीचरम्। हन्यतामिति साशंको ययौ भामंडलो युधि ॥ ११३ ॥
उत्तस्थाते कुमारावप्याहवाय महाबलौ। उच्छ्वास्यमानवर्माणौ रोमांचेनातिशायिना ॥ ११४ ॥
निःशंकं युद्धमानास्ते सुग्रीवाद्या नभश्चराः। युधि भामंडलं दृष्ट्वा पप्रच्छुः काविमाविति ॥ ११५ ॥
भामंडलाच्च ते ज्ञात्वा रामपुत्राविमाविति। गत्वा सीतां नमश्चक्रुर्न्यषदंश्च पुरो भुवि ॥ ११६ ॥

१ वीर सूते इति वीरसूर्वीरमातेत्यर्थः। २ यामिनी रात्रिर्जाया यस्य स चन्द्रस्तद्वन्निर्मला।

इतश्च तौ क्षणेनापि दोष्मंतौ लवणांकुशौ । रामसैन्यं दुधुवतुः क्षयोद्भ्रांताब्धिदुर्धरौ ॥ ११७ ॥
यत्र यत्र भ्रेमतुस्तौ वने सिंहाविवोद्धतौ । रथी सादी निषादी वा न तत्रास्थात्कृतायुधः ॥ ११८ ॥
हेतविद्रुतमेवं च रामसैन्यं विधाय तौ । केनाप्यस्खलितौ रामं सौमित्रिं चेयतुर्युधि ॥ ११९ ॥
तौ प्रेक्ष्य रामसौमित्री एवमन्योऽन्यमूचतुः । कावप्येतावभिरामौ कुमारौ विद्विषौ च नः ॥ १२० ॥
निसर्गात् स्निह्यति मनो बलाद्द्रुह्यति किं त्विदम् । उपयावः किमाश्लेष्टुमेतौ योधयितुं नु वा ॥१२१॥
इति व्याहारिणं रामं रथस्थं लवणो रथी । लक्ष्मणं चाङ्कुशोऽवोचत् सौष्ठवप्रश्रयान्वितम् ॥ १२२ ॥
जैत्रं जगदजय्यस्य रावणस्यापि दोष्मतः । दिष्ट्याद्राक्ष्म वीरयुद्धश्रद्धालुस्त्वामहं चिरात् ॥ १२३ ॥
नापूर्यत रणश्रद्धा रावणेनापि ते ध्रुवम् । एष तां पूरयिष्यामि त्वं च मे पूरयिष्यसि ॥ १२४ ॥
इत्युक्ते रामसौमित्री द्वौ तौ च लवणांकुशौ । आस्फालयामासतुः स्वं स्वं धनुर्ध्वानभीषणम् ॥ १२५ ॥
कृतांतसारथी रामस्यंदनं वज्रजंघराट् । अनंगलवणरथमन्यढौकयतां मिथः ॥ १२६ ॥
रथं विराधः सौमित्रेरंकुशस्य पुनः पृथुः । अन्योऽन्यमभ्यमित्रीणं चक्राते वरसारथी ॥ १२७ ॥
चतुरं भ्रमयामासुस्तेऽग्रसारथयो रथान् । प्रजह्रुर्विविधं ते च चत्वारो द्वंद्वयोधिनः ॥ १२८ ॥
विज्ञातज्ञातिसंबंधौ सापेक्षौ लवणांकुशौ । युयुधाते निरपेक्षौ त्वज्ञानाद्रामलक्ष्मणौ ॥ १२९ ॥
विविधैरायुधैर्युद्ध्वा युद्धान्तेच्छू रघूद्वहः । ऊचे कृतान्तवदनं रथं प्रत्यरि वाहय ॥ १३० ॥
कृतांतोऽपि बभाषेऽदः खेदं प्राप्ता ह्यमी हयाः । सर्वांगं विशिखैर्विद्धाः प्रतियोधेन तेऽमुना ॥ १३१ ॥

१ क्षये प्रलयकाल उद्भ्रांतसमुद्रवद्दुर्धरौ । २ आदौ हतं पश्चाद्विद्रुतम् । ३ अभिनस्येगम् ।

तुरंगा न त्वरंतेऽमी कशाभिस्ताडिता अपि । रथश्च जर्जरस्तेऽभूदसौ वैर्यस्त्रताडितः ॥ १३२ ॥
एतौ च मम दोर्दंडौ द्विट्कांडाघातजर्जरौ । न हि रश्मिं प्रतोदं वा क्षमौ चालयितुं प्रभो ॥ १३३ ॥
पद्मनाभोऽप्यभाषिष्ट ममापि शिथिलायते । धनुश्चित्रस्थितमिव वज्रावर्तं न कार्यकृत् ॥ १३४ ॥
अभून्मुशलरत्नं च वैरिनिर्दलनाक्षमम् । कणकंडनमात्रार्हमेवैतदपि संप्रति ॥ १३५ ॥
अनेकशोऽङ्कुशीभूतं यद्दुष्टनृपदन्तिनाम् । हलरत्नं तदप्येतदभूद्भूपाटनोचितम् ॥ १३६ ॥
सदा यक्षै रक्षितानां विपक्षक्षयकारिणाम् । तेषामेव ममास्त्राणामवस्था केयमागता ॥ १३७ ॥
यथापराजितासूनोरभून्मोघास्त्रता तदा । तथैव लक्ष्मणस्यापि मदनांकुशयोधिनः ॥ १३८ ॥
अत्रांतरे च सौमित्रिरंकुशेनोरसीषुणा । ताडितः कुलिशेनेव मूर्छितो न्यपतद्रथे ॥ १३९ ॥
सौमित्रिमूर्छाविधुरो विराधः स्यंदनं रणात् । अचालयत्प्रत्ययोध्यं संज्ञां लेभेऽथ लक्ष्मणः ॥ १४० ॥
साक्षेपं लक्ष्मणश्चोचे किं विराधाकृथा नवम् । रामभ्रातुर्दशरथसूनोरनुचितं ह्यदः ॥ १४१ ॥
तच्छीघ्रं नय तत्रैव रथं यत्र स मे द्विषन् । एष छिनद्मि तच्छीर्षं चक्रेणामोघरंहसा ॥ १४२ ॥
एवमुक्तो विराधोऽथानैषीत्प्रत्यंकुशं रथम् । तिष्ठ तिष्ठेति जल्पंश्च चक्रं जग्राह लक्ष्मणः ॥ १४३ ॥
भ्रमदर्कभ्रमकरं भ्रमयित्वा च तद्दिवि । क्रुद्धो मुमोच सौमित्रिरंकुशायास्खलद्व्ययम् ॥ १४४ ॥
आपतत्ताडयामासानैकशोऽस्त्रैस्तदंकुशः । सर्वात्मना लवणोऽपि न तु तत्प्रत्यहन्यत ॥ १४५ ॥
वेगेनापत्य तच्चक्रमंकुशस्य प्रदक्षिणाम् । कृत्वा लक्ष्मणहस्तेऽगात् पुनर्नीड इवांडजः ॥ १४६ ॥

१ कशाम् । २ पक्षी ।

तद्भूयो लक्ष्मणोऽमुंचत् कृत्वा तद्वत्प्रदक्षिणाम् । पुनस्तत्पाणिमेवागाद्बालां भ्रम इव द्विपः ॥ १४७ ॥
चिंतयामासतुश्चैवं विषण्णौ रामलक्ष्मणौ । किं सीरिशार्ङ्गिणावेतौ न त्वावामिह भारते ॥ १४८ ॥
अत्रांतरे नारदर्षिः सिद्धार्थेन सहैव हि । तत्रोपेत्यावोचदेवं खिन्नं रामं सलक्ष्मणम् ॥ १४९ ॥
हर्षस्थाने विषादोऽयं युवयोः किं रघूद्वहौ । पुत्रात्पराजयो वंशोद्योतनाय न कस्य हि ॥ १५० ॥
सीताकुक्षिभवौ पुत्रौ ताविमौ लवणांकुशौ । त्वां द्रष्टुमागतावत्र युद्धव्याजेन न त्वरी[1] ॥ १५१ ॥
अभिज्ञानमिदं तेऽत्र यच्चक्रं प्रबभूव न । मुधाऽभूद्भारतं[2] चक्रं पुरा बाहुबलावपि ॥ १५२ ॥
त्यागात्प्रभृति सीताया वृत्तांतं नारदोऽखिलम् । पुत्रयुद्धांतमाचख्यौ विश्वविस्मयदायकम् ॥ १५३ ॥
रामोऽपि विस्मय[3]व्रीडाखेदहर्षसमाकुलः । मुमूर्छ संज्ञां लेभे च संसिक्तश्चंदनांभसा ॥ १५४ ॥
लक्ष्मणेन सहोदश्रुः पुत्रवात्सल्यपूरितः । जगाम रामो लवणांकुशयोर्द्रुतमंतिके ॥ १५५ ॥
अवतीर्य रथात्सद्यो विनीतौ लवणांकुशौ । पादेषु पद्मसौमित्र्योस्त्यक्तास्त्रौ पेततुः क्रमात् ॥ १५६ ॥
तावालिंग्य निजोत्संगमारोप्य च रघूद्वहः । मूर्ध्नि चुंबन् रुरोदोच्चैः शोकस्नेहसमाकुलः ॥ १५७ ॥
रामोत्संगान्निजोत्संगं तावारोप्याथ लक्ष्मणः । चुंबन् शिरसि बाहुभ्यां परिरेभेऽश्रुपूर्णदृक् ॥ १५८ ॥
विलुठन्तौ पितुरिव विनीतौ पादपद्मयोः । दूरात्प्रसारितभुजः शत्रुघ्नोऽप्यालिलिंग तौ ॥ १५९ ॥
अपरेऽपि हि भूपालाः सेनयोरुभयोरपि । प्रमोदंते स्म संभूय विवाहमिलिता इव ॥ १६० ॥

१ अरी शत्रू । २ भरतचक्रिसंबंधि । ३ पुत्रपराक्रमेण विस्मयः स्वपराजयेन व्रीडा सीतावियोगेन खेदः पुत्रप्राप्त्या च हर्षस्तेनयुक्तः।

॥११९॥

पुत्रयोर्विक्रमं दृष्ट्वा पित्रा च सह संगमम् । हृष्टा सीता विमानेन पुंडरीकपुरं ययौ ॥ १६१॥
सद्दक्षपुत्रलाभेन मुदितौ रामलक्ष्मणौ । जहृषुः स्वामिहर्षेण भूचराः खेचराश्च ते ॥ १६२ ॥
भामंडलनृपाख्यातो वज्रजंघनृपोऽपि हि । ननाम रामसौमित्री विनीतश्चिरपत्तिवत् ॥ १६३ ॥
रामस्तमालापैवं भामंडलसमोऽसि मे । पुत्रौ योऽवर्धयस्त्वं मेऽनैषीः काष्ठामिमां च यः ॥ १६४ ॥
इत्युक्त्वा पुष्पकारूढः पद्मनाभः सलक्ष्मणः । अर्धासनोपविष्टाभ्यां पुत्राभ्यां प्राविशत्पुरीम् ॥ १६५ ॥
ऊर्ध्वग्रीवपार्ष्णिभिः पौरै राजमार्गे च विस्मितैः । प्रेक्ष्यमाणः स्तूयमानसुतो रामोऽगमद्गृहे ॥१६६॥
तत्रोत्ततार पुत्राभ्यां सह रामः सलक्ष्मणः । महान्तमत्यन्तमुदा कारयामास चोत्सवम् ॥ १६७॥
अथ रामं सुमित्राभूः कपीश्वरबिभीषणौ। हनूमानंगदाद्याश्च संभूयैवं व्यजिज्ञपन् ॥ १६८ ॥
परदेशे स्थिता देवी त्वया विरहिताधुना । विनामूभ्यां कुमाराभ्यामतिकष्टेन तिष्ठति ॥ १६९ ॥
यद्यादिशसि तत्स्वामिन्नानयामोऽद्य तामिह । विपत्स्यतेऽन्यथा सा तु पतिपुत्रोज्झिता सती ॥ १७० ॥
किंचिद्रामो विचिंत्योचे जानक्यानीयते कथम्। लोकापवादोऽलीकोऽपि बलवानंतरायकृत् ॥ १७१ ॥
जानेऽहं यत्सती सीता सापि स्वं वेत्ति निर्मलम् । दिव्यं दातुमथादातुं तद्द्वयोरपि नास्ति भीः ॥१७२॥
प्रत्यक्षं सर्वलोकानां दिव्यं देवी करोतु सा । शुद्धया च तया सार्धं गृहवासोऽस्तु मे पुनः ॥ १७३ ॥
एवमस्त्वित्युदित्वा ते पुर्या बहिरकारयन् । विशालान्मंडपानुच्चैस्तदन्तर्मंचधोरणीः ॥ १७४ ॥
तेषु चोपाविशन् भूपाः पौरामात्यादयोऽपि च । ते बिभीषणसुग्रीवप्रमुखाः खेचरा अपि ॥ १७५ ॥

---

१ दिशाम् । २ ऊर्ध्वा ग्रीवा पार्ष्णयश्च येषां तैः । ३ मंचश्रेणीः ।

ततो रामाज्ञयोत्थाय पुंडरीकपुरे स्वयम् । गत्वा नत्वा च वैदेहीमित्युवाच कपीश्वरः ॥ १७६ ॥
त्वत्कृते प्रैषि रामेण विमानं देवि पुष्पकम् । इदानीमिदमध्यास्स्व रामोपान्तमुपेहि[1] च ॥ १७७ ॥
साप्यूचेऽद्यापि मेऽरण्यत्यागदुःखं न शाम्यति । ततः कथं यामि रामं भूयो दुःखांतरप्रदम् ॥ १७८ ॥
नत्वा भूयोऽपि सोऽवोचन्मा कुपस्तव शुद्धये । समं पौरैर्नृपैः सर्वैर्मंचारूढोऽस्ति राघवः ॥ १७९ ॥
तेनेत्यूक्ते पूर्वमपि जानकी शुद्धिकांक्षिणी । आरुरोह विमानं तदयोध्यायां जगाम च ॥ १८० ॥
माहेन्द्रोदयमुद्यानं समुपेत्योत्ततार सा । दत्तार्घा लक्ष्मणेनैत्य नमश्चक्रे नृपैरपि ॥ १८१ ॥
अग्रे निषद्य सौमित्रिर्नृपैः सममदोऽवदत् । निजां पुरीं निजं वेश्म प्रवेशाद्देवि पावय ॥ १८२ ॥
सीताप्यूचे प्राप्तशुद्धिः प्रवेक्ष्यामि पुरीमिमाम् । गृहं च नान्यथा वत्सापवादो जातु शाम्यति ॥ १८३ ॥
इति सीताप्रतिज्ञां तेऽशंसन् रामाय भूभुजः । रामोऽप्युपेत्य वैदेहीमित्यूचे न्यायनिष्ठुरम् ॥ १८४ ॥
भोगा न चेद्दशास्येन तस्थुष्या अपि तद्गृहे[2] । समक्षं सर्वलोकानां तद्दिव्यं कुरु शुद्धये ॥ १८५ ॥
स्मित्वा सीताप्युवाचैवं विज्ञस्त्वत्तोऽपरो न हि । अज्ञात्वा यो हि मे दोषं त्यागं कुर्या महावने ॥१८६॥
दंडमादौ विधायाद्य कुरुषे मत्परीक्षणम् । विचक्षणोऽसि काकुत्स्थ सज्जा तत्रापि नन्वहम् ॥ १८७ ॥
ऊचे विलक्षो रामोऽपि जाने दोषस्तवास्ति न । जनोत्पादितदोषस्योत्तारणायेदमुच्यते ॥ १८८ ॥
जगाद जानकी दिव्यपंचकं स्वीकृतं मया । विशामि वह्नौ ज्वलिते भक्षयाम्यथ तंडुलान्[3] ॥ १८९ ॥

---

१ रामसन्निधौ । २ रावणगृहे तस्थुष्या वसंत्यास्तव रावणेन समं भोगा न चेत्स्युरिति सबधः । ३ मंत्रितांस्तंडुलानिति तात्पर्यम् ।

तुलां समधिरोहामि तप्तं कोशं पिबाम्यहम् । गृह्णामि जिह्वया फालं किं तुभ्यं रोचते वद ॥ १९० ॥
॥ युग्मम् ॥
अत्रांतरेऽन्तरीक्षस्थः सिद्धार्थो नारदोऽप्यथ । लोकः सर्वश्च तुमुलं निषिध्येदमभाषत ॥ १९१ ॥
भो भो राघव सीतेयं निश्चयेन सती सती । महासतीति मा कार्षीर्विकल्पमिह जातुचित् ॥ १९२ ॥
रामोऽप्युवाच हे लोका मर्यादा कापि नास्ति वः । संकल्प्य दोषं युष्माभिरेवेयं दूषिता पुरा ॥ १९३ ॥
ब्रूथान्यत् पुरतो यूयमन्यद्दूरे स्थिताः पुनः । तदा कथं सदोषासीच्छीलवत्यधुना कथम् ॥ १९४ ॥
भूयोऽपि गृह्णतां दोषमर्गला नास्ति कापि वः । प्रत्ययाय ततः सीता विशतु ज्वलितेऽनले ॥ १९५ ॥
इत्युक्त्वाखानयद्रामो गर्तं हस्तशतत्रयम् । पुरुषद्वयदघ्नं चापूरयच्चंदनेन्धनैः ॥ १९६ ॥
अत्रान्तरे च वैताढ्यस्योत्तरश्रेणिवर्त्तिनः । हरिविक्रमराजस्य कुमारो जयभूषणः ॥ १९७ ॥
ऊढाष्टशतनारीकः पत्नीं किरणमंडलाम् । सुप्तां हेमशिखाख्येन समं मातुलसूनुना ॥ १९८ ॥
दृष्ट्वा निर्वासयामास तदैव प्राव्रजत् स्वयम् । सापि मृत्वा समजनि विद्युद्दंष्ट्रेति राक्षसी ॥ १९९ ॥
अयोध्याबहिरभ्येत्य स तदा जयभूषणः । तस्थौ प्रतिमया विद्युद्दंष्ट्रा च तमुपाद्रवत् ॥ २०० ॥
केवलं तस्य चोत्पेदे तदुत्सवविवित्सया । तदानीं च समाजग्मुः सुनासीरादयः सुराः ॥ २०१ ॥
सीतायाः प्रेक्ष्य तद्देवाः शक्रमेवं व्यजिज्ञपन् । लोकालीकापवादेन सीता वह्नौ प्रवेक्ष्यति ॥ २०२ ॥

---

१ सीसकम् । २ शस्त्रधारम् । ३ जयभूषणः । ४ सुनासीर इन्द्रः ।

पत्त्यनीकपतिं सीतासान्निध्यायादिशद्धरिः । तस्यर्षेः केवलज्ञान॰सवं तु विदधे स्वयम् ॥ २०३ ॥
रामाज्ञयाथ [1]भृतकास्तं गर्तं चन्दनांचितम् । परितो ज्वालयामासुर्दुःप्रेक्ष्यं चक्षुषामपि ॥ २०४ ॥
ज्वालाकरालं तं प्रेक्ष्य रामो दध्याविदं हृदि । अहो अत्यंतविषमं किं ममेदमुपस्थितम् ॥ २०५ ॥
इयं महासती नूनं निःशंकाग्नौ प्रवेक्ष्यति । दैवस्येव हि दिव्यस्य प्रायेण विषमा गतिः ॥ २०६ ॥
मया सहास्या निर्वासो हरणं रावणेन च । वने त्यागो मया भूयो भूयोऽप्येतच्च[2] मत्कृतम् ॥ २०७ ॥
एवं सोऽचिन्तयद्यावत्तावत्सीतोपपावकम् । स्थित्वा स्मृत्वा च सर्वज्ञं चक्रे सत्यापनामिति ॥ २०८ ॥
हे लोकपाला लोकाश्च सर्वे शृणुत यद्यहम् । अन्यमन्यलषं रामात्तदाग्निर्मां दहत्वयम् ॥ २०९ ॥
अन्यथा तु सुखस्पर्शो वारीवास्त्वित्युदीर्य सा । झंपां स्मृतनमस्कारा ददौ तस्मिन् हुताशने ॥ २१० ॥
यावत्सा प्राविशत्तावद्विध्यातो वह्निराश्वपि । गर्तः स्वच्छोदकापूर्णः स तु वापीत्वमाययौ ॥ २११ ॥
सीता त्वधिजलं पद्मोपरि सिंहासनस्थिता । [3]पद्मेवास्थात्सतीभावतुष्टदेवप्रभावतः ॥ २१२ ॥
कुर्वाणं क्वापि हुंकारं क्वचिद्गुलुगुलारवम् । क्वापि झंझायितध्वानं क्वचित्पटपटाध्वनि ॥ २१३ ॥
क्वचिद्दिलिदिलिस्वानं क्वचित् खलखलास्वनम् । समुज्जांभ इवांभस्तत्तत्र सावर्तमैक्ष्यत ॥ २१४ ॥
॥ युग्मम् ॥
तदुच्छलजलं वाप्या उद्वेलस्येव वारिधेः । आप्लावयितुमारेभे मंचानपि गरीयसः ॥ २१५ ॥

१ सेवकाः । २ अग्निप्रवेशनम् । ३ लक्ष्मीरिव ।

विद्याधरा भयोद्भ्रांताः समुत्पत्ये[1]र्युरंबरे । भूचराश्चुक्रुशुश्चैवं पाहि सीते महासति ॥ २१६ ॥
सीताप्युत्तीर्णमंभस्ततं[2] स्वपाणिभ्यामवालयत् । पुनर्वापीप्रमाणं तदभूत्तस्याः प्रभावतः ॥ २१७ ॥
उत्पलैः कुमुदैः पद्मैः पुंडरीकैर्निरंतरा । सौरभ्रो[3]द्भ्रांतभृंगालीसंगीता हंसशालिनी ॥ २१८ ॥
आस्फल[4]द्वीचिनिचयमणिसोपानबंधुरा । बभ्रोभयतटा रत्नोपलैर्वापी बभूव सा ॥ २१९ ॥
॥ युग्मम् ॥
ननृतुर्नारदाद्याः खे सीताशीलप्रशंसिनः । सीतोपरिष्टात्तुष्टाश्च पुष्पवृष्टिं व्यधुः सुराः ॥ २२० ॥
अहो शीलमहो शीलं रामपत्न्या यशस्करम् । इति लोकप्रघोषोऽभूद्रोदःकुक्षिंभरिः क्षणात् ॥ २२१ ॥
मातुः प्रभावं तं दृष्ट्वा मुदितौ लवणांकुशौ । हंसाविव तरंतौ तौ तत्समीपमुपेयतुः ॥ २२२ ॥
तौ मूर्ध्न्याघ्राय वैदेह्या पार्श्वयोरुपवेशितौ । कलभाविव रेजाते नदीतीरद्वयस्थितौ ॥ २२३ ॥
गत्वा सौमित्रिशत्रुघ्नभामंडलविभीषणाः । सुग्रीवाद्याश्च वैदेहीं नमश्चक्रुः सभक्तयः ॥ २२४ ॥
सीतामुपाययौ रामोऽप्यभिरामतरद्युतिः । पश्चात्तापत्रपापूर्ण इत्यूचे रचितांजलिः ॥ २२५ ॥
स्वभावादप्यसद्दोषग्राहिणां पुरवासिनाम् । छंदानुवृत्त्या[5] त्यक्तासि मया देवि सहस्व तत् ॥ २२६ ॥
त्यक्तोग्रश्वापदेऽरण्येऽजीवस्त्वं स्वप्रभावतः । एकं दिव्यं तदप्यासीन्नाज्ञासिषमहं पुनः ॥ २२७ ॥
क्षांत्वा सर्वं ममेदानीमिदमध्यास्स्व पुष्पकम् । चलस्व वेश्मनि प्राग्वद्रमस्व सहिता मया ॥ २२८ ॥

---

१ ईयुर्जग्मुः । २ उच्छलितम् । ३ सौरभेण सुगधेनोद्भ्राता या भृगाली भ्रमरसमूहस्तस्याः संगीतं यस्या सा । ४ आस्फलतो वीचिनिचयास्तरगसमूहा यत्रैतादृशैर्मणिसोपानैर्बंधुरा व्याप्ता । ५ इच्छानुवर्तनेन ।

सीताप्यूचे न ते दोषो न च लोकस्य कश्चन । न चान्यस्यापि कस्यापि किं तु मत्पूर्वकर्मणाम् ॥ २२९ ॥
निर्विण्णा कर्मणामीदृग्दुःखावर्तप्रदायिनाम् । ग्रहीष्यामि परिव्रज्यां तेषामुच्छेदकारिणीम् ॥ २३० ॥
इत्युक्त्वा मैथिली केशानुच्चखान स्वमुष्टिना । रामस्य चार्पयामास शक्रस्येव जिनेश्वरः ॥ २३१ ॥
सद्यो मुमूर्छ काकुत्स्थो नोत्तस्थौ यावदेष च । तावत्सीता ययौ साधुजयभूषणसंनिधौ ॥ २३२ ॥
केवली स जयभूषणो मुनिर्मैथिलीं विधिवदप्यदीक्षयत् ।
सुप्रभाख्यगणिनीपरिच्छदे तां चकार च तपःपरायणाम् ॥ २३३ ॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरित्रे महाकाव्ये
सप्तमे पर्वणि सीताशुद्धिव्रतग्रहणो
नाम नवमः सर्गः ।

## ॥ अथ दशम सर्गः ॥

अथ सिक्तश्चंदनेन लब्धसंज्ञो रघूद्वहः । व्याजहार क्व ननु सा सीतादेवी मनस्विनी ॥ १ ॥
भो भूचराः खेचराश्च न चेद्यूयं मुमूर्षवः । तन्मे लुंचितकेशामप्याशु दर्शयत प्रियाम् ॥ २ ॥
वत्स वत्सैहि सौमित्रे तूणौ तूणौ धनुर्धनुः । यदमी सन्त्युदासीनाः सुस्थिता दुस्थिते मयि ॥ ३ ॥
इत्युक्त्वा धन्व गृह्णंतं तं नत्वा लक्ष्मणोऽब्रवीत् । आर्यार्य किमिदं लोकः खल्वेष तव किंकरः ॥ ४ ॥
सीतां यथा दोषभीतोऽत्याक्षीस्त्वं न्यायनैष्ठिकः । भवभीता स्वार्थनिष्ठा तथा सा सर्वमत्यजत् ॥ ५ ॥
प्रत्यक्षमिह वः सीता स्वयमुत्पाट्य कुंतलान् । आददे विधिवद्दीक्षां जयभूषणसंनिधौ ॥ ६ ॥
इदानीमेव तस्यर्षेरुदपद्यत केवलम् । तज्ज्ञानमहिमावश्यकृत्यमस्ति तवापि हि ॥ ७ ॥
तत्रास्ते स्वामिनी सीता स्वामिन्नात्तमहाव्रता । दर्शयन्ती मुक्तिमार्गे सतीमार्गमिवानघा ॥ ८ ॥
रामः प्रकृतिमालंब्योवाच साधु मम प्रिया । उपाददे परिव्रज्यां तस्य केवलिनोऽन्तिके ॥ ९ ॥
इत्युक्त्वा सपरीवारो जगाम जयभूषणम् । नत्वा च देशनां तस्माच्छुश्राव रघुपुंगवः ॥ १० ॥
देशनांते च पप्रच्छ नात्मानं वेद्म्यहं प्रभो । भव्योऽहं किमुताभव्यस्तदाचक्ष्व प्रसीद मे ॥ ११ ॥
अथाख्यत्केवली सोऽपि भव्योऽसि त्वं न केवलम् । सिद्धिं यास्यस्यनेनैव जन्मनोत्पन्नकेवलः ॥ १२ ॥
रामः पप्रच्छ भूयोऽपि मोक्षः प्रव्रज्यया भवेत् । सर्वत्यागेन [१]सा किं तु लक्ष्मणो दुस्त्यजो मम ॥ १३ ॥

---

१ सा प्रव्रज्या सर्वत्यागेन भवेत् परतु लक्ष्मणो मम दुस्त्यजोऽतः सर्वत्यागः कथं भवेदिति तात्पर्यम् ।

मुनिराख्यदवश्यं ते भोक्तव्या बलसंपदः । तदन्ते त्यक्तसंगः सन् प्रव्रज्य शिवमाप्स्यसि ॥ १४ ॥
नत्वा बिभीषणोऽपृच्छत् केन प्राग्जन्मकर्मणा । जहार रावणः सीतां लक्ष्मणस्तं न्यहन् युधि ॥ १५ ॥
सुग्रीवो भामंडलश्च तथेमौ लवणांकुशौ । अहं च कर्मणा केनात्यंतरक्ता रघूद्वहे ॥ १६ ॥
भगवानाचचक्षेऽथ भरतार्धेऽत्र दक्षिणे । पुरे क्षेमपुरे नाम्ना नयदत्तोऽभवद्वणिक् ॥ १७ ॥
धनदत्तवसुदत्तौ सुनंदाकुक्षिजौ सुतौ । तस्याभूतां तयोर्मित्रं याज्ञवल्क्योऽभवद्द्विजः ॥ १८ ॥
नाम्ना सागरदत्तश्च पुरे तस्मिन्नभूद्वणिक् । तस्य सूनुर्गुणधरः कन्या गुणवती पुनः ॥ १९ ॥
दत्ता सागरदत्तेन नयदत्तात्मजन्मने । धनदत्ताय गुणवत्यनुरूपगुणाय सा ॥ २० ॥
श्रीकांतनाम्ने चाढ्याय तत्रत्यायार्थलोभतः । ददौ गुणवतीं भद्रं माता रत्नप्रभा पुनः ॥ २१ ॥
याज्ञवल्क्यस्तु तज्ज्ञात्वा नयदत्तात्मजन्मनोः । स्वमित्रयोः समाचख्यावसहो मित्रवंचने ॥ २२ ॥
वसुदत्तस्ततो गत्वा श्रीकांतमवधीन्निशि । श्रीकांतेनापि खड्गेन वसुदत्तो निपातितः ॥ २३ ॥
विंध्याटव्यामभूतां तावुभावपि कुरंगकौ । गुणवत्यप्यनूढैव मृत्वा तत्राभवन्मृगी ॥ २४ ॥
तस्याः कृते च तत्रापि युद्ध्वा पंचत्वमीयतुः । मिथो वैरेण तावेवं भूयांसं भ्रेमतुर्भवम् ॥ २५ ॥
तदानीं धनदत्तोऽपि स्वभ्रातृवधपीडितः । निर्धर्मोऽटन्निशि साधून् ददर्श क्षुधितोऽन्यदा ॥ २६ ॥
ययाचे भोजनं तेभ्यस्तेष्वेको मुनिरब्रवीत् । दिवापि न हि साधूनां भक्तपानादिसंग्रहः ॥ २७ ॥
तवापि नोचितं रात्रौ भोक्तुं पातुं च भद्रक । को वेत्ति जीवसंसक्तिमन्नादौ तमसीदृशे ॥ २८ ॥

इत्यादि बोधितस्तेन सुधयेवोक्षितो हृदि । श्रावकीभूय मृत्वा च सौधर्मे त्रिदशोऽभवत् ॥ २९ ॥
च्युत्वा महापुरपुरे धारणीमेरुनन्दनः । नाम्ना पद्मरुचिः श्रेष्ठी परमश्रावकोऽभवत् ॥ ३० ॥
सोऽन्यदा गोकुलं गच्छन्नश्वारूढो यदृच्छया । जरद्वृषभमद्राक्षीन्मुमूर्षुं पतितं पथि ॥ ३१ ॥
कृपालुः सोवरुह्याश्वान्निकटीभूय तस्य तु । कर्णमूले ददौ पंचपरमेष्ठिनमस्कृतीः ॥ ३२ ॥
मृत्वा च तत्प्रभावेण तत्रैव स सुतोऽभवत् । छत्रच्छायनरेन्द्रश्रीदत्तयोर्वृषभध्वजः ॥ ३३ ॥
स्वैरं भ्रमन् सोऽन्यदा तां जरद्वृषभुवं ययौ । लेभे च जातिस्मरणं प्राग्जन्मस्थानदर्शनात् ॥ ३४ ॥
तत्र चाकारयच्चैत्यं तस्य चैत्यस्य चैकतः । भित्तावालेखयामास मुमूर्षं तं जरद्गवम् ॥ ३५ ॥
तत्कर्णान्ते नमस्कारदायिनं पुरुषं च तम् । तदभ्यर्णे तदीयं च सपर्याणं तुरंगमम् ॥ ३६ ॥
आरक्षांस्तत्र चादिक्षच्चित्रं परमार्थतः । इदं विदन्नुदीक्ष्येत स ज्ञाप्यस्त्वरितं मम ॥ ३७ ॥
इत्युक्त्वा स ययौ वेश्म चैत्ये तत्रान्यदा पुनः । वंदनायाययौ पद्मरुचिः स श्रेष्ठिपुंगवः ॥ ३८ ॥
वंदित्वा तत्र सोऽर्हन्तं भित्तिचित्रमुदैक्षत । सर्वं मे संवदत्येतदित्यूचे च सविस्मयः ॥ ३९ ॥
विज्ञप्तोऽथ तदारक्षैस्तत्रागाद्वृषभध्वजः । किं वेत्सि चित्रवृत्तांतमित्यपृच्छच्च तं नरम् ॥ ४० ॥
गवेऽस्मै म्रियमाणाय नमस्कारानदां पुरा । इहाभिज्ञेन केनापि लिखितोऽस्मीत्युवाच सः ॥ ४१ ॥
तं नत्वोवाच वृषभध्वजो योऽयं जरद्गवः । राजपुत्रोऽभवं सोऽहं नमस्कारप्रभावतः ॥ ४२ ॥
कामयास्यमहं योनिं तिर्यग्योनिस्तदाप्यहम् । कृपालुस्त्वं न चेन्मह्यं नमस्कारानदास्यथाः ॥ ४३ ॥

---

१ सिक्तः ।

सर्वथा त्वं गुरुः स्वामी दैवतं चासि मे खलु । भुंक्ष्व राज्यमिदं प्राज्यं त्वया यत्तं ममापि यत् ॥ ४४ ॥
इत्युक्त्वा पद्मरुचिना सहैव वृषभध्वजः । विजह्राराकृतद्वैधः पालयञ्छ्रावकव्रतम् ॥ ४५ ॥
श्रावकत्वं चिरं सम्यक् पालयित्वा विपद्य च । ईशानकल्पे जज्ञाते तौ देवौ परमर्द्धिकौ ॥ ४६ ॥
च्युत्वा ततः पद्मरुचिर्मेरोरपरतो गिरौ । वैताढ्ये नगरे नंदावर्ते नंदीश्वरात्मजः ॥ ४७ ॥
कनकाभाकुक्षिजन्मा नयनानंद इत्यभूत् । राज्यं भुक्त्वा परिव्रज्य माहेन्द्रे त्रिदशोऽभवत् ॥ ४८ ॥
॥ युग्मम् ॥
च्युत्वा च प्राग्विदेहेषु क्षेमायां पुरि भूपतेः । विपुलवाहनस्याभूत्पद्मावत्यां स नंदनः ॥ ४९ ॥
श्रीचंद्रो नाम भुक्त्वा च राज्यं प्रव्रज्य चान्तिके । समाधिगुप्तस्य मुनेर्ब्रह्मलोकेन्द्रतां ययौ ॥ ५० ॥
॥ युग्मम् ॥
च्युत्वा ततोऽयं पद्मोऽभूद्बलभद्रो महाबलः । सुग्रीव एष वृषभध्वजजीवस्त्वभूत्क्रमात् ॥ ५१ ॥
भ्रांत्वा श्रीकांतजीवोऽभून्मृणालकन्दपत्तने । राजसूनुर्वज्रकंठो शंभुहेमवतीभवः ॥ ५२ ॥
भ्रांत्वा च वसुदत्तोऽभूच्छंभुराजपुरोधसः । विजयस्य रत्नचूडाभवः श्रीभूतिरात्मजः ॥ ५३ ॥
गुणवत्यपि सा भ्रांत्वा श्रीभूतेस्तस्य नंदना । सरस्वतीकुक्षिभवा नाम्ना वेगवतीत्यभूत् ॥ ५४ ॥
सोद्यौवनान्यदा साधुं प्रतिमास्थं सुदर्शनम् । वंद्यमानं जनैर्दृष्ट्वा सोपहासमदोऽवदत् ॥ ५५ ॥
अहो साधुरयं दृष्टः पुरा क्रीडन्महेलया । सानेन प्रेषितान्यत्र तं वन्दध्वं कथं जनाः ॥ ५६ ॥

१ न कृत द्वैधं येन सोऽभिन्न इति यावत् । २ स्त्रिया ।

श्रुत्वा विपरिणम्याशु लोकः सर्वोऽपि तं मुनिम् । विप्लावयितुमारेभे कलंकोद्घोषपूर्वकम् ॥ ५७ ॥
न मे यावत्कलंकोऽयमुत्तरिष्यति सर्वथा । न तावत्पारयिष्यामीत्यभिजग्राह सोऽप्यृषिः ॥ ५८ ॥
ततश्च देवतारोषाच्छूनं वेगवतीमुखम् । साधुव्यतिकरं ज्ञात्वा सा पित्रा भर्त्सिता भृशम् ॥ ५९ ॥
रोगात् पितुश्च सा भीता सुदर्शनमुनेः पुरः । प्रत्यक्षं सर्वलोकानामित्युच्चैःस्वरमब्रवीत् ॥ ६० ॥
निर्दोषः सर्वथासि त्वं दोषोऽलीकोऽयमेव ते । मयैवारोपितः स्वामिंस्तितिक्षस्व क्षमानिधे ॥ ६१ ॥
श्रुत्वेति तद्वचो लोको भूयोऽप्यानर्च तं मुनिम् । श्लाघाभूद्वेगवती तदादि श्राविका च सा ॥ ६२ ॥
तां च रूपवतीं दृष्ट्वा ययाचे शंभुभूपतिः । दास्ये मिथ्यादृशे नेति श्रीभूतिः प्रत्युवाच तम् ॥ ६३ ॥
शंभुर्निहत्य श्रीभूतिं बुभुजे तां बलादपि । भवान्तरे ते वधाय भूयासमिति साशपत् ॥ ६४ ॥
शंभुनापि विमुक्ता सा हरिकांतार्यिकान्तिके । प्रवव्राजाथ पूर्णायुर्ब्रह्मलोकमुपाययौ ॥ ६५ ॥
ततश्च्युत्वा शंभुजीवरक्षोनाथस्य मृत्यवे । निदानवशतो जज्ञे सीतेयं जनकात्मजा ॥ ६६ ॥
सुदर्शनमुनेस्तस्यालीकदोषाधिरोपणात् । अस्याः कलंकोऽलीकोऽयं लोकेनेहाधिरोपितः ॥ ६७ ॥
भवं भ्रान्त्वा शंभुजीवोऽप्युदपादि द्विजन्मनः । कुशध्वजस्य सावित्र्यां प्रभासो नाम नन्दनः ॥ ६८ ॥
स प्रवव्राज विजयसेनर्षेरन्तिकेऽन्यदा । परमं च तपस्तेपे सहमानः परीषहान् ॥ ६९ ॥
संमेतयात्राचलितं विद्याधरनरेश्वरम् । कनकप्रभमद्राक्षीदिन्द्रवत्परमर्द्धिकम् ॥ ७० ॥
तपसानेन भूयासमीदृगृद्धिरिति व्यधात् । स निदानं विपद्याथोत्पेदे कल्पे तृतीयके ॥ ७१ ॥

---

१ श्यामम् । २ निर्मला ।

ततश्च्युत्वा रावणोऽभूत् खेचरेन्द्रस्तवाग्रजः । कनकप्रभऋद्धेर्यो निदानमकरोत्तदा ॥ ७२ ॥
धनदत्तवसुदत्तमित्रं यस्तु द्विजोऽभवत् । याज्ञवल्क्यो भवं भ्रान्त्वा त्वमभूः स बिभीषणः ॥ ७३ ॥
राज्ञा हतस्तु श्रीभूतिर्दिवं जगाम ततश्च्युतः । सुप्रतिष्ठपुरे विद्याधरोऽजनि पुनर्वसुः ॥ ७४ ॥
स पुंडरीकविजयेऽपजहार स्मरातुरः । कन्यां त्रिभुवनानंदचक्रिणोऽनंगसुन्दरीम् ॥ ७५ ॥
चक्रिणा प्रेषितैर्विद्याधरैर्युध्याकुलस्य तु । विमानात्तस्य चापप्तन्निकुञ्जेऽनंगसुंदरी ॥ ७६ ॥
कृत्वा निदानं तत्प्राप्त्यै प्रव्रज्य च पुनर्वसुः । स्वर्गं ययौ ततश्च्युत्वा लक्ष्मणोऽयमजायत ॥ ७७ ॥
वनस्थिता साप्यनंगसुंदर्युग्रं तपोऽकरोत् । विहितानशना चांते जग्रसेऽजगरेण सा ॥ ७८ ॥
मृत्वा समाधिना साभूद्देवी कल्पे द्वितीयके । ततश्च्युत्वा विशल्याभूल्लक्ष्मणस्य महिष्यसौ ॥ ७९ ॥
योऽभूद्गुणवतीभ्राता नाम्ना गुणधरः स तु । भवं भ्रांत्वाभवद्राजपुत्रः कुंडलमंडितः ॥ ८० ॥
श्रावकत्वं पालयित्वा चिराय च विपद्य सः । सीतासोदर एषोऽभूद्भामंडलनरेश्वरः ॥ ८१ ॥
इतोऽभूतां च काकंद्यां वामदेवद्विजन्मनः । श्यामलाकुक्षिजौ पुत्रौ वसुनन्दसुनन्दनौ ॥ ८२ ॥
एकदा च तयोर्गेहे तिष्ठतोराययौ मुनिः । मासोपवासी ताभ्यां च भक्तितः प्रतिलंभितः ॥ ८३ ॥
मृत्वा तद्दानधर्मेणोत्तरेषु तु कुरुष्वथ । अभूतां युग्मिनौ मृत्वा सौधर्मे तौ सुरौ ततः ॥ ८४ ॥
च्युत्वाभूतां च काकंद्यां रतिवर्धनभूपतेः । सुदर्शनाभवौ पुत्रौ प्रियंकरशुभंकरौ ॥ ८५ ॥
राज्यं चिरं पालयित्वा प्रव्रज्य च विपद्य च । सुरौ ग्रैवेयकेऽभूतां च्युत्वा च लवणांकुशौ ॥ ८६ ॥
सुदर्शना तयोः पूर्वभवमाता भवं चिरम् । भ्रान्त्वाभूदेष सिद्धार्थोऽध्यापको रामपुत्रयोः ॥ ८७ ॥

एवं मुनिवचः श्रुत्वा संवेगं बहवो ययुः । तदैव रामसेनानीः कृतांतः प्राव्रजत्पुनः ॥ ८८ ॥
अथोत्थाय नमश्चक्रे काकूत्स्थो जयभूषणम् । उपसीतं च गत्वैवं चिन्तयामास चेतसि ॥ ८९ ॥
असौ शिरीषमृद्वंगी राजपुत्री मम प्रिया । सीता शीतातपःक्लेशं कथं नाम सहिष्यते ॥ ९० ॥
इमं संयमभारं च सर्वभारातिशायिनम् । उद्वक्ष्यति कथं नाम हृदयेनापि दुर्वहम् ॥ ९१ ॥
यद्वा सतीव्रतं यस्या न भंक्तुं रावणोऽप्यलम् । सा निर्व्यूढप्रतिज्ञैवं भाविनी संयमेऽपि हि ॥ ९२ ॥
एवं विमृश्य वैदेहीं ववन्दे लक्ष्मणाग्रजः । लक्ष्मणोऽन्ये च राजानः श्रद्धानिर्धौतचेतसः ॥ ९३ ॥
इतश्च सपरीवारो रामोऽयोध्यां ययौ पुनः । सीताकृतान्तवदनौ तेपाते च परं तपः ॥ ९४ ॥
तपस्तप्त्वा ब्रह्मलोके कृतांतवदनो ययौ । सीतापि षष्टिं वर्षाणि विदधे विविधं तपः ॥ ९५ ॥
त्रयस्त्रिंशदहोरात्रीं कृत्वान्तेऽनशनं मृता । द्वाविंशत्यर्णवायुः सोऽच्युतेन्द्रः समजायत ॥ ९६ ॥
इतश्च शैले वैताढ्येऽभूत् कांचनपुरे पुरे । नामतः कनकरथो विद्याधरपतिस्तदा ॥ ९७ ॥
मन्दाकिनीचंद्रमुख्योः कन्ययोः स स्वयंवरे । सपुत्रान् भूपतीन्रामलक्ष्मणादीनथाह्वयत् ॥ ९८ ॥
तत्रासीनेषु भूपेषु मंदाकिन्या निजेच्छया । अनंगलवणो वव्रे चन्द्रमुख्याङ्कुशः पुनः ॥ ९९ ॥
लक्ष्मणस्य सुतास्तत्र क्रोधादुत्तस्थिरे युधि । सार्धे शते द्वे अपि ते युगपच्छ्रीधरादयः ॥ १०० ॥
श्रुत्वा संनह्यतस्तांश्च प्रोचाते लवणांकुशौ । को नाम योत्स्यतेऽमीभिरवध्या भ्रातरः खलु ॥ १०१ ॥
यथा न तातयोर्भेदः कोऽपि ज्येष्ठकनिष्ठयोः । तत्पुत्राणां तथास्माकममीषामपि मास्तु सं:[1] ॥ १०२ ॥

---

१ स भेदः ।

दुःकर्मारंभसंमुखम् ॥ १०३ ॥
एवं तयोर्वचो ज्ञात्वा चरेभ्यो लक्ष्मणात्मजाः । वीक्षांपन्ना निनिन्दुः स्वं जगृहुर्व्रतम् ॥ १०४ ॥
सद्यः संवेगमापन्नाः पितरावनुमान्य ते । महाबलमुनेः पादपद्मान्ते अयोध्यामीयतुः पुरीम् ॥ १०५ ॥
जातोद्वाहौ तदानीं तावनंगलवणांकुशौ । सहैव सीरिशार्ङ्गिभ्यामयोध्यामीयतुः पुरीम् ॥ १०५ ॥
इतश्च स्वपुरे हर्म्यमूर्ध्नि भामंडलः स्थितः । कदाचिदेवं मनसा चिन्तयामास शुद्धधीः ॥ १०६ ॥
श्रेणिद्वयं वशीकृत्यास्खलन् सर्वत्र लीलया । विहृत्यान्ते चात्तदीक्षो भवेयं पूर्णवांछितः ॥ १०७ ॥
एवं चिन्तयतस्तस्य मूर्ध्नि विद्युत्पपात खात् । स मृत्वा देवकुरुषु जज्ञे युगलधर्मिषु ॥ १०८ ॥
इतश्च हनुमांश्चैत्रे चैत्यवन्दनहेतवे । मेरुं गतो निवृत्तोऽस्तमयंतं सूर्यमैक्षत ॥ १०९ ॥
एवं च दध्यावुदयो यथा ह्यस्तं तथा खलु । निदर्शनमयं सूर्यो धिग्धिक् सर्वमशाश्वतम् ॥ ११० ॥
एवं विचिन्त्य स्वपुरे गत्वा राज्यं सुते न्यधात् । धर्मरत्नाचार्यपार्श्वे प्रव्रज्यामाददे स्वयम् ॥ १११ ॥
तमनुप्राव्रजन्राज्ञां सार्धसप्तशतानि च । आर्यालक्ष्मीवतीपार्श्वेऽस्थुस्तत्पत्न्यश्च दीक्षिताः ॥ ११२ ॥
ध्यानानलेन निर्दह्य क्रमात् कर्माणि मूलतः । श्रीशैलः प्राप्य शैलेशीं जगाम पदमव्ययम् ॥ ११३ ॥
हनूमंतं प्रव्रजितं ज्ञात्वा दध्यौ रघूद्वहः । हित्वा भोगसुखं कष्टां दीक्षां किमयमाददे ॥ ११४ ॥
तां रामचिन्तामवधेर्ज्ञात्वा सौधर्मवासवः । ऊचे मध्येसभमहो कर्मणां विषमा गतिः ॥ ११५ ॥
रामश्चरमदेहोऽपि यद्धर्मं हसति स्वयम् । सौख्यं विषयसंभूतं प्रत्युतैष प्रशंसति ॥ ११६ ॥
अथवा ज्ञातमनयो रामलक्ष्मणयोर्मिथः । स्नेहो गाढतरः कोऽपि भवानिर्वेदकारणम् ॥ ११७ ॥

१ विस्मय प्राप्ताः । २ अयति गच्छति तमयंतम । ३ दृष्टांतः ।

द्वौ देवौ कौतुकात्तत्र तयोः स्नेहं परीक्षितुम् । उपेयतुरयोध्याया लक्ष्मणस्य निकेतने ॥ ११८ ॥
दर्शयामासतुः सद्यो मायया लक्ष्मणस्य तौ । सर्वमन्तःपुरस्त्रैणमाक्रंदत् करुणस्वरम् ॥ ११९ ॥
हा पद्म पद्मनयन बन्धुपद्मदिवाकर । अकांडमृत्युः कोऽयं ते विश्वस्यापि भयंकरः ॥ १२० ॥
एवं च रुदतीर्वक्षांस्याघ्नाना मुक्तकुंतलाः । अन्तःपुरवधूः प्रेक्ष्य विषण्णो लक्ष्मणोऽवदत् ॥ १२१ ॥
ममासौ किं मृतो भ्राता जीवितस्यापि जीवितम् । पिशुनेन कृतांतेन किं कृतं छलघातिना ॥ १२२ ॥
एवं च भाषमाणस्य वचसा सह जीवितम् । सौमित्रेर्निर्ययौ कर्मविपाको दुरतिक्रमः ॥ १२३ ॥
स्वर्णस्तंभमवष्टभ्य स्थितः सिंहासनेऽपि हि । सोऽथ प्रसारिताक्षोऽस्थाल्लेप्यमूर्तिरिवाक्रियः ॥ १२४ ॥
परासुं लक्ष्मणं दृष्ट्वा विषण्णौ तौ सुरावपि । मिथो जजल्पतुरहो किमावाभ्यामिदं कृतम् ॥ १२५ ॥
विश्वाधारः पुमानेष किमावाभ्यां हहा हतः । इति स्वं बहु निन्दन्तौ स्वकल्पं जग्मतुः पुनः ॥ १२६ ॥
परासुं लक्ष्मणं प्रेक्ष्य तत्र चान्तःपुरस्त्रियः । चक्रन्दुः सपरीवारा विलुलत्कुंतलालिकाः ॥ १२७ ॥
तच्चाक्रन्दितमाकर्ण्य तत्र रामः समाययौ । उवाच च किमारब्धमविज्ञायाप्यमंगलम् ॥ १२८ ॥
जीवन्नेवैष तिष्ठामि जीवत्येष च मेऽनुजः । कोऽप्यमुं बाधते व्याधिर्भेषजं तत्प्रतिक्रिया ॥ १२९ ॥
इत्युक्त्वाजुहवद्रामो वैद्याञ्ज्योतिषिकानपि । प्रयोगं मंत्रतंत्राणां कारयामास चासकृत् ॥ १३० ॥
वैफल्ये मंत्रतंत्राणां मूर्छां प्राप रघूद्वहः । कथंचिल्लब्धसंज्ञः सन् विललापोच्चकैःस्वरम् ॥ १३१ ॥
ते बिभीषणसुग्रीवशत्रुघ्नाद्या उदश्रवः । विमुक्तकंठं रुरुदुर्हताः स्म इति भाषिणः ॥ १३२ ॥

१ बन्धव एव पद्मानि तेषु दिवाकरः सूर्यस्तत्संबुद्धौ । २ मृतम् । ३ विलुलन् कुंतलालिः केशपङ्क्तिर्यासां ताः ।

कौशल्याद्या मातरश्च स्नुषाभिः सह साश्रवः। भूयो भूयोऽपि मूर्च्छन्त्यश्चक्रन्दुः करुणस्वरम् ॥ १३३ ॥
प्रतिमार्गं प्रतिगृहं प्रत्यट्टं क्रन्दनात्तदा। शोकाद्वैतमभूत् सर्वं रसान्तरमलिम्लुचम् ॥ १३४ ॥
नत्वाथ राममूचाते कुमारौ लवणांकुशौ। भवादद्यातिभीतौ स्वः कनीयस्तातमृत्युना ॥ १३५ ॥
अकस्मादापतत्येष मृत्युः सर्वस्य तन्नरैः। तत्परैः परलोकाय स्थातव्यं मूलतोऽपि हि ॥ १३६ ॥
अनुमन्यस्व दीक्षायै न नो युक्तमतः परम्। कनीयस्तातमुक्तानां गृहे स्थातुं मनागपि ॥ १३७ ॥
इत्युक्त्वा राममानम्यामृतघोषमुनेः पुरः। भक्तौ जगृहतुर्दीक्षां क्रमाच्च शिवमीयतुः ॥ १३८ ॥
रामो भ्रातृविपत्त्या च वियोगेन च पुत्रयोः। मुमूर्च्छ भूयो भूयोऽपि मोहादेवं जगाद च ॥ १३९ ॥
मयापमानता काचित्कचिच्चक्रेऽद्य बान्धव। कस्मादकस्मादालंबि भवता मौनमीदृशम् ॥ १४० ॥
त्वयि ह्येवं स्थिते भ्रातः पुत्राभ्यामपि चोज्झितः। प्रविशंति छिद्रशते नृणां भूतशतानि हि ॥ १४१ ॥
उन्मत्तभाषिणं चैवं राममेत्य कथंचन। बिभीषणाद्याः संभूय जगदुर्गद्गदस्वरम् ॥ १४२ ॥
धीरेष्वपि हि धीरस्त्वं वीरो वीरेष्विव प्रभो। लज्जाकरमिदं तस्मादधैर्यं मुंच संप्रति ॥ १४३ ॥
लोकप्रसिद्धमधुना सौमित्रेरौर्ध्वदैहिकम्। अंगसंस्कारपूर्वं हि कर्तव्यं समयोचितम् ॥ १४४ ॥
इत्युक्त्या कुपितो रामस्तानूचे विधुताधरः। जीवत्येष हि मे भ्राता किमिदं वो वचः खलाः ॥ १४५ ॥
सर्वेषां वः सबंधूनां ज्वलने दाहपूर्वकम्। मृतकार्यं विधातव्यं दीर्घायुस्तान्ममानुजः ॥ १४६ ॥
भ्रातर्भ्रातर्ब्रूहि शीघ्रं वत्स लक्ष्मण नन्वयम्। दुर्जनानां प्रवेशोऽस्ति किं खेदयसि मां चिरम् ॥ १४७ ॥
यद्वा खलसमक्षं न वत्स कोपस्तवोचितः। इत्युक्त्वांसे तमारोप्य ययावन्यत्र राघवः ॥ १४८ ॥

नीत्वा स्नानगृहे रामः कदाप्यस्नपयत् स्वयम् । ततश्च तं स्वहस्तेन विलिलेप विलेपनैः ॥ १४९ ॥
आनाय्य दिव्यभोज्यानि पूरयित्वा च भाजनम् । कदाचित्तस्य पुरतो मुमोच स्वयमेव च ॥ १५० ॥
कदाप्यारोपयदंके निजे चुंबञ्छिरो मुहुः । कदाप्यस्वापयत्तल्पे वाससाछादिते स्वयम् ॥ १५१ ॥
कदापि स्वयमाभाष्य स्वयं स्म प्रतिभाषते । स्वयं संवाहकीभूय ममर्द च कदाचन ॥ १५२ ॥
इत्यादि चेष्टा विकलाः स्नेहोन्मत्तस्य कुर्वतः । ययौ रामस्य षण्मासी विस्मृताशेषकर्मणः ॥ १५३ ॥
श्रुत्वा च तं तथोन्मत्तमिन्द्रजित्सुंदसूनवः । खेचरा विद्विषोऽन्येऽपि रामस्येयुर्जिघांसवः ॥ १५४ ॥
अयोध्यां रुरुधुः सैन्यैरुन्मत्तरघुपुंगवाम् । सुप्तसिंहां गिरिगुहामिव व्याधाश्छलौजसः ॥ १५५ ॥
रामोऽपि लक्ष्मणं स्वांके निधायास्फालयद्धनुः । वज्रावर्तमकालेऽपि संवर्तस्य प्रवर्तकम् ॥ १५६ ॥
तदा चासनकंपेन माहेन्द्रान्नाकिभिः समम् । जटायुराययौ रामं द्रढात्प्राग्जन्मसौहृदात् ॥ १५७ ॥
अद्यापि नाकिनो रामगृह्या इति विभाषिणः । इन्द्रजित्पुत्रमुख्यास्ते दुद्रुवुः खेचरा द्रुतम् ॥ १५८ ॥
अत्र देवसखा रामो हन्ता नोऽग्रेबिभीषणः । इति भीता लज्जिताश्च ते संवेगं परं दधुः ॥ १५९ ॥
ते मुनेरतिवेगस्य पार्श्वे संवेगधारिणः । उपेत्य दीक्षां जगृहुर्गृहवासपराङ्मुखाः ॥ १६० ॥
ततो जटायुरमरो बोधार्थं राघवस्य सः । पुरःस्थाय तरुं शुष्कं सिषेच मुहुरंभसा ॥ १६१ ॥
क्षिप्त्वा करीषं दृषदि रोपयामास पद्मिनीम् । बीजान्युवापाकालेऽपि मृतोक्षणा लांगलेन च ॥ १६२ ॥

---

१ अग्रे पुरः विभीषणो यस्य इति रामविशेषणम् । २ पुरः स्थित्वा । ३ शुष्कगोमयादि । ४ मृतवृषभेण ।

रामस्यान्यदप्युदभावयत् ॥ १६३ ॥
यंत्रे च वालुकाः क्षिप्त्वा तैलार्थं पर्यपीलयत् । इत्याद्यसाधकं रामस्यान्यदप्युदभावयत् ॥ १६४ ॥
रामस्तमूचे किं शुष्कं तरुं सिंचसि भो मुधा । फलं दूरेऽस्तु किं नाम मुसलं क्वापि पुष्यति ॥ १६५ ॥
शिलायां पद्मिनीखंडमारोपयसि मुग्ध किम् । किं वा वपसि बीजानि निर्जलेऽपि मृतैर्वृषैः ॥ १६६ ॥
न वालुकान्यस्तैलं स्यात् किं पीलयसि मूर्ख भोः । अनुपायविदस्तेऽसौ प्रयासः सर्वथा वृथा ॥ १६७ ॥
स्मित्वा जटायुरप्यूचे यदीयदपि वेत्सि भोः । अज्ञानचिन्हं मृतकं स्कंधे वहसि तर्हि किम् ॥ १६८ ॥
सौमित्रिवपुरालिंग्य रामस्तं प्रत्यभाषत । अमंगलं भाषसे किं त्यज दृष्टिपथं मम ॥ १६९ ॥
एवं जटायुषं रामे भाषमाणेऽवधेर्विदन् । कृतान्तवदनो देवस्तद्बोधार्थं समाययौ ॥ १७० ॥
स्कन्धे स्त्रीमृतकं न्यस्योपरामं विचचार सः । रामोऽप्यूचे किमुन्मत्तोऽस्येवं स्त्रीमृतकं वहन् ॥ १७१ ॥
प्रत्युवाच कृतांतोऽपि भाषसे किममंगलम् । ममैषा प्रेयसी त्वं तु किं शवं वहसि स्वयम् ॥ १७२ ॥
मृतां जानासि मे भार्यामुह्यमानां मया यदि । निजस्कंधस्थितं किं न मृतकं वेत्सि बुद्धिमन् ॥ १७३ ॥
तेनैवं दर्शितैस्तैस्तैर्हेतुभिर्जातचेतनः । रामो दध्यौ किं नु सत्यं न जीवति ममानुजः ॥ १७४ ॥
ततस्तौ लब्धबोधाय रामाय स्वमशंसताम् । देवौ जटायुःकृतान्तौ निजस्थानं च जग्मतुः ॥ १७५ ॥
मृतकार्यं ततो रामश्चकार स्वानुजन्मनः । दीक्षां प्रपित्सुः शत्रुघ्नं राज्यादानाय चादिशत् ॥ १७६ ॥
अहमप्यनुयास्यामि भवत्पादानिति ब्रुवन् । प्रत्यादिदेश[1] शत्रुघ्नो राज्यं भवपराङ्मुखः ॥ १७७ ॥
ततो लवणपुत्रायानंगदेवाय राघवः । ददौ राज्यं स्वयं तुर्यपुरुषार्थाय[2] सत्वरः ।

१ निषिषेध । २ तुर्यः पुरुषार्थो मोक्षस्तस्मै ।

मुनिसुव्रतवंशस्य सुव्रतस्य महामुनेः। अर्हद्दासश्रावकेणोपदिष्टस्यान्तिकं ययौ ॥ १७८ ॥
तत्र शत्रुघ्नसुग्रीवबिभीषणविराधितैः। अन्यैश्च राजभिः सार्धं रामो व्रतमुपाददे ॥ १७९ ॥
रामभद्रे तु निष्क्रांते निष्क्रांतान्यथ षोडश। महीभुजां सहस्राणि भववैराग्ययोगतः ॥ १८० ॥
सप्तत्रिंशत्सहस्राणि प्राव्रजन् वरयोषितः। श्रीमत्याः श्रमणायाश्च ता बभूवुः परिच्छदे ॥ १८१ ॥
षष्ठ्यब्दीं गुरुपादांते विविधाभिग्रहोद्यतः। तेपे तपांसि रामर्षिः पूर्वांगश्रुतभावितः ॥ १८२ ॥
अथ रामः प्रह्नैकविहारो गुर्वनुज्ञया। एकाकी प्रययौ निर्भीरटव्यां गिरिकंदरे ॥ १८३ ॥
तस्यामेव विभावर्यां तत्र ध्यानजुषः सतः। उदभूदवधिज्ञानं रामभद्रमहामुनेः ॥ १८४ ॥
पश्यंश्चतुर्दशरज्जुप्रमं विश्वं करस्थवत्। देवाभ्यां हृतमज्ञासीद्गतं च नरकेऽनुजम् ॥ १८५ ॥
इदं च चिन्तयामास रामभट्टारकस्तदा। धनदत्ताभिधोऽभूवमहं पूर्वत्र जन्मनि ॥ १८६ ॥
वसुदत्तोऽभिधानेन लक्ष्मणोऽभून्ममानुजः। तत्राप्यकृतकृत्योऽसावेवमेव व्यपद्यत ॥ १८७ ॥
भवेऽस्मिन्मे वसुदत्तजीवोऽभूल्लक्ष्मणोऽनुजः। तत्राप्यमुष्य कौमारे मुधागाच्छरदां शतम् ॥ १८८ ॥
शतत्रयं मंडलित्वे चत्वारिंशत्तु दिग्जये। वर्षैकादशसहस्राः सार्धा राज्येऽब्दषष्टि च ॥ १८९ ॥
द्वादशाब्दसहस्राणि सर्वमायुरिति क्रमात्। ययावविरतस्यैव केवलं नरकावहम् ॥ १९० ॥
न दोषो देवयोः कोऽपि मायावधकयोस्तयोः[1]। विपाकः कर्मणामीदृग्भवत्येव शरीरिणः ॥ १९१ ॥
एवं विचिन्तयन्रामः कर्मच्छेदेऽधिकोद्यतः। तपःसमाधिनिष्ठोऽभून्निर्ममः सन् विशेषतः ॥ १९२ ॥

१ मायया वधकर्त्रोः।

अथ षष्ठोपवासान्ते प्राविशत् पारणाय सः । युगमात्रदत्तदृष्टिर्नगरे स्यन्दनस्थले ॥ १९३ ॥
निशाकरमिवावन्यामायान्तं नयनोत्सवम् । संमुखीनाः समापेतुः पौराः प्रचुरसंमदाः ॥ १९४ ॥
पौर्यः स्वस्वगृहद्वारि भिक्षादानाय तस्य च । विचित्रभोज्यपूर्णानि भाजनानि पुरो दधुः ॥ १९५ ॥
पौराणां हर्षतस्तत्र तुमुलोऽभूत्तथा यथा । स्तंभान् बभंजुः करिणो ययुश्चोत्कर्णतां हयाः ॥ १९६ ॥
रामोऽप्युज्झितधर्माभिरतत्वात् पौरढौकितम् । आहारं नाग्रहीत्तेभ्योऽभ्यागात्तु नृपवेश्मनि ॥ १९७ ॥
तत्र चोज्झितधर्मेणाहारेण प्रत्यलंभयत् । प्रतिनंदिनृपो रामं विधिवद्बुभुजे च सः ॥ १९८ ॥
अमरैर्विदधे तत्र वसुधारादिपंचकम् । भगवान् रामभद्रोऽपि तदरण्यं ययौ पुनः ॥ १९९ ॥
मा भूद्भूयः पुरक्षोभः संघट्टो मे च मा स्म भूत् । इति बुद्ध्या शुद्धबुद्धिः सोऽभिग्रहमिमं व्यधात्२००
अरण्येऽत्रैव चेद्भिक्षाकाले भिक्षोपलप्स्यते । तदानीं पारणं कार्यमस्माभिर्नान्यथा पुनः ॥ २०१ ॥
इत्यभिग्रहभृद्रामो निरपेक्षो वपुष्यपि । परं समाधिमापन्नोऽवतस्थे प्रतिमाधरः ॥ २०२ ॥
तत्रान्येद्युर्विपर्यस्तशिक्षेणाश्वेन वेगिना । आकृष्यमाण आयासीत्प्रतिनंदी नरेश्वरः ॥ २०३ ॥
पंके नंदनपुण्याख्यसरसोऽश्वो ममज्ज सः । समापपातानुपदं सैन्यं च प्रतिनंदिनः ॥ २०४ ॥
पंकात्तमश्वमुत्तार्य शिबिरं न्यस्य तत्र च । स्नात्वा च स नृपश्चक्रे भोजनं सपरिच्छदः ॥ २०५ ॥
तदा च पारितध्यानो रामर्षिः पारणेच्छया । तत्राजगाम भगवानभ्युत्तस्थौ च तं नृपः ॥ २०६ ॥
अवशिष्टैर्भक्तपानैः स रामं प्रत्यलंभयत् । कृतपारणके तस्मिन् रत्नवृष्टिरभूद्दिवः ॥ २०७ ॥

१ प्रचुरः समदो हर्षो येषां ते । २ उज्झितो धर्माय य आहारस्तस्मिन्नासक्तत्वात् । ३ विपरीतशिक्षेण ।

रामर्षिर्देशनां चक्रे प्रतिनंद्यादयोऽथ ते । बभूवुः श्रावकाः सम्यग्द्वादशव्रतधारिणः ॥ २०८ ॥
ततः प्रभृति तत्रैव रामस्तस्थौ चिरं वने । देवीभिर्वनवासाभिः पूज्यमानो महातपाः ॥ २०९ ॥
मासेनैकेन मासाभ्यां मासैस्त्रिचतुरैरपि । रामर्षिः पारयामास भवपारयियासया ॥ २१० ॥
पर्यंकस्थः कदाप्यस्थात् प्रलंबितभुजोऽन्यदा । कदाप्युत्कटिकासीन ऊर्ध्वबाहुः कदाचन ॥ २११ ॥
अंगुष्ठस्थोऽन्यदा तस्थौ पार्ष्णिस्थश्च कदापि हि । इति नानासनो ध्यानी स तेपे दुस्तपं तपः ॥ २१२ ॥
विहरन्नन्यदा रामो ययौ कोटिशिलां शिलाम् । विद्याधरसमक्षं या लक्ष्मणेन पुरोद्दधे ॥ २१३ ॥
तामध्यासीच्छिलां रामः क्षपकश्रेणिमाश्रितः । शुक्लध्यानांतरं भेजे निशायां प्रतिमाधरः ॥ २१४ ॥
तदा चावधिना ज्ञात्वा सीतेन्द्रः पर्यचिन्तयत् । अयं भवी[1] भवति चेद्रामो युज्येऽमुना पुनः ॥ २१५ ॥
अनुकूलैरुपसर्गैः क्षपकश्रेणिवर्तिनः । उपद्रवं करोम्यस्य यथा स्यान्मत्सुहृत्सुरः ॥ २१६ ॥
इति संचिंत्य सीतेन्द्र उपरामं समाययौ । विचक्रे च महोद्यानं वसंतर्तुविभूषितम् ॥ २१७ ॥
चुकूज कोकिलकुलं ववौ च मलयानिलः । रणंतो भ्रमरा भ्रेमुः कुसुमामोदमोदिनः ॥ २१८ ॥
चूतचंपककंकील्लिपाटला बकुलादयः । दधुः सद्योऽपि पुष्पाणि नव्यास्त्राणि मनोभुवः ॥ २१९ ॥
सीतारूपं च सीतेन्द्रो विकृत्य स्त्रीजनानपि । ऊचे प्रिय प्रिया तेऽस्मि सीतेह समुपस्थिता ॥ २२० ॥
रक्तं त्यक्त्वा तदानीं त्वामहं पंडितमानिनी । प्राव्रजं नाथ पश्चाच्च पश्चात्तापो ममात्यभूत् ॥ २२१ ॥
विद्याधरकुमारीभिराभिरद्याहमर्थिता । प्रसीद नाथे स्वं नाथं रामं नाथीकुरुष्व नः ॥ २२२ ॥

---

१ संसारी ।

त्वं च मुंच परिव्रज्यां रामस्य महिषी भव । त्वदादेशात्तस्य पत्न्यो भविष्यामोऽधुना वयम् ॥ २२३ ॥
अमूर्विद्याधरवधूस्तदुद्वह रघूद्वह । प्राग्वत्सह त्वया रंस्ये तां सहस्वावमाननाम् ॥ २२४ ॥
इति ब्रुवाणे सीतेन्द्रे वैक्रिय्यः[1] खेचरस्त्रियः । संगीतं विविधं चक्रुः स्मरोज्जीवनभेषजम् ॥ २२५ ॥
सीतेन्द्रवचनैस्तैश्च तेन संगीतकेन च । वसन्तेन च नाक्षुभ्यद्रामभद्रमहामुनिः ॥ २२६ ॥
माघस्य शुक्लद्वादश्यां तदा यामेऽन्तिमे निशि । उदपद्यत रामर्षेः केवलज्ञानमुज्ज्वलम् ॥ २२७ ॥
रामस्य केवलज्ञानमहिमानं सभक्तिकः । सीतेन्द्रो नाकिनोऽन्ये च विदधुर्विधिपूर्वकम् ॥ २२८ ॥
दिव्यस्वर्णाम्बुजासीनो दिव्यचामरराजितः । दिव्यातपत्रवान्रामो विदधे धर्मदेशनाम् ॥ २२९ ॥
देशनान्ते क्षमयित्वा सीतेन्द्रेण प्रणम्य च । सौमित्रिरावणगतिं पृष्टो रामर्षिरभ्यधात् ॥ २३० ॥
अधुना नरके तुर्ये सशंबूको दशाननः । लक्ष्मणश्चास्ति गतयः कर्माधीना हि देहिनाम् ॥ २३१ ॥
नरकायुश्चानुभूय तौ दशाननलक्ष्मणौ । नगर्यां विजयावत्यां प्राग्विदेहविभूषणे ॥ २३२ ॥
सुनन्दरोहिणीपुत्रौ जिनदाससुदर्शनौ । भविष्यतोऽर्हद्धर्मं च सततं पालयिष्यतः ॥ २३३ ॥
॥ युग्मम् ॥
ततो विपद्य सौधर्मे त्रिदशौ तौ भविष्यतः । च्युत्वा च विजयापुर्यां श्रावकौ भाविनौ पुनः ॥ २३४ ॥
ततोऽपि मृत्वा पुरुषौ हरिवर्षे भविष्यतः । तौ चावसानमासाद्य देवलोकं गमिष्यतः ॥ २३५ ॥
च्युत्वा च विजयापुर्यां जयकान्तजयप्रभौ । कुमारवार्तराड्लक्ष्म्योस्तौ कुमारौ भविष्यतः ॥ २३६ ॥

१ विक्रियया समुत्पन्नाः ।

जिनोक्तं संयमं तत्र पालयित्वा विपद्य च । गीर्वाणौ लान्तके कल्पे भविष्यत उभावपि ॥ २३७ ॥
तदा त्वमच्युताच्च्युत्वा क्षेत्रे चात्रैव भारते । सर्वरत्नमतिर्नाम चक्रवर्ती भविष्यसि ॥ २३८ ॥
च्युत्वा तौ भाविनाविन्द्रायुधमेघरथाभिधौ । सुतौ ते त्वं परिव्रज्य वैजयंते व्रजिष्यसि ॥ २३९ ॥
इन्द्रायुधः स तु जीवो रावणस्य भवत्रयम् । शुभं भ्रांत्वा तीर्थकरगोत्रकर्मार्जयिष्यति ॥ २४० ॥
ततो रावणजीवः स तीर्थनाथो भविष्यति । वैजयन्ताच्च्युतस्तस्य भावी गणधरो भवान् ॥ २४१ ॥
ततस्तौ यास्यतो मोक्षं स जीवो लक्ष्मणस्य तु । भवत्सूनुर्मेघरथो व्रजिष्यति गतीः शुभाः ॥ २४२ ॥
ततश्च पुष्करद्वीपे प्राग्विदेहविभूषणे । नगर्यां रत्नचित्रायां चक्रवर्ती भविष्यति ॥ २४३ ॥
चक्रवर्तिश्रियं भुक्त्वा परिव्रज्य क्रमेण च । स तीर्थनाथो भविता निर्वाणं च प्रपत्स्यते ॥ २४४ ॥
एवमाकर्ण्य सीतेन्द्रो रामभद्रं प्रणम्य च । ययौ प्राक्स्नेहवशतो दुःखभाग्यत्र लक्ष्मणः ॥ २४५ ॥
सिंहादिरूपैर्विकृतैस्तत्र शंबूकरावणौ । लक्ष्मणेन समं क्रुद्धौ युध्यमानौ ददर्श सः ॥ २४६ ॥
नैवं वो युध्यमानानां दुःखं भावीति वादिनः । परमाधार्मिकाः क्रुद्धा अग्निकुंडेषु तान्न्यधुः ॥ २४७ ॥
दह्यमानास्त्रयोऽप्युच्चैरटन्तो गलितांगकाः । ततः कृष्टा तप्ततैलकुंभ्यां निदधिरे बलात् ॥ २४८ ॥
विलीनदेहास्तत्रापि भ्राष्ट्रे चिक्षिपिरे चिरम् । तडत्तडिति शब्देन स्फुटन्तो दुद्रुवुः पुनः ॥ २४९ ॥
इत्यादि दुःखं तेषां स प्रेक्ष्योवाचासुरानिति । किं रे न वित्थ यदमी आसन् पुरुषपुंगवाः ॥ २५० ॥
अपयातासुरा दूरं मुंचतैतान्महात्मनः । निषिध्येत्यसुरानूचे सोऽथ शंबूकरावणौ ॥ २५१ ॥

युवाभ्यां तत्कृतं पूर्वं येनेमं नरकं गतौ । पूर्ववैरं किमद्यापि दृष्टोदर्कं न मुंचतम् ॥ २५२ ॥
तावप्येवं निषिध्येन्द्रः सौमित्रे रावणस्य च । रामकेवलिनाख्यातमाचख्यौ बोधहेतवे ॥ २५३ ॥
तावप्यथ बभाषाते साध्वकार्षीः कृपानिधे । भवद्भद्रोपदेशेन जाता नो दुःखविस्मृतिः ॥ २५४ ॥
प्राग्जन्मोपार्जितैस्तैस्तैः क्रूरैः कर्मभिरर्पितः । दीर्घो नौ नरकावासस्तद्दुःखं कोऽपनेष्यति ॥ २५५ ॥
इत्युक्त्या करुणापूर्णः सीतेन्द्रः प्रत्यवोचत । नेष्यामि सुरलोके त्रीनपि वो नरकादितः ॥ २५६ ॥
इत्युक्त्वा पाणिनोदध्रे स तांस्त्रीनपि ते पुनः । विशीर्य कणशः पेतुः पाणेः पारदवत्क्षणात् ॥ २५७ ॥
इत्युक्त्वा पाणिनोदध्रे स तांस्त्रीनपि ते पुनः । विशीर्य कणशः पेतुः पाणेः पारदवत्क्षणात् ॥ २५८ ॥
भूयोऽपि मिलितांगांस्तानुदध्रे स यथा यथा । पुनरेव पतंति स्म पूर्ववत्ते तथा तथा ॥ २५९ ॥
ततः सीतेन्द्रमूचुस्ते भवत्यधिकमेव नः । दुःखमुद्ध्रियमाणानां तन्मुंचास्मान् दिवं व्रज ॥ २६० ॥
तान्मुक्त्वेयाय सीतेन्द्रो रामं नत्वा ततोऽगमत् । शाश्वतार्हत्तीर्थयात्राकृते नंदीश्वरादिषु ॥ २६१ ॥
गच्छन्नयो देवकुरुप्रदेशे निरीक्ष्य भामंडलराजजीवम् ।
प्राक्स्नेहयोगात् प्रतिबोध्य सम्यग् निजं स सीतेन्द्र इयाय कल्पम् ॥ २६१ ॥
उत्पन्ने सति केवले स शरदां पंचाधिकां विंशतिं, मेदिन्यां भविकान् प्रबोध्य भगवाञ्श्रीरामभट्टारकः ।
आयुश्च व्यतिलंघ्य पंचदश चाब्दानां सहस्रान् कृती ।शैलेशीं प्रतिपद्य शाश्वतसुखानंदं प्रपेदे पदम् २६२

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि रामनिर्वाणगमनो नाम दशमः सर्गः समाप्तः ॥

१ दृष्ट उदर्कः परिणामो यस्य तत् ।

श्रीरामलक्ष्मणरावणचरित्रसंवलितं जैनरामायणं
समाप्तिमगात् ।

॥ अथ एकादशः सर्गः ॥

## ॥ अथ एकादशः सर्गः ॥

### श्रीनमिनाथचरित्रम् ।

नमो नेमिजिनेन्द्राय सुरेन्द्रमहितांघ्रये । कर्मद्रुमगजेन्द्राय धरित्रीकल्पशाखिने ॥ १ ॥
तस्यैव कीर्तयिष्यामश्चरित्रमतिपावनम् । विश्वस्याप्युपकाराय परलोकेहलोकयोः ॥ २ ॥
जंबूद्वीपेऽत्रैव प्रत्यग्विदेहे भरताभिधे । विजये संपदां कोशः कौशांबी नामतोऽस्ति पूः ॥ ३ ॥
आखंडल इवाखंडशासनस्तत्र चाभवत् । सिद्धार्थीकृतसर्वार्थी सिद्धार्थो नाम पार्थिवः ॥ ४ ॥
गांभीर्यधैर्यमौदार्यं वीर्यं बुद्धिरथापरे । अन्योन्यस्पर्द्धयेवासन् सर्वे तस्याद्भुता गुणाः ॥ ५ ॥
संपद्विस्तारमापन्ना तस्यात्युन्नतिशालिनः । अभूद्विश्वोपकाराय छाया मार्गतरोरिव ॥ ६ ॥
धर्मो मनसि तस्यैको नित्यमत्यन्तनिर्मले । निवासं कारयामास राजहंस इवांबुजे ॥ ७ ॥
भवाद्विरक्तः सोऽन्येद्युरुत्सृज्य तृणवच्छ्रियम् । सुदर्शनमुनेः पादमूले दीक्षामुपाददे ॥ ८ ॥
आर्जयत्स्थानकैः कैश्चित्तीर्थकृन्नाम कर्म सः । सम्यग्व्रतं पालयित्वा मृत्वागादपराजिते ॥ ९ ॥
इतश्च जंबूद्वीपेऽस्मिन् क्षेत्रे चात्रैव भारते । नगरी मिथिलेत्यस्ति धर्मोशिथिलनागरा ॥ १० ॥
प्राकारवलयो रत्नस्वर्णहर्म्याट्टगर्भितः । तस्यामाभाति सर्वस्वसमुद्गक इवावनेः ॥ ११ ॥

---

१ सुरेन्द्रेण पूजितावंघ्री चरणौ यस्य तस्मै । २ असिद्धार्थान्सिद्धार्थीकृताः । सर्वेऽर्थिनो याचका येन सः । ३ स्वार्थन्यंतस्य रूपम् । ४ धर्मेऽशिथिला अनलसा नागराः पौरा यस्यां सा ।

परितो रत्नखचितास्तस्यामुद्यानदीर्घिकाः । तटद्रुमपरागेण यांति पंकिलतां यदि ॥ १२ ॥
तस्यां सर्वारिविजयी विजयो नाम पार्थिवः । बभूव भूवासवतां दधानः परया श्रिया ॥ १३ ॥
भ्रूभंगमप्यकृत्वैवासन्नाह्यापि वरूथिनीम् । स लीलया पराजिग्ये परान् यून इव स्मरः ॥ १४ ॥
स सागर इवागाधोऽभिरामश्चंद्रमा इव । समीरण इवौजस्वी तेजस्वी भानुमानिव ॥ १५ ॥
वप्रेति नामतस्तस्य सर्वान्तःपुरमंडनम् । मंडनीभूतशीलाभूद्भूरिवांगवती प्रिया ॥ १६ ॥
गंगेव स्वच्छगंभीरा जगतोऽपि हि पावनी । ज्योत्स्नेव नयनानन्ददायिनी सा व्यराजत ॥ १७ ॥
ये ये सूनृतशीलाद्या निरीक्ष्यंते गुणाः किल । अवदातैरभूत्तैस्तैः स्त्रीणां सैका निदर्शनम् ॥ १८ ॥
इतश्च सिद्धार्थजीवो विमाने सोऽपराजिते । स्वमायुः पूरयामासत्रयस्त्रिंशार्णवोपमम् ॥ १९ ॥
च्युत्वाश्वेयुक्पूर्णिमायामश्वकिन्यामवातरत् । वप्रादेव्याः स उदरे कृतोद्योतो जगत्त्रये ॥ २० ॥
तदा च यामिनीशेषे वप्रादेवी चतुर्दश । उदैक्षत महास्वप्नांस्तीर्थकृज्जन्मसूचकान् ॥ २१ ॥
पितुर्मनोरथ इव गर्भः प्रववृधे क्रमात् । अतिलावण्यजननो जनन्याः सुखकृच्च सः ॥ २२ ॥
पूर्णे काले नभःकृष्णाष्टम्यां मे चाश्वदेवते । नीलोत्पलांकं स्वर्णाभं देवी सुतमसूत सा ॥ २३ ॥
अथैत्यासनकंपेन चक्रुर्देवीकुमारयोः । तदैव सूतिकर्माणि विधिवद्दिक्कुमारिकाः ॥ २४ ॥
शक्रो निन्ये मेरुमूर्धन्यच्युताद्याश्च वासवाः । चतुःषष्टिरपि तीर्थांभोभिरस्नपयन् प्रभुम् ॥ २५ ॥

१ भगवती मूर्तिमती भूः पृथ्वीव । २ आश्विनस्य पूर्णिमायाम् । ३ अश्विनीनक्षत्रे । ४ श्रावणकृष्णाष्टम्याम् । ५ अश्वो देवता यस्य तस्मिन्नश्विनीनक्षत्र इत्यर्थः ।

स्नपनांते जगन्नाथमभ्यर्च्य कुसुमादिभिः । रचितारात्रिकः शक्र इति स्तोतुं प्रचक्रमे ॥ २६ ॥
व्याहर्ता[1] मोक्षमार्गस्य संहर्ता सर्वकर्मणाम् । प्रहर्ता[2] च कषायाणां जय त्वं परमेश्वर ॥ २७ ॥
कुमतस्यापनेतारं नेतारं[3] जगतामपि । सद्बोधस्य प्रणेतारं[4] त्वां नमामि जगद्गुरो ॥ २८ ॥
विश्वैश्वर्यस्याधिकर्त्रा न्यक्कर्त्रा विश्वपाप्मनाम् । अविकर्त्रोपकर्त्रा[5] च सनाथं भवता जगत् ॥ २९ ॥
धर्मबीजसमुद्धर्त्रे धर्त्रेऽतिशयसंपदाम् । श्रुतस्कन्धविधात्रे च भगवन् भवते नमः ॥ ३० ॥
प्रत्यादेष्टुः कुमार्गाणामादेष्टुर्मुक्तिवर्त्मनः । धर्मः प्रभविता त्वत्त उपदेष्टुरतः परम् ॥ ३१ ॥
भव्यतीर्थप्रतिष्ठातुरनुष्ठातुस्तपःश्रियाम् । प्रभो जगदधिष्ठातुर्भवतः किंकरा वयम् ॥ ३२ ॥
आदातर्यपवर्गस्य[6] विश्वस्याभयदातरि । त्वयि त्रैलोक्यशरणे प्रपन्नशरणोऽस्म्यहम्[7] ॥ ३३ ॥
अस्मिन् भवे यथाभूस्त्वं प्रभुर्मम[8] जगत्पते । भवान्तरेष्वपि तथा भूया नान्यो मनोरथः ॥ ३४ ॥
इति स्तुत्वा जगन्नाथं पुनरादाय वासवः । मुमोच वप्रास्वामिन्याः पार्श्वे नीत्वा यथास्थिति ॥ ३५ ॥
राजापि विजयः प्रातः सूनोर्जन्ममहोत्सवम् । चकार कारामोक्षादिपूर्वकं परया मुदा ॥ ३६ ॥
प्रभौ गर्भस्थिते रुद्धा पुर्यासीन्मिथिलारिभिः । अधिप्रासादमारोहद्वप्रादेवी च तत्क्षणम् ॥ ३७ ॥
वप्रां प्रेक्ष्य च तद्गर्भानुभावाद्विजयं नृपम् । यन्नेमुर्द्विष इत्यस्य नमिरित्यभिधा ददे ॥ ३८ ॥
पाल्यमानोऽथ धात्रीभिः शक्रादिष्टाभिरन्वहम् । नमिनाथः प्रववृधे निशानाथ इवापरः ॥ ३९ ॥

---

१ कथयिता-वक्ता । २ दूरं कर्तारम् नाशकमितियावत् । ३ नायकम् । ४ कर्तारम् । ५ अविकारिणा । ६ आ समंताद्दातरि । ७ प्रपन्नं शरणं येन सः । ८ स्वामी जातोऽसि ।

विमुक्तशैशवः स्वामी धनूंषि दश पंच च । उच्छ्रितांगः पर्यणैषीत् कन्यां पितृनिदेशतः ॥ ४० ॥
सार्धवर्षसहस्रे द्वे व्यतिक्रम्य स जन्मतः । दत्तं पित्राददे राज्यं कर्मभोगफलं विदन् ॥ ४१ ॥
पंचस्वब्दसहस्रेषु राज्याद्यातेष्वथ प्रभुम् । तीर्थं प्रवर्तयेत्यूचुरेत्य लोकांतिकामराः ॥ ४२ ॥
निवेश्य सुप्रभं नाम पुत्रं राज्ये नमिप्रभुः । प्रददौ वार्षिकं दानं द्रविणैर्जृंभकाहृतैः ॥ ४३ ॥
सुप्रभाद्यैर्नृपैः शक्रादिभिर्देवैर्वृतः प्रभुः । देवकुर्वा शिविकया सहस्राम्रवणं ययौ ॥ ४४ ॥
कंदंबचुंबनासक्तमधुव्रतकदंबकम् । मल्लिकाकुसुमोच्चायव्याकुलोद्यानपालकम् ॥ ४५ ॥
विगलत्पाटलापुष्पपाटलीभूतभूतलम् । कामुकस्रस्तरीभूतशिरीषकुसुमोत्करम् ॥ ४६ ॥
वहमानारघट्टोत्थैः प्रोच्छलच्छीकरोत्करैः । ग्रीष्मेऽपि दर्शिताब्दर्तु तद्वनं प्राविशत्प्रभुः ॥ ४७ ॥
॥ त्रिभिर्विशेषकम् ॥

आषाढकृष्णनवम्यामश्विन्यां चरमेऽहनि । समं राज्ञां सहस्रेण षष्ठेन प्राव्रजत् प्रभुः ॥ ४८ ॥
तदोत्पन्नमनोज्ञानो द्वितीयेऽहनि पारणम् । स द्वैरेय्या वीरपुरे चक्रे दत्तनृपौकसि ॥ ४९ ॥
चक्रे च विबुधैस्तत्र वसुधारादि दत्तराट् । पीठं च व्यहृतान्यत्र नवमासांस्ततः प्रभुः ॥ ५० ॥
ततः सहस्राम्रवणं दीक्षास्थानं तदा ययौ । षष्ठेन बकुलस्याधस्तस्थौ च प्रतिमाधरः ॥ ५१ ॥

---

१ कदंबपुष्पाणा चुंबन आसक्तो मधुव्रतानां भ्रमराणा कदंबकः समूहो यस्मिंस्तत् । २ मल्लिकापुष्पाणामवचये व्याकुला उद्यानपाला यस्मिंस्तत् । ३ स्रस्तरमासनं शय्या वा । ४ अरघट्टो जलयंत्रम् । ५ दर्शितोऽब्दानां मेघानामृतुर्येन तत् ।

मार्गस्य शुक्लैकादश्यामश्विन्यां भे नमिप्रभोः । घातिकर्मक्षयादाविरभूत् केवलमुज्ज्वलम् ॥ ५२ ॥
सद्योऽपि देवाः समवसरणं विदधुस्ततः । अशीत्यग्रशतधनुस्तुंगाशोकद्रुभूपितम् ॥ ५३ ॥
तत्र प्रदक्षिणीकृत्याशोकं तीर्थाय चानमत् ॥ न्यपदत्प्राङ्मुखः पूर्वरत्नसिंहासने प्रभुः ॥ ५४ ॥
रत्नसिंहासनस्थानि प्रतिबिंबानि च प्रभोः । विचक्रुर्व्यंतरसुरा दिक्ष्वन्यास्वपि तत्क्षणम् ॥ ५५ ॥
अवतस्थे यथास्थानं श्रीमान् संघश्चतुर्विधः । भगवंतं नमस्कृत्य सौधर्मेन्द्रोऽस्तवीदिति ॥ ५६ ॥
केवलज्ञानसंज्ञेन चक्षुपा वीक्षसेऽखिलम् । जगदेतत्तदेवं ते त्रिनेत्राय नमः प्रभो ॥ ५७ ॥
पंचत्रिंशदतिशयवचसे[1] परमेष्ठिने । चतुस्त्रिंशदतिशयान्विताय भवते नमः ॥ ५८ ॥
मालवकैशिकीमुख्यग्रामरागमनोरमाम् । सर्वभाषानुगां नाथ तव वाचमुपास्महे ॥ ५९ ॥
त्वद्दर्शनात् प्रणश्यंति कर्मपाशाः शरीरिणाम् । तार्क्ष्यावलोकनान्नागपाशा इव दृढा अपि ॥ ६० ॥
त्वद्दर्शनादेहभाजोऽधिरोहंति शनैः शनैः । निश्रेणिमिव मोक्षस्य गुणस्थानकमालिकाम् ॥ ६१ ॥
स्मृतः श्रुतः स्तुतो ध्यातो दृष्टः स्पृष्टो नमस्कृतः । येन तेन प्रकारेण स्वामिन् भवसि शर्मणे ॥ ६२ ॥
स्वामिन् पुण्यानुबंधीनि पूर्वपुण्यानि नः खलु । यस्त्वं दृग्गोचरं नीतोऽसाधारणगतिप्रदः ॥ ६३ ॥
यथा तथा ममास्त्वन्यत् स्वर्गराज्यादि सर्वतः । मा जातु हृदयाद्यान्तु नाथ त्वद्देशनागिरः ॥ ६४ ॥
इति स्वामिगुणस्तोत्रं विधीय विरते हरौ । जगत्त्रयगुरुर्धर्मदेशनामकरोदिमाम् ॥ ६५ ॥
असारः खलु संसारः चलदूर्मिचलं धनम् । विद्युद्विलाससदृशं शरीरमपि नश्वरम् ॥ ६६ ॥

१ पंचत्रिंशदतिशया यस्मिन्नेतादृशं वचो यस्य तस्मै ।

अनास्थां सर्वथा तेषुं तद्विधाय विचक्षणः । यतेत यतिधर्माय मुमुक्षुर्मोक्षवर्त्मने ॥ ६७ ॥
अशक्तस्तद्विधाने चेत्तदाकांक्षी तथापि हि । सम्यक्श्रावकधर्मायोत्तिष्ठेत द्वादशात्मने ॥ ६८ ॥
नयेन्नित्यमहोरात्रं श्रावकस्त्वप्रमद्वरः । धर्म्याभिरिति चेष्टाभिर्मनोवाक्कायजन्मभिः ॥ ६९ ॥
ब्राह्मे मुहूर्त उत्तिष्ठेत् परमेष्ठिस्तुतिं पठन् । किंधर्मा किंकुलश्चास्मि किंव्रतोऽस्मीति च स्मरन् ॥ ७० ॥
शुचिः पुष्पामिषस्तोत्रैर्देवमभ्यर्च्य वेश्मनि । प्रत्याख्यानं यथाशक्ति कृत्वा देवगृहं व्रजेत् ॥ ७१ ॥
प्रविश्य विधिना तत्र त्रिः प्रदक्षिणयेज्जिनम् । पुष्पादिभिस्तमभ्यर्च्य स्तवनैरुत्तमैः स्तुयात् ॥ ७२ ॥
ततो गुरूणामभ्यर्णे प्रतिपत्तिपुरःसरम् । विदधीत विशुद्धात्मा प्रत्याख्यानप्रकाशनम् ॥ ७३ ॥
अभ्युत्थानं तदालोकेऽभियानं च तदागमे । शिरस्यंजलिसंश्लेषः स्वयमासनढौकनम् ॥ ७४ ॥
आसनाभिग्रहो भक्त्या वंदना पर्युपासनम् । तद्याने‌ऽनुगमश्चेति प्रतिपत्तिरियं गुरोः ॥ ७५ ॥
ततः प्रतिनिवृत्तः सन् स्थानं गत्वा यथोचितम् ॥ सुधीर्धर्माविरोधेन विदधीतार्थचिंतनम् ॥ ७६ ॥
ततो मध्याह्निकीं पूजां कुर्यात् कृत्वाथ भोजनम् । तद्विद्भिः सह शास्त्रार्थरहस्यानि विचारयेत् ॥ ७७ ॥
ततश्च संध्यासमये कृत्वा देवार्चनं पुनः । कृतावश्यककर्मा च कुर्यात् स्वाध्यायमुत्तमम् ॥ ७८ ॥
न्याय्ये काले ततो देवगुरुस्मृतिपवित्रितः । निद्रामल्पामुपासीत प्रायेणाब्रह्मवर्जकः ॥ ७९ ॥
निद्राछेदे योषिदंगसतत्त्वं परिचिंतयेत् । महात्मनां मुनीनां हि तन्निवृत्तिं परामृशन् ॥ ८० ॥

---

१ संसारादिषु । २ मोक्षाकांक्षी । ३ को धर्मो यस्य स तथा । ४ आमिषं नैवेद्यम् । ५ नार्यंगस्य सतत्त्व याथार्थ्यं वक्ष्यमाणमशुचित्वादि । ६ विचारयन् ।

यकृच्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिताः । स्नायुस्यूता बही रम्याः स्त्रियश्चर्म[1]प्रसेविकाः ॥ ८१ ॥
बहिरन्तर्विपर्यासः स्त्रीशरीरस्य चेद्भवेत् । तस्यैव कामुकः कुर्या[2]द्गृध्रगोमायुगोपनम् ॥ ८२ ॥
स्त्रीशस्त्रेणापि चेत्कामो जगदेतज्जिगीषति । तुच्छपिच्छमयं शस्त्रं किं नादत्ते स मूढधीः ॥ ८३ ॥
सं[3]कल्पयोनिनानेन हहा विश्वं विडंबितम् । तद्दुः[4]खनामि संकल्पं मूलमस्येति चिंतयेत् ॥ ८४ ॥

॥ चतुर्भिः कलापकम्॥

यो यः स्याद्बाधको दोषस्तस्य तस्य प्रतिक्रियाम् । चिंतयेद्दोपमुक्तेषु प्रमोदं यतिषु व्रजन् ॥ ८५ ॥
दुःस्थां भवस्थितिं स्थै[5]म्ना सर्वजीवेषु चिंतयन् । निस[6]र्गसुखसर्गं तेष्वपवर्गं विमार्गयेत् ॥ ८६ ॥
जिनो देवः कृपा धर्मो गुरवो यत्र साधवः । श्रावकत्वाय कस्तस्मै न श्लाघेताविमूढधीः ॥ ८७ ॥
जिनधर्मविनिर्मुक्तो मा भूवं चक्रवर्त्त्यपि । स्यां चे[7]टोऽपि दरिद्रोऽपि जिनधर्माधिवासितः ॥ ८८ ॥
त्यक्तसंगो जीर्णवासा मलक्लिन्नकलेवरः । भजन्माधुकरीं वृत्तिं मुनिचर्यां कदाश्रये ॥ ८९ ॥
त्यजन् दुःशीलसंसर्गं गुरुपादरजः स्पृशन् । कदाहं योगमभ्यस्यन् प्रभवेयं भवच्छिदे ॥ ९० ॥
महानिशायां [8]प्रकृतकायोत्सर्गं पुराद्बहिः । स्तंभवत् स्कन्धकषणं वृषाः कुर्युः कदा मयि ॥ ९१ ॥
वने पद्मासनासीनं क्रोडस्थितमृगार्भकम् । कदा घ्रास्यंति वक्त्रे मां जरन्तो मृगयूथपाः ॥ ९२ ॥
शत्रौ मित्रे तृणे स्त्रैणे स्वर्णेऽश्मनि मणौ मृदि । मोक्षे भवे भविष्यामि निर्विशेषमतिः कदा ॥ ९३ ॥

---

१ चर्मगोणी । २ गृध्रशृगालाभ्यां रक्षणम् । ३ कामेन । ४ तत्तस्मात् अस्य कामस्य मूलं संकल्पं अहं दुःखनामि खननं करोमि। ५ स्थैर्येण । ६ निसर्गसुखस्य सर्ग उत्पत्तिर्यस्मिन्नेतादृशमपवर्गं मोक्षम् । ७ दासः । ८ प्रकर्षेण कृतः कायोत्सर्गो येन तस्मिन्मयि ।

अधिरोढुं गुणश्रेणीं निःश्रेणीं मुक्तिवेश्मनः । पैरानंदलताकंदान् कुर्यादिति मनोरथान् ॥ ९४ ॥

॥ सप्तभिः कुलकम् ॥

इत्याहोरात्रिकीं चैर्यामप्रमत्तः समाचरन् । यथावदुक्तवृत्तस्थो गृहस्थोऽपि विशुध्यति ॥ ९५ ॥
श्रुत्वेमां देशनां भर्तुर्बहवः प्राव्रजञ्जनाः । कुंभादयो गणधरास्तत्र सप्तदशाभवन् ॥ ९६ ॥
देशनान्ते जगद्भर्तुः कुंभो व्यधित देशनाम् । तद्देशनान्ते नत्वेशं शक्राद्याः स्वं पदं ययुः ॥ ९७ ॥
तत्तीर्थजन्मा भृकुटिर्यक्षस्त्र्यक्षश्चतुर्मुखः । स्वर्णवर्णो वृषरथश्चतुर्भिर्दक्षिणैर्भुजैः ॥ ९८ ॥
धृतमातुलिंगशक्तिमुद्गराभयदैर्युतः । वामैः पुनर्नकुलकपर्शुवज्राक्षसूत्रिभिः ॥ ९९ ॥

॥ युग्मम् ॥

तथैव देवी गान्धारी श्वेतांगी हंसवाहना । दोर्भ्यां वरदखड्गिभ्यां दक्षिणाभ्यां विराजिता ॥ १०० ॥
वामाभ्यां बीजैपूरिभ्यां बाहुभ्यामुपशोभिता । अभूतामित्युभे भर्तुर्नमेः शासनदेवते ॥ १०१ ॥
ताभ्यामभुक्तसान्निध्यो विजहार वसुंधराम् । सार्धे वर्षसहस्रे द्वे नवमासोनिते विभुः ॥ १०२ ॥
प्रभोरभूवन् साधूनां सहस्राण्यथ विंशतिः । व्रतिनीनां पुनरेकचत्वारिंशत्सहस्र्यपि ॥ १०३ ॥
चतुर्दशपूर्वभृतां सार्धं शतचतुष्टयम् । अवधिज्ञानभाजां तु सहस्रं षट् शताधिकम् ॥ १०४ ॥
षष्ट्यग्रा द्वादशशती मनःपर्ययशालिनाम् । शतानि षोडश पुनः केवलज्ञानधारिणाम् ॥ १०५ ॥
जातवैक्रियलब्धीनां सहस्राः पंच संख्यया । तथा सहस्रमेकं तु वादलब्ध्युपशोभिनाम् ॥ १०६ ॥

१ परः श्रेष्ठो य आनन्दः स एव लता तस्याः कदाः मूलभूतास्तान् । २ आचरणाम् । ३ बीजपूरमस्ति अनयोरिति ।

श्रावकाणां लक्षमेकं सहस्राणि च सप्ततिः । श्राविकाणां त्रिलक्ष्यष्टचत्वारिंशत्सहस्रयुक् ॥ १०७ ॥
मोक्षकालमथ ज्ञात्वा संमेताद्रिमगात्प्रभुः । समं मुनिसहस्रेणानशनं प्रत्यपादि च ॥ १०८ ॥
मासांते वैशाखकृष्णदशम्यामश्विनीयुजि । समं तैर्मुनिभिः स्वामी प्रपेदे पदमव्ययम् ॥ १०९ ॥
कौमारेऽब्दानां सहस्रौ सार्धौ राज्ये तु पंच [1]ते । व्रते सार्धौ सहस्रौ चेत्ययुतायुर्नमिप्रभुः ॥ ११० ॥
मुनिसुव्रतनिर्वाणान्निर्वाणं श्रीनमिप्रभोः । वर्षाणां षट्सु लक्षेषु व्यतिक्रांतेष्वजायत ॥ १११ ॥

निर्वाणकल्याणमुपेत्य तत्र गीर्वाणनाथास्त्रिदशैः समेताः ।
शरीरसंस्कारपुरःसरं श्रीनमेरकार्षुः सपरिच्छदस्य ॥ ११२ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि
नमिनाथचरितवर्णनो नामैकादशः सर्गः ।

---

१ ते सहस्राः ।

## ॥ अथ द्वादशः सर्गः ॥

### श्रीहरिषेणचक्रिचरितम् ॥

इतश्च विरहत्येव नमिनाम्नि जिनेश्वरे । हरिषेणोऽभवच्चक्री चरितं तस्य कीर्त्यते ॥ १ ॥
इहैव भरतेऽनन्ततीर्थे नरपुरे पुरे । नराभिरामो नृपतिरभिरामो नरेष्वभूत् ॥ २ ॥
क्रमेण च भवोद्विग्नः परिव्रज्यां प्रपद्य सः । सनत्कुमारकल्पेऽभूदमरः परमर्द्धिकः ॥ ३ ॥
इतश्च पंचालदेशाकल्पः स्वःकल्पमृद्धिभिः । परैरकंप्यं कांपील्यमित्यस्ति प्रवरं पुरम् ॥ ४ ॥
तस्मिन्महाहरिर्नाम राजा हरिरिवौजसा । इक्ष्वाकुवंशतिलको बभूव भुवि विश्रुतः ॥ ५ ॥
तस्याभून्महिषी नाम्ना मेरा स्मेरांबुजानना । शीलालंकरणा रूपेणालंकृतमहीतला ॥ ६ ॥
नराभिरामजीवोऽपि तस्याः कुक्षाववातरत् । चतुर्दशमहास्वप्नाख्यातश्चक्रधरर्द्धिकः ॥ ७ ॥
सा कालेऽसूत हेमाभं हरिषेणाभिधं सुतम् । पंचदशधनूच्छ्रायो युवराज्येऽभ्यषेचि सः ॥ ८ ॥
पैतृकं शासतस्तस्य राज्यं प्राज्यभुजौजसः । अन्येद्युरस्त्रशालायां चक्ररत्नमजायत ॥ ९ ॥
पुरोधोवर्धकिगृहिसेनानीप्रभृतीन्यपि । तस्य त्रयोदशान्यानि क्रमाद्रत्नानि जज्ञिरे ॥ १० ॥
चक्रमार्गानुगः प्राच्यां गत्वा तीर्थे स मागधे । मागधतीर्थकुमारं दिग्जयादावसाधयत् ॥ ११ ॥
दक्षिणस्यामथोपेत्य दक्षिणांभोधिवर्तिनम् । वरदामपतिं देवं वशीचक्रे महाभुजः ॥ १२ ॥

---

१ पंचालदेशस्याकल्पो भूषणम् । २ स्वर्गतुल्यम् । ३ स्वर्णकांतिम् ।

उपेत्य दिशि वारुण्यां प्रभासाधिपतिं सुरम् । सोऽसाधयदखंडौजा विडौजा इव भूस्थितः ॥ १३ ॥
महानदीमेत्य सिंधुं दिक्सिंधुरपराक्रमः । क्रमाद्वशंवदीचक्रे चक्रभृद्दशमोऽथ सः ॥ १४ ॥
ततोऽभिसृत्य वैताढ्यं वैताढ्याद्रिकुमारकम् । विधिना साधयामास स दिक्साधनपंक्तितः ॥ १५ ॥
कृतमालामरं चाथ कृती स्वयमसाधयत् । पश्चाच्च सेनापतिना पश्चिमं सिंधुनिष्कुटम् ॥ १६ ॥
वामान्यकुंभविन्यस्तमणिरत्नेन कुंभिना । सेनान्युद्घाटितद्वारां तमिस्रां प्रविवेश सः ॥ १७ ॥
काकिणीरत्नलिखितमंडलोद्योतितांतराम् । पद्यंयोत्तीर्य चोन्मग्नानिमग्ने तामलंघयत् ॥ १८ ॥
स्वयमुद्घाटितोदीच्यद्वारा तस्या विनिर्ययौ । आपातसंज्ञान्म्लेच्छांस्तान् स्वच्छंदानजयच्च सः ॥ १९ ॥
अज्ञापयच्च सेनान्या सिंधोः पश्चिमनिष्कुटम् । गत्वा च क्षुद्रहिमवत्कुमारमजयत् स्वयम् ॥ २० ॥
काकिण्या ऋषभकूटे स्वनामालिख्य संचलन् । जगाम साधयन्गांगं सेनान्या पूर्वनिष्कुटम् ॥ २१ ॥
विद्याधरैर्दत्तदंड उभयश्रेणिवर्तिभिः । स्वयं चासाधयामास नाट्यमालमथापरम् ॥ २२ ॥
सेनान्योद्घाटितां खंडप्रपातां प्राविशद्गुहाम् । चक्रानुगश्चक्रवर्ती निर्जगाम च पूर्ववत् ॥ २३ ॥
सेनान्या साधयामास गांगं प्राचीननिष्कुटम् । स्वयमावासयामास गंगायां वसुधाधिपः ॥ २४ ॥
नवापि निधयो गंगामुखमागधवासिनः । सिध्यंति स्म स्वयं तस्योत्कृष्टपुण्यानुभावतः ॥ २५ ॥
संपूर्णचक्रवर्तिश्रीर्जितषट्खंडभारतः । अथाजगाम कांपील्यपुरं स श्रीपुरंदरः ॥ २६ ॥
तस्य चक्रित्वाभिषेकश्चक्रे देवैर्नरैरपि । महोत्सवः पुरे चासीद्यावद्द्वादश वत्सरान् ॥ २७ ॥

१ सिंधुरो गजः । २ वामान्यं दक्षिणम् । ३ पद्यया सेतुना ।

भूपालैः पाल्यमानाज्ञो भरते सकलेऽपि हि । धर्माविबाधया भोगान् बुभुजे स महाभुजः ॥ २८ ॥
भवाद्विरक्तः सोऽन्येद्यू राज्यमुत्सृज्य लीलया । उपादत्त परिव्रज्यां शिवव्रज्योत्सवोत्सुकः[1] ॥ २९ ॥
हरिषेणस्य कौमारे सपादाब्दशतत्रयी । मंडलित्वेऽपि सैवाथ सार्धमब्दशतं जये ॥ ३० ॥
चक्रभृत्त्वे पुनरष्टौ सहस्राणि शताष्टकम् । पंचाशच्च व्रतकाले पुनः सार्धं शतत्रयम् ॥ ३१ ॥

वर्षायुतायुः परिपाल्य सम्यक् तीव्रं व्रतं घातितघातिकर्मा ।
उत्केवलज्ञान इयाय नित्यसुखं पदं तद्धरिषेणचक्री ॥ ३२ ॥

इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि हरिषेणचक्रवर्तिचरितवर्णनो नाम द्वादशः सर्गः समाप्तः ॥

---

१ शिवं मोक्षं प्रति व्रज्या गमनं तस्योत्सव उत्सुकः ।

# ॥ अथ त्रयोदशः सर्गः ॥

## ( जयचक्रिचरित्रम् )

नमेर्भगवतस्तीर्थे समुत्पन्नस्य चक्रिणः । जयस्य जयिनः पुण्यं चरित्रमिदमुच्यते ॥ १ ॥
अस्यैव जंबूद्वीपस्यैरवते श्रीपुरे पुरे । वसुंधरापतिरभूत् ख्यातो नाम्ना वसुंधरः ॥ २ ॥
स प्रेयस्याः पद्मवत्या मृत्युनोद्विग्नमानसः । राज्ये निवेशयामास तनयं विनयन्धरम् ॥ ३ ॥
मनोहरवने पार्श्वे वरधर्ममहामुनेः । तत्त्वं श्रुत्वा प्रतिबुद्धः परिव्रज्यामुपाददे ॥ ४ ॥
चिरकालं परिव्रज्यां स यथावदपालयत् । विपद्य सप्तमे कल्पे देवभूयमियाय च ॥ ५ ॥
इतश्चास्ति राजगृहं पुरं मगधमंडनम् । श्रियामेकं कुलगृहं स्वःपुर्या इव सोदरम् ॥ ६ ॥
इक्ष्वाकुवंशप्रभवः प्रभवो न्यायवर्त्मनः । विजयी विजयो नाम तत्राभूत्पृथिवीपतिः ॥ ७ ॥
वप्राभिधाना तस्याभून्महिषी शीलशालिनी । भूगता कापि देवीव रूपलावण्यसंपदा ॥ ८ ॥
काले गच्छति तस्याश्च कुक्षाववततार सः । वसुन्धरमहीपालजीवः शुक्रात् परिच्युतः ॥ ९ ॥
जज्ञे तस्यां जयो नाम धनुर्द्वादशकोन्नतिः । सूनुश्चतुर्दशस्वप्नसूचितः कांचनच्छविः ॥ १० ॥
पित्रा राज्येऽभिषिक्तश्च तस्यायुधगृहेऽन्यदा । चक्ररत्नं समुत्पेदे प्रथमं चक्रिलक्षणम् ॥ ११ ॥
तथा छत्रं मणिर्दंडो निस्त्रिंशश्चर्म काकिणी । जज्ञिरे तस्य सप्तैवं रत्नान्येकेन्द्रियाणि तु ॥ १२ ॥

---

१ जयनशीलस्य । २ मनोहरनाम्नि वने । ३ चक्रेण सह सप्त ।

पुरोधोगृहिहस्त्यश्वसेनानीवर्धकिस्त्रियः । पंचेन्द्रियाणि सप्तैवं तस्य रत्नानि जज्ञिरे ॥ १३ ॥
दिग्यात्रार्थं सोऽनुचक्रं पूर्वं पूर्वाब्धिमन्वगात् । मागधतीर्थकुमारं तत्र चक्रे वशंवदम् ॥ १४ ॥
ततो निवृत्य याम्याब्धौ वरदामपतिं सुरम् । सोऽसाधयन्न देवोऽपि जुन्यलं चक्रवर्तिने ॥ १५ ॥
गत्वा च पश्चिमांभोधौ प्रभासाधीश्वरं सुरम् । क्षिप्तेनैकेन बाणेन वशीचक्रे स लीलया ॥ १६ ॥
ततश्चासाधयत् सिंधुं सिंधुराज इवापरः । वैताढ्याद्रिकुमारं च सुरं सुरवरोपमः ॥ १७ ॥
सोऽथ स्वयं वशीचक्रे कृतमालाभिधं सुरम् । सेनान्या तु महानद्याः सिन्धोः पश्चिमनिष्कुटम् ॥ १८ ॥
यथाविधि तमिस्रां स प्रविश्य च नि[1]रीय च । आपातनाम्नः किरातान्निर्जिगाय महाभुजः ॥ १९ ॥
पश्चिमं निष्कुटं सिन्धोः सेनान्या स विजित्य च । वशीचकार हिमवत्कुमारं देवविक्रमः ॥ २० ॥
काकिण्या ऋषभकूटे स लिखित्वात्मनोऽभिधाम् । सेनान्या निष्कुटं गांगं प्राचीनं चलितोऽजयत् ॥२१॥
साधयित्वा स्वयं गंगां जित्वा विद्याधरेश्वरान् । खंडप्रपाताद्वारस्थं नाट्यमालमसाधयत् ॥ २२ ॥
खंडप्रपातागुहया वैताढ्यान्निर्जगाम सः । सेनान्यासाधयच्चाशु गांगं प्राचीननिष्कुटम् ॥ २३ ॥
आवासितस्य गंगायां तेऽथ गंगामुखस्थिताः । नवापि निधयस्तस्य नैसर्पाद्या वशेऽभवन् ॥ २४ ॥
सोऽथ संपूर्णचक्रिश्रीराजगाम निजं पुरम् । चक्रे चक्रित्वाभिषेकश्चास्य देवैर्नृपैरपि ॥ २५ ॥
षट्खंडां बुभुजे पृथ्वीमखंडितपराक्रमः । क्रमेण च परिव्रज्यां भवोद्विग्नः स आददे ॥ २६ ॥
एवं जयस्य कौमारे वत्सराणां शतत्रयम् । तदेव मंडलित्वेऽब्दशतं तु ककुभां जये ॥ २७ ॥

1 निर्गत्य ।

एकोनविंशतिशती वर्षाणां चक्रिसंपदि । व्रतकाले तु चत्वारि संवत्सरशतान्ययुः ॥ २८ ॥

समासहस्रत्रयमायुरात्मनः स पूरयित्वा परिपाल्य च व्रतम् ।
घातिक्षयाविष्कृतकेवलो ययौ कैवल्यमक्षीणसुखास्पदं जयः ॥ २९ ॥

॥ इत्याचार्यश्रीहेमचंद्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि जयचक्रवर्तिचरितवर्णनो नाम त्रयोदशः सर्गः ॥

रामलक्ष्मणदशानना नमिस्तीर्थकृच्च हरिषेणचक्रभृत् ।
चक्रभृच्च जय इत्यमुत्र षट् वर्णिताः श्रुतिसुखाय संतु वः ॥ १ ॥

॥ समाप्तं चेदं सप्तमं पर्व ॥

इतिश्री त्रिषष्टिशलाकापुरुषचरित्र.

सप्तम पर्व.

जैनरामायणादि